THE

# BHATTIKÂVYAM

OF

# BHATTI

WITH

THE COMMENTARY (JAYAMANGALÂ)

OF

JAYAMANGALA.

EDITED

BY

GOVINDA SHANKARA SHÂSTRÎ BÂPATA.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF THE "NIRNAYA-SÂGARA" PRESS, BOMBAY.

1887.

॥ श्रीः ॥

महाकविश्रीभट्टिविरचितं

# भट्टिकाव्यम् ।

जयमंगलकृतटीकया जयमंगलया समेतम् ।



बापटोपाह्वेन शङ्करभट्टसूनुना गोविन्दशास्त्रिणा

संशोधितम् ।



इदं च

मुंबय्याख्यराजधान्यां

निर्णयसागराख्यमुद्रणयन्त्रालयाधिपतिना स्वकीये मुद्रणयन्त्रे

मुद्रयित्वा प्रसिद्धिं नीतम् ।



शकाब्दाः १८०९. ख्रिस्ताब्दाः १८८७.

# प्रस्ताविका.



सार्धसहस्राब्देभ्यः पूर्वं सौराष्ट्रदेशे वलभीपुरं नाम प्रसिद्धं नगरमासीत्। तत्र श्रीधरसेन्नाम्नि नृपतौ राज्यधुरं वहति भट्टिर्नाम कश्चिन्महाकविः संजज्ञे। स च रामकथाश्रितं महाकाव्यं विरचयाचक्रे, तत् 'भट्टिकाव्यम्' इति लोके प्रसिद्धम्। केषुचित् पुराणपुस्तकेषु 'रावणवधमहाकाव्यम्' इत्यपि नामास्योपलभ्यते तच्च कविकृतमुत लोककृतमिति निर्णेतुं न शक्यते, प्रमाणाभावात्। भर्तृहरिनाम्ना महावैयाकरणेनैवैतत्काव्यं प्रणिन्ये, तस्यैवापरमभिधानं भट्टिरिति केचिद्ब्रुवते। परं नैतद्युज्यते, प्राचीनग्रन्थेष्वनयोः कविश्रेष्ठयोः पद्यानां पार्थक्येनोदाहृतत्वात्।

राज्ञो दशरथादारभ्य कृतरावणवधस्यायोध्यागतस्य श्रीरामचंद्रस्य राज्यशासनारंभपर्यंतमस्मिन्काव्ये कथा वर्णिता। गीर्वाणव्याकरणाध्यापनमेवैतस्य काव्यस्य मुख्योद्देशः। श्रीभट्टोजीदीक्षितकृतवैयाकरणसिद्धांतकौमुद्युदयात् प्राक् गीर्वाणभाषाव्याकरणगहने काशिकादिग्रन्थदीपैरेव जिज्ञासवो बह्वायासैः प्रवेशं लेभिरे। तदा गीर्वाणभाषासमुद्रं भट्टिकाव्यनौकया सुखेन समुत्तेरुरित्यसंदिग्धम्। ज्ञायत एवास्य काव्यस्य सर्वोत्कृष्टत्वं भट्टोजिदीक्षितसदृशैर्वैयाकरणधुरीणैः स्वकृतग्रन्थेषु प्रमाणार्थत्वेनोदाहृतत्वादस्य पद्यानाम्। इदं जगत्यनुपमं वस्तु। सत्यपि व्याकरणाध्यापनमुख्योद्देशे न क्वचिदपि रसभंगो लक्ष्यते। एतादृशी कवेर्गीर्वाणवाणीवशंवदता। न केनचिदपि रघुवंशादिमहाकाव्येनाह्लादजनकतायामिदमतिशय्यते सर्वत्र द्राक्षापाकस्यैवोपलब्धेः।

अस्य काव्यस्य न्यूनाधिकप्रमाणा द्वाविंशतिः सर्गाः। ते प्रकीर्णाधिकारप्रसन्नतिङंतकाण्डैश्चतुर्धा विभक्ताः। तत्र प्रथमे प्रकीर्णकाण्डे व्याकरणशास्त्रानुसारेण सामान्यविशेषकार्याण्युदाहरणद्वारा प्रदर्शितानि। द्वितीयेऽधिकारकाण्डे पाणिनीयाष्टकांतर्गताधिकारानुसारेण कार्याण्युदाहृतानि। तृतीये प्रसन्नकाण्डे साहित्यशास्त्रानुसारतः प्रासयमकादिशब्दालंकारा उपमाद्यर्थालंकारा माधुर्यादिगुणाश्च संदर्शिता। चतुर्थे तिङन्तकाण्डे सर्वेषु लकारेषु नियतान्यपोदितानि च धातुरूपाणि संकलितानि।

विदुषा राजेन्द्रलालमित्रेण कृतासु संस्कृतग्रन्थनामावलिष्वस्य काव्यस्य नवटीका उपलभ्यन्ते।

१ जयमंगला जयमंगलनामपंडितेन कृता।

---

१ वलभीराजवंशे त्रय. श्रीधरनामानो नृपा बभूवु.। तेषु कतमोऽत्र निर्दिष्ट इत्यनिश्चितम्।

२ हरिहरकृता।

३ कलापदीपिका पुंडरीकाक्षकृता।

४ कंदर्पचक्रवर्तिकृता।

५ विद्याविनोदकृता।

६ सुबोधिनी रामचंद्रवाचस्पतिकृता।

७ ,, कुमुदानन्दकृता।

८ भट्टिबोधिनी नारायणविद्याविनोदाचार्यकृता।

९ मुग्धबोधिनी भरतमल्लिककृता।

एतास्वाद्यैवातिप्राचीना सरलार्था सर्वपंडितमतेति सैवात्र मुद्रिता। अधुना प्राय. सर्वेषां पाणिनीयानुसारित्वात् मुग्धबोधानुसारिण्या अनुपयोग इति न सा गृहीता। अन्यासां टीकानां पुस्तकानि न संप्राप्तानि, तथापि ता बहुशो जयमंगलाया न भिद्यंत इति श्रूयते। एतत्पुस्तकशोधन इमानि पुस्तकानि गृहीतानि।

१ कलिकत्तानगरे मुद्रितं भट्टिकाव्यपुस्तकम्।

२ मत्सुहृदा गोडबोले इत्युपाह्वेन विदुषा बालकृष्णसूनुना नारायणेन प्रवरासंगमनाम्नो ग्रामात्समानीतम्। मूलं संपूर्णम्, टीका द्वादशसर्गान्ता। इदं प्राय. शुद्धम्।

३ मन्मित्रेण विदुषा परबोपाभिधेन पांडुरंगसुतेन काशीनाथेन गुर्जरदेशात्समासादितम्। इदमत्यशुद्धम्। टीकामात्रम्।

४ अन्यत्पुस्तकद्वयं गोडबोले इत्युपनामकेन नारायणेनैव प्रेषितम्। एकं मूलमात्रम्। अन्यत् संपूर्ण मूलं सर्गत्रयपर्यंतटीकासमेतम्।

सत्स्वप्येतेषु पुस्तकेषु सर्वेष्वेव पाठभेदाद्वा संदिग्धाक्षरत्वाद्वा क्वचित्संशयनिवृत्तिर्न जाता तत्र यथामति संशोधितम्। केनचित्संप्राप्तशुद्धपुस्तकेन विदुषा संदेहनिर्णय. कृतश्चेद्बह्वपकृतं स्यात्।

उपर्युक्ताभ्यां सुहृद्भ्यां निर्णयसागरमुद्रायंत्रालयस्वामिना चैतत्पुस्तकमुद्रणे बहु साहाय्यं कृतमतस्तेषामनल्पमुपकारभारं धारयामि। बहूनामर्वाचीनविद्यानामभ्यासे विभक्तचित्तानामाधुनिकानां गीर्वाणव्याकरणनिष्णातत्वप्राप्तौ भूयादिदं सुलभसाधनमित्याशासे

शालिवाहनशके १८०९<br>सर्वजिन्नाम्नि संवत्सरे<br>वैशाखशुक्लप्रतिपत्। रविवासरः

बापटोपाह्वः शङ्करसूनुः गोविन्दशास्त्री।

॥ श्रीः ॥

# भट्टिकाव्यम् ।

## ॥ जयमङ्गलया समेतम् ॥



## प्रथमः सर्गः ।

प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टिकाव्यसलिलनिधेः ।
जयमङ्गलेति नाम्ना नौकेव विरच्यते टीका ॥

लक्ष्यं लक्षणं चोभयमेकत्र विदुषः प्रदर्शयितुं श्रीस्वामिसूनुः कविर्भट्टिनामा रामकथाश्रयमहाकाव्यं चकार । तथा ह्यस्योपनिबन्धनं कविना द्विधा कृतम् । एकं लक्षणसूचकैः प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डैश्चतुर्भिः, द्वितीयं लक्ष्यसूचकै रामसंभवादिभिर्द्वाविंशत्या सर्गैः । तत्र लक्षणं द्विविधम् । शब्दलक्षणं काव्यलक्षणं च । तत्र प्रथमस्य प्रकीर्णाधिकारतिङन्तकाण्डानि । द्वितीयस्य प्रसन्नकाण्डम् । यत्रोच्चावचेन बहूनां लक्षणानां प्रकरणं तत्प्रकीर्णकाण्डम् । तदेवात्र प्रथममुक्तं तस्य व्यापित्वात् । उत्तरत्रापि द्रष्टव्यमिति प्रदर्शनार्थम् । अत्र यद्यप्यादौ कविना देवतानमस्कारो न कृतस्तथापीष्टदेवतासंकीर्तनमपि विघ्नोपशमनहेतुर्भवतीति मन्यमान आह—

**अभून्नृपो विबुधसखः परंतपः श्रुतान्वितो दशरथ इत्युदाहृतः ।**
**गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत्स्वयम् ॥ १ ॥**

**अभूदित्यादि** ॥ तस्य हीष्टदेवता सनातनो विष्णुः । स चादौ कीर्तितः । तत्प्रतिबन्धना चेयं कथेति प्रबन्धेनैवात्र संकीर्तनं रामायणवत् । तत्र विष्णोर्यस्मिन्काले जगत्कार्यवशादवतारः कृतस्तदेव प्रथमं दर्शयति । अभूदिति भूतसामान्ये लुङ् । भूत इत्यर्थः । अन्यथा राज्ञश्चिरातीतत्वात्कवेः परोक्षत्वाच्च लिट् स्यात् । "गातिस्था—" इति सिचो लुक् । "भूसुवोस्तिङि" इति गुणप्रतिषेधः । "नयतेर्डिच्च" इति नयतेरौणादिक ऋन् । नरो मनुष्यास्तान्नॄन्पातीति । "आतोऽनुपसर्गे कः" । "आतो लोपः" । नृपो राजा । अत्यन्तधर्मविजयित्वाद्देवराजस्य मित्रमासीदित्याह विबुधसख इति । विबुध्यन्त इति विबुधा देवास्तेषामपि प्रधानत्वात् । तत्रेगुपधलक्षणः कः । सामान्यशब्दोऽपि देवेषु वर्तमानोऽप्यर्थवशाच्छक्रे प्रयुक्तस्तस्य सखेति ।

"राजाहःसखिभ्यष्टच्" । विबुधसखः । अनेन धर्मविजयित्वं दर्शयति विबुधमखत्वस्य धर्मकार्यत्वात् । सुरलोकविजयिनश्च ये राजानस्तेषां धर्मविजयी प्रधानम् । परे शत्रवस्त्रिविधाः, उच्छेदनीयोपपीडनीयकर्षणीयाः । तत्र ये उपपीडनीयकर्षणीयास्तान्परांस्तापयतीति परंतप । "द्विषत्परयोस्तापे" इति खच् । "खचि ह्रस्वः" "अरुर्द्विषदजन्तस्य—" इति मुम् । नृप इत्यनेन स्वमण्डले वृत्तिराख्याता । परंतप इति परमण्डले । श्रूयन्त इति श्रुतानि वेदादीनि तैरन्वित संबद्धः । ग्रन्थतोऽर्थतश्च गृहीतत्वात् । दशरथ इत्यनेन नाम्नोदाहृतो लोके गीतः । गुण्यन्तेऽभ्यस्यन्त इति गुणाः । 'गुण आमन्त्रणे' इति चौरादिकोऽदन्तः । तस्मात् "अकर्तरि च—" इत्यादिना घञ् येषाम् "एरजण्यन्तानाम" इति दर्शनम् । येषां तत्रास्ति तेषामेरच् । स्वरं प्रति विवादो न रूपं प्रति । गुणैरभिरामादिभिर्वरं श्रेष्ठं यं नृपं पितरमुपागमदिति संबन्धः । व्रियत इति वरः । ग्रहादिना कर्मण्यप् । केन हेतुनोपगतवांस्तं पितरं सनातन इत्यत आह—भुवनहितच्छलेनेति । भवन्त्युत्पद्यन्त इति भुवनानि । भूर्भुवःस्वरिति त्रयो लोकाः । "रञः क्युन्" इत्यनुवर्तमाने "भूसूधूभ्रस्जिभ्यश्छन्दसि" इत्यौणादिकः क्युन्बहुलवचनाद्भाषायामपि भवति । तेभ्यो हिता भुवनहिता विष्णोर्दशावताराः । इह तु रामो द्रष्टव्यः । तच्छलेन व्याजेन भुवनहितच्छलेन । इदानीं रावणादिकण्टकोद्धरणात् । तथा चोक्तम्—"परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे" इति । सनेत्यव्ययं सदार्थे वर्तते । सना भवतीति । "सायंचिरम्—" इति ट्युट्युलौ तुट् च । सनातनो विष्णुरुपागमदुपजगाम । लृदित्त्वादङ् । सत्स्वन्येषु राजसु गुणैर्वरत्वात् पितरं जनकमङ्गीकृतवान्सोऽभूदिति योज्यम् । स्वयमित्यात्मना न कर्मणान्येन वा प्रेरित इत्यर्थः ॥

**सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनपारीत्सममंस्त बन्धून् ।**
**व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ २ ॥**

**सोऽध्यैष्टेत्यादि** ॥ क्षत्रियस्य धर्मोऽध्ययनं यजनं दानम् । शस्त्राजीवो भूतरक्षणं चेत्युभयं नृप इत्यनेनोक्तम् । भूतरक्षणे शस्त्रमङ्गम् । स नृपो वेदानध्यैष्टाधीतवानिति स्वाध्याय उक्तः । वेदयन्ति ज्ञापयन्ति धर्माधर्माविति वेदाः सामादयः । पचाद्यच् । इङोऽधिपूर्वस्य "विभाषा लुङ्लृङोः" इति गाङ् । विभाषयेति गाङभावपक्षे रूपम् । अजादित्वादाट् । "आटश्च" इति वृद्धिः । ङित्त्वादात्मनेपदम् । "आदेशप्रत्यययोः" इति षत्वं । ष्टुत्वं च । त्रिदशान्देवानयष्टाग्निष्टोमादिभिः पूजितवान् । यजनमुक्तम् । यजेः "स्वरितञितः—" इति तङ् । अनिक्समीपत्वाद्धलः "लिङ्सिचौ—" इति कित्त्वं न भवति । व्रश्चादिना षत्वम् । "झलो झलि" इति सिचो लो-

पः ॥ पितॄनपारीदाप्यायितवान् । पितरमुद्दिश्य यजनम् "पॄ पालनपूरणयोः" इत्यस्मात्पूरणार्थाल्लुङि रूपम् । "सिचि वृद्धिः" । "इट ईटि" इति सिचो लोपः । अथवा "पितॄनताप्सीत्" इति पाठः । 'तृप प्रीणने' इत्यस्माल्लुङि "स्पृशमृशकृषतृपदृपां सिज्वक्तव्यः" इति च्लेः सिचि "अनुदात्तस्य च–" इत्यादिना अमभावपक्षे रूपम् । पितॄंस्तर्पितवानित्यर्थः । सममंस्त बन्धून्मातृपित्रादिज्ञातीन्संमतवान् । सदा दानमानादिभिः पूजितवानित्यर्थः । मन्यतेरनुदात्तत्वात्तङ् । इट्प्रतिषेधश्च । येषां सिच इकार उच्चारणार्थस्तेषाम् "हनः सिच्" इति किल्करणज्ञापकान्नलोपाभावः । येषां तु इकार इत्तेषामिदित्त्वान्नकारलोपाभावः । आभ्यन्तरं शत्रुमजित्वा कथं परंतप इत्याह—व्यजेष्ट षड्वर्गमिति । कामक्रोधलोभमोहमदमात्सर्याणां षण्णां वर्गः षड्वर्गः । तमभिभूतवान् । विपूर्वस्य जयतेः "विपराभ्यां जेः" इति तङ् । अरंस्त नीतौ सामादिषु संध्यादिषु च रतः । नीतिमानित्यर्थः । समूलघातं न्यवधीत्समूलान्निःशेषानरीञ्शत्रून्निहतवान् । उच्छेदनीया ये शत्रवस्तेष्विदं विधानम् । समूलोपपदाद्धन्तेः "समूलाकृत–" इत्यादिना णमुल् । "हो हन्तेः" इति घत्वम् । वृद्धिः । "हनस्तः–" इति तत्वम् । "कषादिषु यथा–" इत्यादिना यथाविध्यनुप्रयोगः । अनुप्रयोगे "लुङि च" इति वधादेशः । तस्याकारान्तत्वादुपदेशेऽनेकाच्त्वादिड्निषेधो न भवति । अतो लोपे कृते तस्य स्थानिवद्भावात् "अतो हलादेः" इति विभाषावृद्धिर्न भवति ॥

**वसूनि तोयं घनवद्व्यकारीत्सहासनं गोत्रभिदाध्यवात्सीत् ।**
**न त्र्यम्बकादन्यमुपास्थितासौ यशांसि सर्वेषुभृतां निरास्थत् ॥३॥**

**वसूनीति** ॥ वसूनि द्रव्याणि बन्धुव्यतिरेकेण बालादिभ्यो व्यकारीद्दत्तवान् । विक्षिप्तवानिति वा । किरतेर्लुङि रूपम् । कः किमिवेत्यपेक्षायामाह—तोयं घनवदिति । तोयमुदकम् । घनो मेघः फलनिरपेक्षतया यथा विकिरति तद्वत् । एवं सम्यक्पालनादिन्द्रेण तुल्यत्वमाह—सहासनं गोत्रभिदाध्यवात्सीदिति । गोत्रभिदेन्द्रेण सहासनमध्यवात्सीदध्युषितवान् । अनेनात्यन्तधर्मविजयित्वस्य फलं दर्शयति । 'वस निवासे' इत्यस्य रूपम् । 'वसिः संप्रसारणी' इति वचनादिडभावः । "अस्ति सिचः–" इतीट् । "वदव्रज–" इत्यादिना वृद्धिः । "सस्यार्धधातुके" इति तत्वम् । आसनमिति "उपान्वध्याङ्वसः" इत्यधिकरणस्य कर्मसंज्ञा । त्रीण्यम्बकान्यक्षीणि यस्येति त्र्यम्बको महादेवस्तस्मादन्यं नोपास्थित । न पूजितवानित्यर्थः । उपपूर्वात्तिष्ठतेः "देवपूजासंगतिकरणमित्रकरणपथिषु–" इति देवपूजायां तङ् । "स्थाघ्वोरिच्च" इत्यादिनेत्वं कित्त्वं च । "ह्रस्वादङ्गात्" इति सिचो लोपः । इषून्बिभ्रतीति "अन्येभ्योऽपि दृश्यते" इति क्विप् । इषुभृतो धनुर्धराः सर्वेषां तेषां यशांसि निरास्थत् । निरस्तवानित्यर्थः । एतेनास्यासा-

धारणीकृतात्वं दर्शितम् । " उपसर्गादस्यत्यूह्योर्वा वचनम् " इति वचनाद्यदा तङ् नास्ति तदा तिप् । " अस्यति– " इत्यादिना च्लेरङ् । अस्यतेस्थुक् ॥

**पुण्यो महाब्रह्मसमूहजुष्टः संतर्पणो नाकसदां वरेण्यः ।**
**जज्वाल लोकस्थितये स राजा यथाध्वरे वह्निरभिप्रणीतः ॥ ४ ॥**

**पुण्य इति** ॥ पुनातीति पुण्यः । " पूञो यत् णुक् ह्रस्वश्च " इत्यौणादिको यत् । णुगागमश्च ह्रस्वश्च ॥ अत्यन्तपुण्यकरणाद्राजापि पुण्य इत्युच्यते । तन्मयत्वाद्राजा । अग्निरपि पुण्यः पावनात्पुण्यः । यागादिः पुण्यस्तेन पुरुष पूयते । महतां वेदविदां ब्रह्मणां ब्राह्मणानां समूहेन जुष्टः सेवितो राजाग्निश्च । ब्रह्मशब्दोऽत्र ब्राह्मणपर्याय. । नाके स्वर्गे सीदन्तीति " सत्सूद्विष– " इत्यादिना क्विप् । नाकसदो देवास्तेषां कर्मणि षष्ठी । संतर्पयति प्रीणयतीति संतर्पणः । संतर्पयते· "कृत्यल्युटो बहुलम्– " इति कर्तरि ल्युट् । राजा यागादिना तर्पयति । अग्निरप्यग्निमुखत्वाद्देवानाम् । वरेण्यः श्रेष्ठो राजाग्निश्च । " वृञ एण्य· " । जज्वाल प्रदीप्तवान् । लोकस्थितये मा भूल्लोकस्य स्थित्यतिक्रम इत्येवमर्थम् । अग्निरपि लोकस्य स्थितये ज्वलति । यथोक्तम्– " अग्नौ प्रास्ताहुति. सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " इति । अभिप्रणीत इत्यग्निविशेषणम् । आभिमुख्येन प्रणीत इति प्रादिसमासः । " उपसर्गादसमासे " इत्यादिना णत्वम् । मन्त्रेणाभिमुखीकृत इत्यर्थः । यथाध्वरे यागेऽभिप्रणीतो वह्निर्ज्वलति तथा राजापीत्यर्थ· ॥

यत्रस्थो राज्यं चकार तां नगरीं दर्शयन्नाह—

**स पुण्यकीर्तिः शतमन्युकल्पो महेन्द्रलोकप्रतिमां समृद्ध्या ।**
**अध्यास्त सर्वर्तुसुखामयोध्यामध्यासितां ब्रह्मभिरिद्धबोधैः ॥५॥**

**स पुण्येत्यादि** ॥ स्वामिगुणपूर्वका हि निवासस्य गुणा भवन्तीति प्रदर्शनार्थं पश्चात्तदभिधानम् । तथा चोक्तम्—"स तु यच्छीलस्तच्छीला अस्य प्रकृतयो भवन्ति " इति । स राजा पुण्यकीर्तिः पुण्याः पवित्राः कीर्तयो यस्य सः । शतमन्युकल्प इति प्रभावं दर्शयति । " ईषदसमाप्तौ– " इति कल्पप् । शतमन्युरिन्द्रो महेन्द्रलोकप्रतिमामयोध्यामिति योज्यम् । प्रतिमीयते तुल्यत इति प्रतिमा । " आतश्चोपसर्गे " इत्यङ् । महेन्द्रलोकेन प्रतिमा तुल्या । "तृतीया " इति योगविभागात्समासः । अमरावतीमिवेत्यर्थः । कया । समृद्ध्या । सम्यगतिशयेनर्द्धि· समृद्धिः । प्रादिसमासः । अध्यास्ताध्यासितवान् । भूतसामान्ये लङ् । आस्तेरनुदात्तेत्त्वात्तङ् । "अधिशीङ्– " इत्यादिनाधिकरणस्य कर्मसंज्ञा । सुखयतीति सुखा । पचाद्यच् । सुखहेतुत्वाद्वा सुखा ।

सर्वेषु ऋतुषु सुखेति। "सप्तमी" इति योगविभागात्समासः। अध्यासितामध्युषिताम्। ब्रह्मभिर्ब्राह्मणैरिद्धबोधैः। सर्वशास्त्रपरिज्ञानात्पटुबुद्धिभिरित्यर्थः। इन्धेर्निष्ठायामनुनासिकलोपः॥

**निर्माणदक्षस्य समीहितेषु सीमेव पद्मासनकौशलस्य ।**
**ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या स्थितावहस्येव पुरं मघोनः ॥ ६ ॥**

**निर्माणेति**॥ पद्मासनो ब्रह्मा। पद्ममासनं यस्येति कृत्वा। तस्य कौशलं नैपुण्यमिति षष्ठीसमासः। तस्य "पूरणगुण—" इत्यादिना न प्रतिषेध.। तत्र विशिष्टा एव गुणा रूपरसगन्धस्पर्शास्तद्विशेषाश्च शुक्लनीलादयः कटुकाम्लादय· सौरभ्यादयः शीतोष्णादयश्च गृहीता। तत्र रूपादिभिः समासो भवत्येव। "तत्स्थैश्च गुणैः षष्ठी समस्यते न तु तद्विशेषगुणैः" इति वचनात्। अन्यैस्तु समासप्रतिषेध·। एवं च कृत्वा मुनित्रयवचनमर्थवद्भवति। तद्यथा "अधिकरणैतावत्त्वे च" "तदशिष्यं संज्ञाप्रमाणत्वात्" इति पाणिने· "युगपद्देशपृथक्त्वदर्शनादिति रूपसामान्याद्वेति वचनप्रामाण्यादिति चेदलोपप्रतिषेध·" इति कात्यायनस्य "नकारग्रहणसामर्थ्याल्लोपो न भविष्यतीति किं पुनरत्नार्थसत्तत्त्वमिति" भाष्यकारस्येति। तस्य सीमेव मर्यादेवायोध्या ततो न सृष्ट्यन्तरं शोभनमस्तीत्यर्थः। कीदृशस्य। निर्माणदक्षस्य। निर्मितिर्निर्माणं सृष्टिस्तत्र दक्षस्य पटोः। क्व विषयेषु समीहितेषु। स्रष्टुमीप्सितेष्वित्यर्थ·। ऊर्ध्वमुपरिष्टात्स्फुरद्रत्नगभस्तिभिः स्फुरन्तो ये रत्नानां गभस्तयो रश्मयस्तैर्हासभूतैर्मघोन इन्द्रस्य पुरममरावतीमवहस्येव स्थिता या तामध्यास्त। "मघवन् श्वन् उक्षन्" इत्यौणादिकः "श्वयुवमघोनाम्—" इति संप्रसारणम्॥

**सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि ।**
**स्त्रीभिर्युतान्यप्सरसामिवौघैर्मेरोः शिरांसीव गृहाणि यस्याम्॥७॥**

**सद्रत्नेति**। सन्ति शोभनानि यानि रत्नादीनि तानि भजन्ते यानि गृहाणि तानि सद्रत्नमुक्ताफलवज्रभाञ्जि मुक्ताफलवज्रयो रत्नान्तर्भावेऽपि प्राधान्यख्यापनार्थं वचनम। गोबलीवर्दन्यायाद्वा। रत्नशब्देन मरकतपद्मरागवैदूर्यादयो गृह्यन्ते। सद्रत्नादि "युञ्जि" इति पाठान्तरम्। "युजेरसमासे" इति प्रतिषेधो न भवति। अनपुंसकविषयत्वात्। नपुंसके तु झलक्षणस्य नुमो विधानात्। विचित्रधातूनि विचित्रा नानाप्रकारा धातवो मनःशिलादयो येषु गृहेषु तेषां विरचितचित्रकर्मत्वात्सकाननानि सोद्यानानि। स्त्रीभिर्युतान्यप्सरसामिवौघैस्तत्तुल्याभिः स्त्रीभिरप्सरोभिरिवेत्यर्थ.। मेरोः शिरांसीव मेरोः शृङ्गाणीव एवंविधानि गृहाणि यस्यामयोध्यायां तामध्यास्त। गृह इति "गेहे क." तत्र गृहशब्दो वेश्मनि नपुंसकलिङ्गः। तत्स्थायिषु पुंलिङ्गो नित्यं बहुवचनान्तश्च॥

**अन्तर्निविष्टोज्ज्वलरत्नभासो गवाक्षजालैरभिनिष्पतन्त्यः ।**
**हिमाद्रिटङ्कादिव भान्ति यस्यां गङ्गाम्बुपातप्रतिमा गृहेभ्यः ॥८॥**

**अन्तरित्यादि** । अन्तर्गृहमध्ये निविष्टानि निहितान्युज्ज्वलरत्नानि यानि तेषां भासो रश्मयो गृहेभ्यो गवाक्षजालैरभिनिष्पतन्त्यो निर्गच्छन्त्यो यस्यां भान्ति नामध्यास्तेति योज्यम् । पर्वतस्योन्नतप्रदेशष्टङ्क इत्युच्यते । तस्माद्धिमवत्पर्वतटङ्कादिव गङ्गाम्बुपातप्रतिमा गङ्गाजलप्रवाहतुल्याः स्वच्छत्वात् ॥

**धर्म्यासु कामार्थयशस्करीषु मतासु लोकेऽधिगतासु काले ।**
**विद्यासु विद्वानिव सोऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु ॥९॥**

**धर्म्यास्विति** ॥ धर्मादनपेतासु "धर्मपथ्यर्थ–" इत्यादिना यत् । कामार्थयशांसि कर्तुं शीलं यासां तासु । "कृञो हेतु–" इत्यादिना ताच्छील्ये टः । "अतः कृकमि–" इत्यादिना विसर्जनीयस्य सत्वम् । टित्त्वान्ङीप् । मतासु पूजितासु लोके तासां प्रतीतत्वात् । अधिगतासु काले विवाहयोग्ये काले परिणीतासु सोऽभिरेमे स राजाभिरतवान् । पत्नीषु "पत्युर्नो यज्ञसंयोगे" इति नकारः । तिसृषु कौसल्याकैकेयीसुमित्रासूत्तमास्विति सन्नारीगुणैः श्रेष्ठासु । विद्यास्विति विदन्त्याभिर्धर्माधर्माविति विद्याः "संज्ञायां समज–" इत्यादिना क्यप् । तिसृषु सामर्ग्यजुराख्यासु । धर्म्यास्वित्यादिकं तुल्यम् । विद्वानिव यथाधिगतविद्य इत्यर्थः । "विदेः शतुर्वसुः" । दीर्घहल्ङ्याादिसंयोगान्तलोपाः ॥

तस्य राज्ञः पत्नीभिस्ताभिः सह रममाणस्य सुता नैवासन् । ऋष्यशृङ्गनामा मुनिः पुत्रीयं क्रतुं जानातीति पुरोधसो वसिष्ठादुपश्रुत्य राज्ञा वारविलासिनीभिरानायितो मुनिरित्येतत्कथयितुमाह—

**पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान्क्रतुषु क्रियावान् ।**
**विपक्त्रिमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृङ्गः ॥१०॥**

**पुत्रीयतेत्यादि** ॥ पुत्रीयतात्मनः पुत्रमिच्छता । इच्छायाम् "सुप आत्मनः क्यच्" इति क्यच् । "क्यचि च" इतीत्वम् । तेन राज्ञा प्रयोजककर्त्रा वराङ्गनाभिर्वरस्त्रीभिः प्रयोज्यकर्त्रीभिरानायि स्वां पुरमिति योज्यम् । "नीवह्योः" इत्यादेरपि "अकथितं च" इति चकारेण संगृहीतत्वान्नयतिर्द्विकर्मकः । तत्र प्रधानकर्मणि लुङ् । च्लिण्णलोपौ "चिणो लुक्" इति तशब्दस्य लुक् । गुणकर्मणि तु पुरमिति द्वितीया "गतिबुद्धि–" इत्यादिना प्रयोज्यकर्तरि द्वितीया न भवति । "नीवह्योः प्रतिषेधः" इति वचनात् । विद्वान्वेदार्थतत्त्ववित् । एवं च कृत्वा क्रतुषु क्रियावान्प्रशस्तक्रियः प्रशंसायां मतुप् । विपक्त्रिमज्ञानगतिरिति विपाकेन निर्वृत्तम् । पचतेः क्त्रिः क्त्रेर्मप् । यत्पूर्वजन्म-

कृतमनिवर्तनीयं कर्म तस्योग्रतपःप्रत्ययाद्विनोपदेशाज्ज्ञानात्प्रवृत्तिर्बुद्धावस्य जातेत्यर्थः। मनस्वी प्रशस्तमनाः। प्रशंसायाम्। "अस्मायामेधा—" इत्यादिना विनिः। मान्यो मानार्हः। "अर्हे कृत्यतृचश्च" इति ण्यत्। धर्मादिमननान्मुनिः। "मनेरुच्चोपधायाः" इति इन्। उपधाया उकारः। ऋष्यस्य शृङ्गमृष्यशृङ्गं तच्छृङ्गमिव शृङ्गं यस्य स ऋष्यशृङ्गः। "सप्तम्युपमान—" इत्यादिनोत्तरपदलोपी समासः॥

**ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रम्।**
**ज्ञाताशयस्तस्य ततो व्यतानीत्स कर्मठः कर्म सुतानुबन्धम्॥११॥**

**ऐहिष्ट**॥ तं मुनीद्रं क्रतुं कारयितुं नृप ऐहिष्ट ईहितवान्। ईहतरोत्मनेपदिनो लुङि सेट्त्वादिटि च रूपम्। द्विकर्मकता तु "हृक्रोरन्यतरस्याम्" इति। कृतात्मा वशीकृतात्मेति भावः। पुत्रफलं पुत्रः फलं कार्यं यस्य क्रतोः तत उत्तरकालम्। स मुनिः परचित्तज्ञत्वाऽज्ञाताशयो ज्ञाताभिप्रायो राजाभिमतं कर्मकारयितुं तस्य नृपस्य कर्म व्यतानीत्प्रारब्धवान्। तनोतेः "नेटि" इति हलन्तलक्षणायां प्रतिषिद्धायाम् "अतो हलादेः—" इति विभाषावृद्धिः। कर्मठः कर्मणि घटते "कर्मणि घटोऽठच्"। यागक्रियानिष्पादक इत्यर्थः। सुतानुबन्धुं सुताननुबध्नातीति कर्मण्यण्। "सुतानुबन्धि" इति पाठान्तरम्। सुताननुबन्द्धुं शीलमस्येति। "सुप्यजातौ णिनिः—" सुपीत्यनुवर्तमाने सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम्। अन्यथा जाताविति किं ब्राह्मणानामन्त्रयितेति न युज्यते। आङित्यस्योपसर्गत्वात्॥

**रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम्।**
**शेषाण्यहौषीत्सुतसंपदे च वरं वरेण्यो नृपतेरमार्गीत्॥१२॥**

**रक्षांसि**॥ वेदीं परितो यजनवेद्याः समन्तात्। विघ्नायोपस्थितानि रक्षांसि। रक्ष्यते एभ्य इत्यसुन्। तानि रक्षोघ्नैर्मन्त्रैर्निरास्थन्निरस्तवान्। पर्यभिभ्यां सर्वोभयार्थे तसिल्। "अभितः परितः—" इत्यादिना द्वितीया। अङ्गान्ययाक्षीदभितः प्रधानमिति। यद्देवतामयो यागः सा देवता तत्र प्रधानं। पुत्रफलत्वाद्विष्णुः प्रधानम्। तमिष्ट्वा तस्योभयतः पार्श्वयोर्यान्यङ्गानि चक्षुरादीनि देवतान्तराणि तान्ययाक्षीत्। अग्नावाहुत्या पूजितवान्। कर्तृ क्रियाफलाभावात्तङ् न भवति। षत्वकत्वे। शेषाण्यहौषीदिति स्वाङ्गं विष्णुमिष्ट्वा शेषाणि प्रतिकृतानि पिष्टकमयानि सुतानां संपदर्थमग्नौ हुतवान्। जुहोतेः सिचिवृद्धाविटि च रूपम्। वरेण्यः श्रेष्ठः। वरं चामार्गीन्मार्गितवान्। हे देवा अग्निप्रभृतयो नृपतेः सुता भूयासुरिति। 'मार्ग अन्वेषणे'। "आधृषाद्वा" इति यदा णिज् नास्ति तदा चङभावात्सिजेव भवति॥

**निष्ठां गते दत्त्रिमसभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः ।**
**प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्रः प्रसोतुं चतुरः सुपुत्रान्॥१३॥**

**निष्ठामिति ॥** निष्ठां समाप्तिं गते कर्मणि यागक्रियायां समाप्तायां राजपत्न्यो हुतोच्छिष्टं हुतावशेषं शिष्टचरुं प्राशुर्भक्षितवत्यः। अश्नातेर्लिटि, उसि रूपम्। दत्त्रिमसभ्यतोषे दानेन निर्वृत्तो दत्त्रिमः सभ्यानां ब्राह्मणानां तोषो यत्र कर्मणि। विहित्रिमे विधानेन निर्वृत्ते कर्मणि दाञो धाञश्च "ड्वितः क्त्रिः" इति क्त्रौ विहिते प्रथमस्य "दोदद्घोः" इति ददादेशः। द्वितीयस्य "दधातेर्हिः" इति हिरादेशः। मप्। सभायां साधव इति सभ्याः। "सभाया यः"। उदारवंश्या महावंशोद्भवा। शेषे यत्। कौसल्या कैकेयी च क्षत्रिये। सुमित्रा तु वर्णसंकरजा। किमर्थं प्राशुः। प्रसोतुं सुपुत्रान्विनीतान्प्रसवितुम्। तत्र कौसल्याकेकयी चैकैकं पिण्डं प्राशितवत्यौ। ताभ्यां चावयोः परिचारिकेति पिण्डभागद्वयं दत्तं सुमित्रा प्राशितवती। ततश्च पुत्रद्वयं जनयिष्यति। एवंचाभिसंधाय चतुर इत्युक्तं नतु त्रीनिति। 'षूङ् प्राणिगर्भविमोचने' "स्वरति–" इत्यादिना विभाषितेट् ॥

**कौसल्ययासावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत् ।**
**प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन ॥ १४ ॥**

**कौसल्ययेत्यादि ॥** कोसलस्य राज्ञोऽपत्यमिति "वृद्धेत्कोसलाजादाञ्ञ्यङ्"। "यङश्चाप्"। कौसल्यया प्राक् प्रथमम्। असावि रामो जन्यते स्म। षूङः कर्मणि लुङि चिणि रूपम्। सुखेनेति प्रकृत्यादित्वात्तृतीया। महतां जन्मनि न काचिदपि पीडास्ति। तदनन्तरं केकयीतो भरतोऽभूत्। केकयानाचष्टेति णिच्। मा हीदृशास्तादृशाः केकया इति कथयति। तदन्तात् "अच इः" इति, इकारप्रत्यय औणादिकः। णिलोपः। "कृदिकारादक्तिनः" इति ङीप्। "अपादाने चाहीयरुहोः" इति तसिः। यदा च केकयस्यापत्यम् "जनपदशब्दात्क्षत्रियादञ्" इत्यञ् "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशः "टिड्ढाणञ्–" इति ङीप् तदा कैकेयीति द्वितीयं रूपम्। सुमित्रा शत्रुघ्नमुदारचेष्टम्। उदारा चेष्टा यस्येति। प्रासोष्ट प्रसूतवती। कर्तरि लुङ्। ङित्त्वात्तङ्। जातमात्रस्य हि तस्य किल महासत्त्वतया तादृशस्यैव चेष्टाभूदिति श्रूयते। एकेति। एकैवेति गम्यमानत्वादेव शब्दो न प्रयुक्तः। सह लक्ष्मणेन लक्ष्मणेन सह ॥

**आर्चीद्द्विजातीन्परमार्थविन्दानुदेजयान्भूतगणान्न्यषेधीत् ।**
**विद्वानुपानेष्ट च तान्स्वकाले यतिर्वसिष्ठो यमिनां वरिष्ठः॥१५॥**

**आर्चीदित्यादि ॥** तेषु जातेषु द्विजातीन्द्वे जाती येषामिति तान्ब्राह्मणक्षत्रिय-

वैश्यान्परमार्थविन्दान् । विन्दन्तीति विन्दा. । 'विद्लृ लाभे' इत्यस्मात् "अनुपसर्गात्–" इत्यादिना शः । मुचादित्वान्नुम । परमार्थस्य विन्दाँल्लाभिन इति कर्मणि षष्ठी । तस्याः "कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्" इति समास· । तानार्चीत्स्रगादिभि· पूजितवान् । 'अर्च पूजायाम' इत्यस्माल्लुङि तिप् इट् सिचो लोप । भूतगणान्राक्षसादिगणान् । उदेजयानुत्कम्पान् । तस्मिन्नेव सूत्र उत्पूर्वे एजिर्ण्यन्तो निर्दिष्ट । तस्मादुदेजयतीत्ति शः । तान्यषेधीदुत्सादितवान । षिधे. "नेटि" इति हलन्तलक्षणाया· प्रतिषेध. । विद्वान्पौरोहित्यकर्मणि कुशल । उपानेष्ट च तान्रामादीन् । तेषामुपनयनादिक्रियां चकार । "संमानन–" इत्यादिनाचार्यकरणे तङ् । स्वकाल इति "गर्भादेकादशे वर्षे जातस्य गर्भैकादशे" इत्यादिना वचनेन उपनयनकाल उक्त. । यमनियमेषु यतत इति यति । "सर्वधातुभ्य इन्" इति इन् । "अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्मषम ॥ इति पञ्च यमा येषां सन्तीति यमिन स्मृता·" । तेषां वरिष्ठ उत्तम । "प्रियस्थिर–" इत्यादिनोरुशब्दस्य वरादेशो महत्पर्यायस्य ॥

**वेदोऽङ्गवांस्तैरखिलोऽध्यगायि शस्त्राण्युपायंसत जित्वराणि ।**
**ते भिन्नवृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः॥१६॥**

**वेद इत्यादि ।** 'शिक्षा कल्पो व्याकरणं छन्दोविवृतिर्निरुक्तं ज्योतिषं चेति षडङ्गानि शास्त्राणि तानि विद्यन्ते यस्य वेदस्येत्यङ्गवान । तैरुपनीतै रामादिभि· । अखिलो नि शेषो वेदोऽध्यगायि । अधीत इत्यर्थ । इङोऽधिपूर्वात्कर्मणि लुङि "विभाषा लुङ्लृङो" इति गाङादेश· । चिण् युक् तलुक् । शस्त्राणि धनुरादीनि जित्वराणि जयशीलानि । "इणनशिज–" इत्यादिना क्वरप् । तैरुपायंसत स्वीकृतानि । उपपूर्वो यमि स्वीकरणे वर्तते । तस्मात्कर्मणि लुङ् । "आत्मनेपदेषु" इत्यादिना अदादेश· । "हन सिच्" इति ज्ञापकादनुनासिकलोपाभाव । ततस्ते रामादयो गुणिनो मानसानि मनांसि । प्रज्ञादित्वात्स्वार्थे ण· । भिन्नवृत्तीनि नानाविधप्रवृत्तीनि विषयेषु तानि मानसान्यपि जनानां समं साधारणम । क्रियाविशेषणम् । अध्यवात्सुरध्युषितवन्त. ॥ अधिपूर्वाद्वसेः सिचि "वदव्रज–" इत्यादिना वृद्धि ॥ "स·सि–" इति तत्वम् । "सिजभ्यस्त–" इति जुस् । "उपान्–" इत्यादिना अधिकरणस्य कर्मसंज्ञा ॥

**ततोऽभ्यगाद्गाधिसुतः क्षितीन्द्रं रक्षोभिरभ्याहतकर्मवृत्तिः ।**
**रामं वरीतुं परिरक्षणार्थं राजार्जिहत्तं मधुपर्कपाणिः ॥ १७ ॥**

**तत इत्यादि ॥** तेषु रामादिषु तथाभूतेषु । गाधिसुतो विश्वामित्रः । क्षितीन्द्रं राजानमभ्यगादभिगतवान् । इणो गादेश । "गातिस्था–" इत्यादिना सिचो लुक् ।

रक्षोभिर्निशाचरैरभ्याहताभिभूता यागादेः कर्मणो वृत्तिः प्रवृत्तिर्यस्येति । गामं वरीतुं प्रार्थयितुम् । "वृतो वा" इति इटो दीर्घत्वम् । परिरक्षणार्थं विहन्यमानस्य कर्मण इत्यर्थः । तं गाधिसुतम् । आर्जिहत् पूजितवान् । 'अर्ह पूजायाम्' इति स्वार्थिकण्यन्तश्चौरादिको गृह्यते न भौवादिकः । तस्माद्धेतुमण्णिचात्र न भवितव्यम् " णिश्रि—" इत्यादिना चङ् । णिलोपः । "द्विर्वचनेचि" इति स्थानिवद्भावात् । "अजादेर्द्वितीयस्य" इति हिशब्दो द्विरुच्यते । रेफस्य न । "नन्द्राः—" इति प्रतिषेधः । चुत्वम् । आट् । वृद्धिः । मधुपर्कपाणिः । दधिघृतमधून्येकीकृतानि मधुपर्क इत्युच्यते । तस्मिन् पात्रे स्थितः पाणिर्यस्येति विग्रहः । "सप्तम्युपमाने—" इत्यादिना उत्तरपदलोपी समासः । पात्रादुद्धृत्य मधुपर्केण पूजितवानित्यर्थः ॥

**ऐषीः पुनर्जन्मजयाय यत्त्वं रूपादिबोधान्न्यवृतच्च यत्ते ।**
**तत्त्वान्यबुद्धाः प्रतनूनि येन ध्यानं नृपस्तच्छिवमित्यवादीत् ॥१८॥**

**ऐषीरित्यादि ।** मुक्तिस्तत्त्वावबोधस्तस्या ध्यानं प्रयोजनं तव पुनर्जन्म भूयो जन्म तस्य जयाय यद्ध्यानं त्वमैषीः एषितवानसि । इषेर्लुङ् । मध्यमैकवचनं "इट ईटि" इति सिचो लोपे रूपम् । रूपादिबोधान्न्यवृतच्च यत्ते रूपादिषु शब्दस्पर्शरूपरसगन्धेषु चक्षुरादिद्वारेण यो बोधोऽध्यवसायलक्षणा बुद्धिः तस्माच्च यद्ध्यानं न्यवृतत् निवृत्तम् । वृतेर्द्युतादित्वात् "द्युद्भ्यो लुङि" इति तिप् । च्लेरङ् । तत्त्वानि पञ्चविंशति । पुरुषप्रधानमहदहङ्कारादीनि । प्रतनूनि सूक्ष्माणि येन ध्यानेनाबुद्धाः ज्ञातवानसि । बुधेरनुदात्तेतो लुङ् । थास् सिच् "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्त्वाद्गुणाभावः । सिज्लोपधत्वजश्त्वादि । तद्ध्यानं शिवं शोभनं कच्चिदिति नृपोऽवादीत् । न तस्य व्याघात इति । "वदव्रज—" इत्यादिना वृद्धिः । 'ध्यै चिन्तायाम्' भावे ल्युट् । ध्यानम् ॥

**आख्यन्मुनिस्तस्य शिवं समाधेर्विघ्नन्ति रक्षांसि वने क्रतूंश्च ।**
**तानि द्विषद्वीर्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन ॥ १९ ॥**

**आख्यदित्यादि ॥** पृष्टो मुनिस्तस्य समाधेर्ध्यानस्य शिवमनुपद्रवमाख्यत् कथितवान् । "चक्षिङः ख्याञ्" "अस्यति—" इत्यादिना च्लेरङ् । आतो लोपः । क्त्वियं दोषः । विघ्नन्ति रक्षांसि वने क्रतून् । "गमहन—" इत्यादिना उपधालोपः "हो हन्तेः—" इति कुत्वम् । किं क्रियतामिति चेदाह तानि रक्षांसि । द्विषतां वीर्यं सामर्थ्यं । वीरं स्वार्थिकण्यंतात् "अचोयत्" । तस्य निराकरिष्णुः निराकरणशील । "अलंकृञ्" इत्यादिना

इष्णुच् । तृणेढु हिनस्तु तृहेर्विधौ लोट् । "एरुः" । रुधादित्वात्श्नम् । "तृणह इम्" "होढ" ष्टुत्वं । "ढोढ" इति ढलोपः । सह लक्ष्मणेन लक्ष्मणेन सह ॥

**स शुश्रुवांस्तद्वचनं मुमोह राजासहिष्णुः सुतविप्रयोगम् ।**
**अहंयुनाथ क्षितिपः शुभंयुरूचे वचस्तापसकुञ्जरेण ॥२०॥**

**स इत्यादि** । स राजा तस्य मुनेस्तद्वचनं शुश्रुवान् श्रुतवान् सन् सुतविप्रयोगमसहिष्णुरसहनशीलो मुमोह मोहमुपगत । शृणोते "भाषाया सदवसश्रुव:" इत्यनेन क्वसुः । सुतेन विप्रयोगमिति "कर्तृकरणे कृता बहुलम्" इति समासः । "नलोकाव्ययनिष्ठा–" इति षष्ठ्या प्रतिषेध । अथानन्तरम । अहंयुना अहंकारवता । "अहंशुभयोर्युस्" तापसकुञ्जरेण "तप सहस्राभ्यां विनीनी" इत्यनुवर्तमाने "अण् च" इति मत्वर्थेऽण् । तापसश्च स कुञ्जरश्चेति । "वृन्दारक–"इत्यादिना समास । तेन क्षितिपो राजा । शुभंयु कल्याणवान् । पूर्ववद्युस् । वचो वक्ष्यमाणमूचे उक्त । कर्मणि लिट् । सम्प्रसारणम् । अहंयुनाथ इति विसर्गान्तं पाठान्तरम् । तत्र अहंयूना क्षत्रियाणां नाथ इति योज्यम् ॥

**मया त्वमाप्थाः शरणं भयेषु वयं त्वयाप्याप्स्महि धर्मवृद्ध्यै ।**
**क्षात्रं द्विजत्वं च परस्परार्थं शङ्कां कृथा मा प्रहिणु स्वसूनुम् ॥२१॥**

**मयेत्यादि** । भयेषु त्वं शरणम् आप्थाः प्राप्तोऽसि मया । आपेः कर्मणि लुङ् । सिज्लोप । त्वयापि धर्मवृद्ध्यै धर्मोपचयाय वयमाप्स्महि प्राप्ता । पूर्ववल्लुङादि । उत्तमबहुवचनम । सिचो लोपाभाव । मकारस्याझलत्वात् । तदित्थं क्षात्रं द्विजत्वं च धर्मवृद्ध्यै परस्परार्थं अन्योन्यप्रयोजनम । "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः" "समासवच्च बहुलम्" इति यदा न समासवत् तदायम् । तस्मान्मा शङ्कां कृथाः माकार्षीः । कथमस्मिन् संकटे पुत्रं नियोजयामीति । "माङि लुङ्" अडभाव "उश्च" इति कित्वाद्गुणाभाव । "ह्रस्वादङ्गात्" इति सिचो लोप । प्रहिणु प्रेषय । स्वं पुत्रम् । हिनोतेः प्रार्थनायां लोट् । श्नु । अपित्वात् ङित्वम् । गुणाभावः "उतश्च प्रत्ययात्" इति हेर्लुक् "हिनुमीना" इति णत्वम ॥

**घानिष्यते तेन महान्विपक्षः स्थायिष्यते येन रणे पुरस्तात् ।**
**मा मां महात्मन्परिभूरयोग्ये न मद्विधो न्यस्यति भारमग्र्यम् ॥२२॥**

**घानीत्यादि** ॥ अनागतमर्थं ज्ञानेन समीक्ष्याह । महान्विपक्षो रावणः त्रैलोक्यविजयित्वात् । सोऽपि रामेण घानिष्यते किमुतेतरे राक्षसाः । हन्ते कर्मणि लृट् ।

"स्यसिच्—" इत्यादिना चिण्वदिट्, उपधावृद्धिः । "ह्रोहन्ते—" इति कुत्वम् । पुरस्तादग्रतो यद्रणं युद्धं भावि परशुरामेण सार्द्धमिति भावः । तत्र येन स्थायिष्यते तेन घानिष्यत इति योज्यम् । अत्र तिष्ठतेर्भावे लृट् । चिण्वदिड्वा । "आतो युक्" । हे महात्मन् । महासत्व मा मां परिभूर्मावज्ञासीः । किमेवं वदसीति । परिपूर्वो भवतिर्निराकरणे वर्त्तते । मद्विध इति विधानं विधा प्रकारः "आतश्चोपसर्गे" इत्यङ् । विधा भेदः सादृश्यञ्च । इह सादृश्यं गृह्यते मया विधा सादृश्यं यस्येति मद्विधः । "प्रत्ययोत्तरपदयोश्च" इति मदादेशः । मद्विधो मत्सदृशोऽन्यो न भारमस्यम् "अयाग्यन्" । अयोग्ये असमर्थे न्यस्यति निक्षिपति । किमहं येनानागतं समीक्षितमिति भावः । योगाय प्रभवति योग्यः "योगाद्यत्" ॥

**क्रुध्यन्कुलं धक्ष्यति विप्रवह्निर्यास्यन्सुतस्तप्स्यति मां समन्युम् ।**
**इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ॥ २३ ॥**

**क्रुध्यन्नित्यादि** । यद्यहं भूतरक्षणेऽभिकृतोऽस्य वचनं न कुर्यां तदा क्रुध्यन्सन् । दिवादित्वात् श्यन् । विप्रो वह्निरिव । "उपमितम्—" इतिसमासः । धक्ष्यति कुलं भस्मसात्करिष्यति । दहेर्लृट् "दादेः—" इति घः । भष्भावः । चर्त्वम् । घकारस्य ककारः । "इण्कोः" इतिं षत्वं । यास्यन्गमिष्यन्सुतो मां समन्युं सशोकं तप्स्यति सन्तापयिष्यति । तपेर्लृट् । इत्थमेवं प्रकारं नृपः पूर्वमादाववालुलोचेऽवलोचितवान् । अवाङ्पूर्वाल्लोचेर्लिट् । ततः उत्तरकाले सुतस्य गमनमनुजज्ञे । अनुज्ञातं नृपेणेति विभक्तिविपरिणामेन तेनेति योज्यम् । कर्मणि लिट् । ज्ञा अवबोधने इति परस्मैपदित्वात् । नचानुपूर्वादस्मादात्मनेपदं विहितम् ॥

**आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिराश्रमाय ।**
**तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषुदीप्तास्तधनुः कुमारः ॥२४॥**

**आशीर्भिरित्यादि** ॥ रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षितीन्द्रं राजानमाशीर्भिरभ्यर्च्य पूजयित्वा । आङः शासेः क्विप्युपसंख्यानात् उपधाया इत्वम् । प्रतस्थे पुनराश्रमाय, आश्रमं पुनः प्रस्थितवान् । तिष्ठतेः "समव—" इत्यादिना लिङि तङ् । प्रष्ठमग्रयायिनं तं "प्रष्ठोऽग्रगामिनि" इति षत्वम् । पृष्ठतः पश्चात् इयाय कुमारः । इणो णलि वृद्धिरायादेशः "द्विर्वचनेचि" इति स्थानिवद्भावाद्द्विर्वचनमिकारस्य । "अभ्यासस्यावर्णे" इतीयङ् । नम्रोऽनुकूलः । हिंसनशीला इषवः शराः हिंस्रेषवः । आममस्त्रिसंन्यादि यद्धनुस्तत् । हिंस्रेषुदीप्तमास्तं धनुर्यस्य कुमारस्येति विग्रहः । अत्र "धनुषश्च" इत्यनङ्न भवति "समासान्तविधिरनित्यः" इति । दीप्रास्त्रधनुरिति पाठान्तरम् । दीप्रमस्त्रं

धृष्टतया यस्य धनुषस्तद्धीप्राक्षं धनुर्यस्येति स. । कस्मिन्विषये हिंस्रेषु नान्येषु । नम्राद-यो “ नमिकम्पि-” इत्यादिना रप्रत्ययान्ता. ॥

**प्रयास्यतः पुण्यवनाय जिष्णो-**
**रामस्य रोचिष्णुमुखस्य धृष्णुः ।**
**त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः**
**सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥**

**प्रयास्यत इत्यादि** ॥ प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्र्यङ् अभूत् सहायीभूत. । सहाञ्चति ‘ इति क्विन् ’ अनुषङ्गलोप· “उगिदचाम्-” इति नुम् । हल्ङ्याब्भ्यादि संयोगान्तलोपौ “ क्विन्प्रत्ययस्य-” इति कुत्वं नकारस्य ङकार. । “ सहस्य सध्रि· ” इति सध्र्यादेशः । पुण्यवनाय पुण्यहेतुत्वात्पुण्यं वनम् । गत्यर्थात् कर्मणि चतुर्थी । जिष्णोर्जयशीलस्य “ग्लाजिस्थश्च-” इति क्स्नु । रोचिष्णु रोचनशीलं मुखं यस्य रामस्य पितुराज्ञया तुष्टत्वात् । “ अलं कृञ्-” इत्यादिना, इष्णुच् । धृष्णु· शत्रुविध्वंसने प्रगल्भः । “ त्रसिगृधि-” इत्यादिना क्नु. । त्रैमातुर. तिसृणां मातृणामपत्यमिति तद्धितार्थविषये समास· पश्चात् “ मातुरुत्सङ्ख्या ” इत्यादिना अण् उत्वञ्च “ द्विगोर्लुगनपत्ये ” इति लुक् न भवति । स हि पिण्डद्वयप्राशनात्ताभ्यां च जनित· । अस्त्रं च शस्त्रं चेति द्वन्द्व । कृत्स्नं समग्रं जितमधिगतमस्त्रं शस्त्रं येनेति विग्रह । रत· श्रेयसि कल्याणे “ प्रकृत्यैकाच् ” “प्रशस्यस्य श्र ” । लक्ष्मीरित्यौणादिक । लक्षेर्मुट् ईप्रत्ययश्च । सा यस्य विद्यत इति लक्ष्मण । लोमादिषु “ लक्ष्म्या अच्च ” इति अच् न प्रत्ययः अत्त्वञ्च ॥

**इषुमति रघुसिंहे दन्दशूकाञ्जिघांसौ**
**धनुररिभिरसह्यं मुष्टिपीडं दधाने ।**
**व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे**
**कथमपि गुरुशोकान्मा रुदन् माङ्गलिक्यः ॥ २६ ॥**

**इषुमतीत्यादि** ॥ रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्यादियोगात् । व्रजति सति । इषुमति सनिषङ्गे प्रशंसायां मतुप् । दन्दशूकान् हिंस्रान् दंशेः “लुपसद-” इत्यादिना यङ् । “ जपजभ-” इत्यादिना अभ्यासस्य नुक् । तदन्तात् “ यजजप-” इत्यादिना ऊकः । अतो लोप· । यस्य हलः । जिघांसौ हन्तुमिच्छौ । “अज्झन-” इति दीर्घ । “ अभ्यासाच्च ” इति कुत्वम् “सनाशंस-” इति उः “न लोक-” इति

षष्ठीप्रतिषेधात् द्वितीयैव । धनुर्दधाने बिभ्राणे । अग्भिरसह्यं सोढुमशक्यम् । "शकिसहोश्च" इति यत् । मुष्टिपीडं मुष्टिना पीडयित्वा मुष्टिशब्दे तृतीयान्ते उपपदे "सप्तम्यां चोपपीड—" इति णमुल् । तत्र चकारेण तृतीयानुकर्षणात् । बद्धं चित्रमङ्गुलित्रं येन । अङ्गुलि त्रायत इति कः । पुरे तरुण्य पुरतरुण्यः । "नञ्स्नञीककख्युंस्तरुणतलुनानामुपसङ्ख्यानम्" इति ङीप् । यदि तद्वचोऽर्थवत् । नो चेद्गौरादिपाठात् ङीष् । रामो गत इति गुरुः शोको यासां ताः । कथमपि माकुदन् न रुदितवत्यः । रुदे "इरितो वा" इति च्लेरङ् । यतो माङ्गलिक्य मङ्गलप्रयोजनाः "तदस्य प्रयोजनम्" इति ठञ् "टिड्ढाणञ्" इत्यादिना ङीप् ॥

अथ जगदुरनीचैराशिपस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्यमाजघ्नुरन्ये ।
अभिमतफलशंसी चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैःपक्षिणश्चानुकूलाः ॥ २७ ॥

**अथेत्यादि** ॥ तस्य रामस्य व्रजतो विप्रा अनीचैर्महता ध्वनिनाशिष इष्टवचनानिजगदुर्गदितवन्तः । अन्ये वादकास्तूर्यकांस्यतालपटहादिसमूहमाजघ्नुस्ताडितवन्तः । "आङो यमहनः" इत्यात्मनेपदं न भवति । अकर्मकादित्यनुवर्त्तते । तुमुलो महान्कलो मधुरो निनादो ध्वनिर्यस्येति । अभिमतमिष्टं फलं शंसितुं शीलं यस्य बाहो स च पुस्फोर सुतरां स्फुरितवान् । अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते स्वाङ्गत्वात् । अनेन सीताप्राप्तिबीजमुपन्यस्तम् । स्फुरते "अभ्यासस्य शर्पूर्वा खयः" इति खयः शेषः । चर्त्वम् । पक्षिणश्च तरुषु स्थिता अनुकूलाः सन्तः उच्चैः सुष्ठु चुकुवुः कूजितवन्तः । "कु शब्दे" इत्यस्य लिटि कित्त्वादुवङादेशः ॥

## इति भट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः ।

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे
रामसंभवः प्रथमः सर्गः ॥

# द्वितीयः सर्गः ।



इदानी विजिगीषूणां कण्टकान् समुद्धर्तुं शरत्काले समुद्योग इति तमेव वर्णयन्नाह—

**वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशांच ।**
**निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श ॥ १ ॥**

**वनस्पतीनामित्यादि** । स रामः । तस्याः पुरः अयोध्यायाः । निर्याय निर्गत्य । समन्तात् सर्वतः शरदं ददर्श दृष्टवान् । कालस्याप्रत्यक्षत्वात् कार्याणां दर्शनात्तद्दर्शनमिति मन्यते । श्रियं दधानां धारयन्तीं । केषां वनस्पतीनां । पारस्करादिदर्शनात् सुट् । अत्र लोकप्रतीत्या वृक्षा द्रष्टव्याः । न तु पारिभाषिकाः । तथा सरसां तडागानां नदीनां गङ्गादीनां तेजस्विनांचन्द्रतारादीनां कान्ति नैर्मल्यं बिभ्रतां दिशां च । तदा हि निर्मला दिशो भवन्ति । वनस्पत्यादीना श्रियं दधानां शरदं ददर्श ॥

तां रामव्यापारं विना सामान्येन वर्णयन्नाह—

**तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयां दधन्ति ।**
**सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥**

**तरङ्गेत्यादि** । तरङ्गसङ्गात् सलिलोर्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः पत्रैः ज्वालाश्रियं सातिशयां दधन्ति । सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्तेस्म । राजेर्लिटि "फणांच सप्तानाम्" इति एत्वाभ्यासलोपौ । आकुलाः इतस्ततो यायिनः षट्पदा येष्विति । चलितपत्राणामग्निशिखातुल्यत्वात् षट्पदानांच धूमतुल्यत्वात् सधूमदीप्ताग्निरुचीनीत्युक्तम् ॥

**बिम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः ।**
**कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥**

**बिम्बेत्यादि** ॥ बिम्बं प्रतिबिम्बं तेनागतैर्निपतितैरिति । तृतीयेति योगविभागात् समासः । तीरवनैः कुसुमितैरित्यर्थात् तैः करणभूतैः । पयोभिः कर्तृभिः समृद्धिं विभूतिं निजामात्मीयां अपहृतां विलोक्य कूलानि कर्तृभूतानि सामर्षतयेव साक्षमतयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः विस्तारितवन्ति । "अत एकहल्मध्ये—" इत्यादिना एत्वाभ्यासलोपौ । कूले सरोजासम्भव इति चेदाह स्थलपद्महासैरिति स्थलकमलविकाशैरित्यर्थः ॥

**निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः ।**
**उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥**

**निशेत्यादि** ॥ निशायां तुषारैः हिमैः। नयनाम्बुकल्पैः अश्रुतुल्यैः। नयनान्तर्गिरि पत्रेषु स्थितत्वात्। तैर्हेतुभूतैः पत्रान्तपर्यागलदच्छबिन्दुः। पत्रान्तात्पर्यागलन्तः अच्छा स्तुषारबिन्दवो यस्य तीरतरोः। स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति शशिवियोगादीदृशी त्वं भूतासीति। रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः। नदाक्रन्दनं योजयन्नाह। नदत्पतङ्गः रटन् कूजत्पक्षीत्यर्थः। पतेरङ्गच् पक्षिणीत्यौणादिकः। कुमुद्वती "कुमुदनड—" इत्यादिना ड्मतुप्। "झयः" इति वत्वम्। उगित्त्वात् ङीप् ॥

**वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः ।**
**परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥५॥**

**वनानीत्यादि** ॥ वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः। लीयतेः "स्वादय ओदितः" इति निष्ठा नत्वं। नेत्रकल्पैः नेत्रतुल्यैः। तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः। विस्मयवन्ति ज्ञातविस्मयानि। परस्परामन्योन्यस्य लक्ष्मीं शोभाम् आलोकयाञ्चक्रुरिव। आदरेण तात्पर्येण ॥

**प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम् ।**
**निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमम्॥६॥**

**प्रभातेत्यादि** ॥ प्रभाते यो वातस्तस्याघातेन कम्पिता चलिता आकृतिराकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती। कुमुद्वतीरेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य। कुपितेव। यथा अन्यया स्त्रिया सहोषितं तदङ्गसंक्रान्तपरिमलकुङ्कुममाल्य मात्मदयितं काचित् कुपिता निरस्यति तद्वत्। सा किमिति निरस्यति यतो मानिनी मानवती अन्यसङ्गमम् अन्यया सह संगमं न सहते। आत्मसङ्गादन्यसङ्गमं न संसहते न क्षमते ॥

**दत्तावधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः ।**
**आकर्णयन्नुत्सुकहंसनादान् लक्ष्ये समाधिं न दधे मृगावित् ॥७॥**

**दत्तेत्यादि** ॥ मधुलेहिगीताविति मधु लेढुं शीलमेषामिति णिनिः। मधुलेहगीता-विति पाठान्तरं तत्र लिहन्तीति लेहाः पचाद्यच्। मधुनो लेहा इति षष्ठीसमासः। मधु लिहन्तीति वा कर्मण्यण्। दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः

हन्तुमिच्छुरपि मृगवित् व्याधः । मृगान्विध्यतीति क्विप् । "ग्रहिज्या–" इत्यादिना सम्प्रसारणम् । "नहिवृति–" इत्यादिना दीर्घ. । लक्ष्ये वध्ये समाधिं चित्तैकाग्रतां न दधे न धारितवान् । ञित्त्वात्तङ् । लिट. कित्त्वे आतो लोप· । उत्सुकानां हंसानां नादानाकर्णयन् शृण्वन् तत्राभिरतचित्तकत्वात् । वर्तमानकालो भूतेनाभिसम्बध्यमानः साधुः । धातुसम्बन्धे प्रत्यया इति च । आकर्णयन्निति "प्रातिपदिकाद्धात्वर्थे बहुलम्" इति णिच् । "लक्षणहेत्वोः–" इति शतृप्रत्यय· ॥

**गिरेर्नितम्बे मरुता विभिन्नं तोयावशेषेण हिमाभमभ्रम् ।**
**सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीम् ॥ ८ ॥**

**गिरेरित्यादि** ॥ गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्तृ मरुता विभिन्नं विह्वलीकृतं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिम् आदधानं कुर्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत् ॥

**गर्जन् हरिः सांभसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य ।**
**क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥**

**गर्जन्नित्यादि** । हरि. सिंह· गर्जन् शब्दं कुर्वन् । क्व शैलनिकुञ्जे गिरेर्गहने । साम्भसि ससलिले । एवंविधे प्रदेशे प्रतिध्वनीन् प्रतिशब्दान् आत्मकृतान् निशम्य श्रुत्वा सरोष· सकोप· क्रमं नबन्ध क्रमितुमुत्पतितुं यत् सामर्थ्यं तच्चकारेत्यर्थ.. । अनेकार्थत्वाद्धातूनां बंधिरत्र करणे वर्त्तते । किमिति प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥

इदानीं रामं व्यापारेण वर्णयन्नाह—

**अदृक्षतांभांसि नवोत्पलानि रुतानि चाश्रोषत षट्पदानाम् ।**
**आघ्रायि वान् गन्धवहः सुगन्धस्तेनारविन्दव्यतिषङ्गवांश्च ॥ १० ॥**

**अदृक्षतेत्यादि** ॥ नवान्युत्पलानि येष्वम्भस्सु जलेषु तानि रामेणादृक्षत दृष्टानि । दृशे· कर्मणि लुङ् । "शल इगुपधा–" इति प्राप्तस्य क्सादेशस्य "न दृशः–" इति प्रतिषेधात् "इरितोवा–" इति सिजेव भवति । तेन विकल्पेनाङो विधीयमानत्वात् लिङ्सिचाविति कित्त्वे गुणाभावः । षट्पदानां रुतानि अश्रोषत श्रुतानि । शृणोतेः कर्मणि लुङ् । वहतीति वहः पचाद्यच् । गन्धस्य वह इति कृद्योगे षष्ठी समस्यते । गन्धवहो वायुराघ्रायि आघ्रातः । कर्मणि लुङ् । अरविन्देन पद्मेन व्यतिषंगः संपर्क· सोऽस्ति यस्य वायोः स· । वातीति वान् वाते· शतृप्रत्ययः । सुगन्ध. शोभनो गन्धो यस्य सः । अरविन्दव्यति-

षङ्गवत्त्वात् । "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इतीकारः समासान्तो न भवति । गन्धस्यैत्वे तदेकान्तग्रहणमिति वचनात् सुगन्ध आपणिक इति यथा ॥

**लतानुपातं कुसुमान्यगृह्णात्स नद्यवस्कन्दमुपास्पृशच्च ।**
**कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत्स्मयमान आस्त॥११॥**

लतेत्यादि ॥ "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इति द्वितीयान्त उपपदे णमुल्विधीयते । तत्र व्याप्यमाने द्रव्यवचनस्य, आसेव्यमाने च क्रियावचनस्य नित्यवीप्सयोरिति द्विर्वचनं विधीयते । अत्र तु समासेनैवोक्तत्वात् नोपयुज्यत इति स्थितम् । स काकुत्स्थो रामो गच्छन् लतां लतामनुपात्य कुसुमान्यगृह्णात् गृहीतवान् । लतामनुपात्यानुपात्य च । तृतीयाप्रभृतीन्यन्यतरस्यामिति समासः । ग्रहेर्लङ् । श्नाप्रत्ययस्य, अपिदिति ङित्त्वे ग्रहिज्यादिना सम्प्रसारणम् । नद्यवस्कन्दमिति नदीं नदीम अवस्कंद्य सर्वां नदीमवस्कंद्य ढौकित्वा नदीं वा अवस्कंद्यावस्कंद्य, उपास्पृशत्, आचमनं कृतवान् । कौतूहलादिति सर्वत्र योज्यम् । चारुशिलोपवेशमिति चारुशिला- चारुशिला उपविश्य चारुशिला उपविश्योपविश्य वा आस्त आसितवान् । आसेर्लङि रूपम् । ईषत्स्मयमानः ईषद्धसन् ॥

**तिग्मांशुरश्मिच्छुरितान्यदूरात्प्राञ्चि प्रभाते सलिलान्यपश्यत् ।**
**गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि संभृतानि ॥१२॥**

तिग्मांश्वित्यादि ॥ अदूरात्समीपे सलिलान्यपश्यत् । दृशेर्लङि पाघ्रेति पश्यादेशः । तिग्मांशोरादित्यस्य रश्मिभि छुरितानि रञ्जितानि । तुक् । प्राञ्चि पूर्वस्यां दिशि अवस्थितानि । प्रपूर्वादञ्चतेर्ऋत्विगित्यादिना क्विप् । अनुषङ्गलोपः । शिः । नपुंसकस्य नुम् । भानोरिव तेजांसि भुवि संभृतानि पिण्डीकृतानि । गभस्तिभि रश्मिभिः धाराभिरिव द्रुतानि गलितानि । धारा प्रपात इति भिदादिपाठाद्द्रष्टव्यम ॥

**दिग्व्यापिनीर्लोचनलोभनीया मृजान्वयाः स्नेहमिव स्रवन्तीः ।**
**ऋज्वायताःशस्यविशेषपङ्क्तीस्तुतोष पश्यन् वितृणान्तरालाः १३**

दिग्व्यापीत्यादि ॥ शस्यविशेषाणां शाल्यादीनां पङ्क्तीः पश्यंस्तुतोष तुष्टवान् । दिग्व्यापिनीः सर्वदिग्व्यापनशीलाः । लोभयन्तीति लोभनीयाः । बहुलवचनात्कर्तर्यनीयः । लोचनानां लोभनीया इति षष्ठीसमासः । मार्जनं मृजा शुद्धिः । षिद्भिदादिभ्योऽङ् । तया, अन्वयो अनुगमो यासां । शुद्ध्यनुगता इत्यर्थः । तत्र स्नेहमिव स्रवन्तीः । ऋजवश्च ता आयताश्च । वितृणान्तरालाः । उत्पाटितानि तृणानि अन्तराले मध्यभागे यासां ताः ॥

**वियोगदुःखानुभवानभिज्ञैः काले नृपांशं विहितं ददद्भिः।**
**आहार्यशोभारहितैरमायैरैक्षिष्ट पुंभिः प्रचितान् स गोष्ठान् १४**

**वियोगेत्यादि** ॥ पुम्भिः गोपैः प्रचितान् व्याप्तान् गोष्ठान् गावस्तिष्ठन्ति येष्विति सुपिस्थ इति कः। अम्बाम्बेत्यादिना मूर्द्धन्यः। तान् स राम ऐक्षिष्ट दृष्टवान्। अनुदात्तेत्त्वात्तङ्। इट्। वियोगदुःखस्य योऽनुभवः अनुभवनं तस्यानभिज्ञैः तेषां पुत्रदारैः सहैव सर्वत्र गमनात्। एतावता कालेन एतावद्देयमिति विहितं कृतम्। दधातेर्हिः। नृपांशं करं ददद्भिः। आहार्या कटकादिभि आहरणीया या शोभा दीप्तिः तया रहितैः। अमायैः ऋजुभिः। आहार्येति ऋहलोर्ण्यत्। शोभयतीति शोभा पचाद्यच्। "ण्यासश्रन्थो युच्" इति युच् न भवति तस्य स्त्रीलिङ्गे भावे अकर्त्तरि च कारके विधानात्। नन्द्यादिपाठात् ल्युर्न भवति तस्य वासरूपोऽस्त्रियामिति विकल्पितत्वात्। अथवा शोभनं शोभा स्त्रीलिङ्गे भावे घञ्। कृत्यल्युटो बहुलमिति बहुलवचनादन्येऽपि कृतः प्राप्तमपि स्वाभिधेयं व्यभिचरन्ति ॥

**स्त्रीभूषणं चेष्टितमप्रगल्भं**
**चारूण्यवक्राण्यपि वीक्षितानि।**
**ऋजूंश्च विश्वासकृतः स्वभावान्**
**गोपाङ्गनानां मुमुदे विलोक्य ॥ १५ ॥**

**स्त्रीभूषणमित्यादि** ॥ गोपाङ्गनानां चेष्टितं गमनागमनादि। अप्रगल्भं लज्जावत्। तच्च स्त्रीविभूषणं स्त्रीणामलङ्कारः। तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिरहितान्यपि चारूणि शोभनानि। स्वभावान् स्वाभिप्रायान् ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् स रामः। लिटोऽपित्त्वात्कित्त्वे गुणाभावः। कार्याणां दर्शनात् स्वभावानां दर्शनमित्युक्तम् ॥

**विवृत्तपार्श्वं रुचिराङ्गहारं समुद्वहच्चारुनितम्बरम्यम्।**
**आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्यमनन्दयत्तम् ॥ १६ ॥**

**विवृत्तेत्यादि** ॥ गोपाङ्गनानां दधिमन्थनाय यत् स्थानं कृतं तत् नृत्यमिवेति गोपाङ्गनानृत्यं कर्तृ तं रामम् अनन्दयत् सन्तोषितवत्। नन्देर्ण्यन्तस्य लङि रूपम्। विवृत्ते तिर्यक् चलिते पार्श्वे यत्र नृत्ये। रुचिरः शोभनोऽङ्गहारोऽङ्गविक्षेपो यत्र। समुद्वहता तिर्यक् समुद्गच्छता चारुनितम्बेन कटिभागेन रम्यं मनोहरम्। आमन्द्र ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र ॥

**विचित्रमुच्चैः प्लवमानमारात् कुतूहलं त्रस्नु ततान तस्य ।**
**मेघात्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणाम् ॥१७॥**

**विचित्रमित्यादि** ॥ मृगाणां कदम्बकं वृन्दं तस्य रामस्य कौतूहलं ततान विस्तृतवत् । विचित्रम् कृष्णश्वेतलान । उच्चैः प्लवमानम ऊर्ध्वं जिहानम । आरात समीपे । त्रस्नु त्रसनशीलम् । त्रसि गृधीत्यादिना क्नुः । मेघात्ययेन मेघापगमेन उपात्तवनोपशोभम् । उपात्तं गृहीतं वनम् उपशोभा च येनेति व्यधिकरणबहुव्रीहिः । वातमजति वातमजम् । वाताभिमुखं गच्छतीत्यर्थः । "वातशुनीतिलशर्धेषु–" इति खश् । अरुर्द्विषदिति मुम् ॥

**सितारविन्दप्रचयेषु लीनाः संसक्तफेणेषु च सैकतेषु ।**
**कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः १८**

**सितेत्यादि** ॥ सितारविन्दानां प्रचयेषु समूहेषु । एरच् । "सङ्घे चानौत्तराधर्ये" इति घञकौ न भवतः प्राणिषु सङ्घशब्दस्य रूढत्वात । लीनाः कलहंसमाला । तथा संसक्तफेणेषु च सैकतेषु पुलिनेषु लीनाः । सिकता येषु विद्यन्त इति । "देशे लुबिलचौ च" इति चकारादण् । कुन्दावदाता कुन्दमिवावदाताः शुक्लाः । "उपमानानि–" इत्यादिना समासः । प्रतीयिरे ज्ञाताः । तेन रामेणेति विभक्तिविपरिणामेन सम्बन्धः । कर्मणि लिट् । इणो यण् । द्विर्वचनेऽचीति स्थानिवद्भावाद्द्विर्वचनम् । श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः । "नौ गद–" इत्यादिना घञ् ॥

शरद्वर्णनमुपसंहरन्नाह—

**न तज्जलं यन्न सुचारु पङ्कजं**
**न पङ्कजं तद्यदलीनषट्पदम् ।**
**न षट्पदोऽसौ न जुगुञ्ज यः कलं**
**न गुञ्जितं तन्न जहार यन्मनः ॥ १९ ॥**

**न तज्जलमित्यादि** । किम्बहुनोक्तेन । सर्वथा न तज्जलं यन् सुचारु पङ्कजं न बभूव । पङ्कजमपि यदलीनषट्पदं तदपि न । असौ षट्पदोऽपि तथाविधो नाभूत् । यः कलं मधुरं न जुगुञ्ज न गुञ्जितवान् । गुजि अव्यक्ते शब्दे । "इदितो नुम् धातोः" इति नुमि लिटि रूपम् । गुञ्जितमपि तत, नैवासीत् यन्मनो न जहार न हृतवत् रामस्य लोकस्य वा ॥

**तं यायजूकाः सह भिक्षुमुख्यैस्तपःकृशा शान्त्युदकुम्भहस्ताः।**
**यायावराः पुष्पफलेन चान्ये प्राणर्चुरर्च्या जगदर्चनीयम्॥२०॥**

**तमित्यादि** ॥ यायजूकाः, अत्यर्थं यजनशीलाः। "यजजपदशां यङः" इत्यूकः। अतोलोपः। "यस्य हलः"। ते तपोवनस्थितास्तं राममागच्छन्तमानर्चुः सुष्ठु पूजितवन्तः। अर्चेर्लिटि द्विर्वचनम्। "अत आदेरिति" दीर्घत्वम्। "तस्मान्नुड् द्विहलः" इति नुट्। सह भिक्षुमुख्यैः। भिक्षणशीला भिक्षवः। परिव्राजकाः "सनाशंसभिक्ष उः"। तेषां ये प्रधानास्तैः सह। तपःकृशाः तपसा दुर्बलाः। शान्त्यर्थमुदकं तेन पूर्णः कुम्भः। "एकलहादौ-" इत्यादिना, उदकस्य उदभावः। स हस्ते येषामिति बहुव्रीहिः। परनिपातश्चात्र वाहिताग्न्यादिदर्शनात्। प्रहरणार्थेभ्य इति वा। शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्यात् उपचारेण प्रहरणम्। ते शिरःसूदकदानेन प्रानर्चुः। अन्ये मुनयो यायावरा एकत्रानियतनिलयाः। यातेर्यङन्तात्। "यश्चयङः" इति वरच्। अतोलोपादि। पुष्पफलेन प्राणर्चुः। पुष्पाणि च फलानि चेति जातिरप्राणिनामित्येकवद्भावः। अर्च्या अर्चनार्हाः। "अर्हेकृत्य-" अर्चनीयमित्यत्रापि। जगतां जगद्भिर्वा, अर्चनीयम्। "कृत्यानां कर्त्तरि वा"। इति पक्षे षष्ठी। नतु "कर्तृकर्म्मणोः कृति" इति षष्ठी॥

**विद्यामथैनं विजयां जयां च**
**रक्षोगणं क्षिप्नुमविक्षतात्मा।**
**अध्यापिपद्गाधिसुतो यथाव-**
**न्निघातयिष्यन् युधि यातुधानान्॥ २१॥**

**विद्यामित्यादि** ॥ तपोवनं प्राप्त., गाधिसुतः, एनं रामं। "द्वितीयाटौ-" इत्येनादेशः। विद्यां नाम्ना विजयां जयां च। यथावत् यथाविधि। अध्यापिपत् पाठितवान्। णौचसंश्चङोरिति गाङभावपक्षे रूपम्। अधिपूर्वादिङो हेतुमण्णिचि "क्रीङ्जीनां णौ" इत्यात्वम्। पुगादिविधयः। रक्षोगणम्। क्षिप्नुं प्रेरयितारम्। त्रसिगृधीत्यादिना क्नुः। नलोकेति षष्ठीप्रतिषेधात् द्वितीयैव। अविक्षतात्मा रागादिभिरनभिभूतचित्तवृत्तिः। तस्य हि विद्या अमोघा भवति। संग्रामे युधि। यातुधानान् रक्षांसि। निघातयिष्यन् मारयिष्यन्। हन्तेर्हेतुमण्णिच्। घत्वं। लट् लटः सदादेशः॥

**आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहाहवाय।**
**ददौ वधाय क्षणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः॥२२॥**

**अयोधन इत्यादि** ॥ स मुनिः तस्मै रामायास्त्रजातम्, अस्त्रसमूहं ददौ दत्तवान् । ददातेर्लिट् । णल् । आत औ णलः । आयुध्यन्ते अस्मिन्निति आयोधनं संग्रामः । अधिकरणे ल्युट् । तत्र स्थायुकं स्थितिकरणशीलम् जयावहत्वात् । लषपतेत्यादिना उकञ् । आतो युक् । अत एवामोघम् अवन्ध्यम् । अवृथामोक्षत्वात् । अभ्यर्णो निकटो महाहवो यस्य तस्मै । अभिपूर्वादर्देर्निष्ठायाम्, "अभेश्चाविदूर्ये" इतीट्प्रतिषेधः । रदाभ्यामिति नत्वम् । अभ्यर्णः । आहव इति आह्वयन्ते अस्मिन्युद्धायेति ह्वयतेराङ्पूर्वात् "आङि युद्धे" इति सम्प्रसारणम् । अप्प्रत्ययः । गुणावादेशौ । वधाय क्षणदाचराणामिति क्षणदा रात्रिः तत्र चरन्तीति चरेष्टः । तत्र हि महाहवे रामो राक्षसान् हनिष्यतीति । "हनश्च वधः" इति वधादेशः । कृद्योगे क्षणदाचराणामिति कर्मणि षष्ठी । श्रेयसि जागरूकः तत्कल्याणे सावधानः जागर्तेरूकः ॥

**तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके ।**
**जिघांसुवेदं धृतभासुरास्त्रस्तां ताडकाख्यां निजघान रामः ॥ २३ ॥**

**तमित्यादि** ॥ विद्यामस्त्रजातं चादाय यज्ञकर्मणि विघ्नोपशमनार्थं वने यान्तं रामम् रात्रिचरी राक्षसी ताडकाभिधाना डुढौके ढौकते स्म । ढौकतेरात्मनेपदिनो लिटि रूपम् । ताञ्च रामो निजघान निहतवान् । विप्रदर्शं कृतघातयत्ना विप्रान् ब्राह्मणान् दृष्ट्वा कृतमारणाभियोगा रात्रिचरी । रामोऽपि जिघांसुवेदं धृतभासुरास्त्रः । जिघांसुं विदित्वा धृतं भासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः । विप्रदर्शं जिघांसुवेदमिति "कर्मणि दृशिविदोः साकल्ये" इति णमुल् ॥

**अथालुलोके हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् ।**
**तपोवनं प्राध्ययनाभिभूतसमुच्चरच्चारुपतत्रिशिञ्जम् ॥ २४ ॥**

**अथेत्यादि** ॥ अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान् । कथम्भूतम् । हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् । हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः । तस्य शिखाञ्जनेन स्निग्धाः समृद्धाश्च फलादिना शाखा यस्य तपोवनस्य । प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्वी शोभना पतत्रिणां पक्षिणां शिञ्जा ध्वनिर्यत्र । शिजि अव्यक्ते शब्दे । शिञ्जनं शिञ्जा "गुरोश्च हलः" इत्यकारप्रत्ययः । पतन्तं त्रायन्त इति पतत्राणि पक्षाः । आतोऽनुपसर्गे कः । तानि येषां सन्तीति पतत्रिणः । पतङ्गशिञ्जमिति पाठान्तरम् ॥

**क्षुद्रान्न जक्षुर्हरिणान् मृगेन्द्रा विशश्वसे पक्षिगणैः समन्तात् ।**
**नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः ॥ २५ ॥**

**क्षुद्रानित्यादि** ॥ तत्र तस्मिंस्तपोवने तपोधनानां मित्रभावात् क्षुद्रानितरानपि हरिणान्मृगेन्द्राः सिंहाः न जक्षुः न बाधितवन्तः । क्षुद्यन्त इति क्षुद्राः । स्फायितञ्चीत्यादिना औणादिको रक् । लिट्यन्यतरस्यामिति अदेर्घस्लृ । गमहनेत्युपधालोपः । खरि चेति चर्त्वम् । "शासिवसि–" इत्यादिना षत्वम् । पक्षिगणैः समन्तात्सर्वत्र विरुद्धैरपि काकोलूकादिभिः परस्परं विशश्वसे विश्वस्तम् । भावे लिट् । लताश्च विलोलाश्चपलाश्चकाशिरे शोभन्ते स्म । फलदित्सयेव मुनिभ्यः फलं दातुमिच्छयेव नन्नम्यमानाः अत्यर्थनमन्त्यः । दातुमिच्छा दित्सा । ददातेः सन् । सनिमीमेत्यादिना इस् । "अत्र लोपोऽभ्यासस्य" इति अभ्यासलोपश्च । सस्येत्यादिना सकारस्य तकारः । "अप्रत्ययात्" इत्यकारप्रत्ययः । फलानां दित्सेति कर्म्मणि षष्ठी विधाय कृद्योगे समासः । नन्नम्यमाना इति नमेर्यङि "नुगतोऽनुनासिक–" इति नुक् । यङन्ताच्छानच् । आने मुक् ॥

**अपूपुजन्विष्टरपाद्यमाल्यैरातिथ्यनिष्णा वनवासिमुख्याः ।**
**प्रत्यग्रहीष्टां मधुपर्कमिश्रं तावासनादि क्षितिपालपुत्रौ ॥ २६ ॥**

**अपूपुजन्नित्यादि** ॥ वनवासिमुख्याः महर्षयो विष्टरादिभिः अपूपुजन् पूजितवन्तः । तौ क्षितिपालपुत्रावित्यर्थात् द्वितीयान्तेन योज्यम् । वनवासीति "शयवास–" इत्यादिना विकल्पेन सप्तम्या अलुक् । पूजेः स्वार्थिकण्यन्तस्य णौ चङि ह्रस्वः । "दीर्घो लघोः" इति अभ्यासस्य दीर्घः । विष्टरमासनम् । "वृक्षासनयोर्विष्टरः" इति निपातनात् । पाद्यं पादार्थमुदकम् । "पादार्घाभ्याम्" इति यत् । तदर्थत्वात्पद्भावाभावः । माल्यानि कुसुमानि । मालायां साधूनि । "तत्र साधुः" इति यत् । आतिथ्यनिष्णाः । अतिथ्यर्थम् आतिथ्यम् । "अतिथेर्ञ्यः" । तत्र निष्णाः कुशलाः । "निनदीभ्यां स्नातेः कौशले" इति षत्वम् । तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदासनादि प्रत्यग्रहीष्टां प्रतिगृहीतवन्तौ । प्रतिपूर्वात् ग्रहेर्लुङ् । तसस्ताम् । ग्रहोलिटि इति दीर्घः । षत्वष्टुत्वे । मधुपर्कमिश्रम् मधुपर्केण सहेत्यर्थ ॥

**दैत्याभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारम् ।**
**हवींषि संप्रत्यपि रक्षतं तौ तपोधनैरित्थमभाषिषाताम् ॥२७॥**

**दैत्येत्यादि** ॥ दितेरपत्यानि दैत्याः । "दित्यदित्या–" इत्यादिना ण्य. । तैरभिभूतस्य मग्नस्य शरण्यस्य भुवनस्य भारमितिकर्त्तव्यतालक्षणं दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ । नरनारायणौ युवामित्युक्तौ । त्वं च त्वं चेति एकशेषः । अवोढमिति वहेर्लुङ् । थसस्तम् । हलन्तलक्षणा वृद्धिः । सिज्लोप । सहिवहोरित्योत्वम् । ढत्वष्टुत्वढलोपाः । दोरिति दमेर्डोसिरित्यौणादिको डोस् । हवींषि होतव्यानि । सम्प्रत्यपि रक्षतम् । अर्चिरुचिहुसृ-

पिच्छादिच्छदिभ्य इसिरित्यौणादिक इसि । राक्षसैरुपहन्यमानानि रक्षतम् । प्रार्थनायां लोट् । शप् । थसस्तम् । इत्थमिति "इदमस्थमु"। अनेनोक्तप्रकारेण । तपोधनैस्तप एव धनं येषामिति । अभाषिषाताम् अभिहितौ । भाषते· कर्मणि लुङ । सिजिटौ ॥

**तान् प्रत्यवादीदथ राघवोऽपि यथेप्सितं प्रस्तुत कर्म धर्म्यम् ।**
**तपोमरुद्भिर्भवतां शराग्निः संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥ २८ ॥**

**तानित्यादि** ॥ अथैतस्मिन् प्रस्तावे राघवोऽपि रघुसुत तान्मुनीन प्रत्यवादीत् । वदव्रजेति वृद्धिः । यथेप्सितं यथाभिमतम् । आप्नोतेः "आप ज्ञप्यृधामीत्" इतीत्वम् अभ्यासलोपश्च । सन्नन्तात्कर्मणि निष्ठा । धर्मादनपेतं धर्म्यम यागादि कर्म । प्रस्तुत प्रारभध्वम् । प्रपूर्वः स्तौतिः प्रारम्भे वर्त्तते । तस्मान्निमन्त्रणे नियोगकरणे लोट् । थस्य तः । शपो लुक् । तपांसि मरुत इव तपोमरुद्भिः । भवतां तपोमरुद्भिर्नोऽस्माकम् । "बहुवचनस्य वस्नसौ" इति नसादेशः । शराग्निः शरोऽग्निरिव । संधुक्ष्यतां दीप्यताम् । धुक्षधिक्षसन्दीपनक्लेदनजीवनेषु । तस्मात्कर्मणि लोट् । अरिसमिन्धनेषु अरिकाष्ठेषु । समिध्यते एभिरिति समिन्धनानि । करणे ल्युट् । अरयः समिन्धनानीव ॥

**प्रतुष्टुवुः कर्म ततः प्रक्लृप्तैस्ते यज्ञियैर्द्रव्यगणैर्यथावत् ।**
**दक्षिण्यदिष्टं कृतमार्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत् ॥ २९ ॥**

**प्रतुष्टुवुरित्यादि** ॥ ततो रामवचनादनन्तरं तपोधनाः कर्म यागक्रियां प्रतुष्टुवुः । यथावत् यथाविधि प्रारब्धवन्तः । यज्ञियैः यज्ञकर्मार्हैः द्रव्यगणैः प्रक्लृप्तैः मिलितैः । "कृपो रो लः" । दक्षिणामर्हतीति दक्षिण्याः महामुनयः । "कडङ्करदक्षिणाच्छ च" इति चकाराद्यत् । तैर्दिष्टमुक्तम् । कृतमार्त्विजीनैः । ऋत्विक्कर्मार्हैरनुष्ठितम् । ऋत्विजश्च अष्टादश षोडश पठिताः । तच्च कर्म प्रसर्पत् वृद्धिं गच्छत् । यातुधानै राक्षसैः चिचिते ज्ञातम् । चिती संज्ञाने, इत्यस्मात् कर्मणि लिट् । यज्ञियैरार्त्विजीनैरिति "यज्ञर्त्विग्भ्यां घखञौ" इति तत्कर्मार्हतीति ॥

**आपिङ्गरूक्षोर्ध्वशिरस्यबालैः शिरालजंघैर्गिरिकूटदघ्नैः ।**
**ततः क्षपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चानशेऽब्दैः ॥ ३० ॥**

**आपिङ्गेत्यादि** ॥ ततः कर्मप्रवर्त्तनादनन्तरम् । क्षपाटैः निशाचरैः । अटन्तीत्यटाः । पचाद्यच् । क्षपायामटा इति । सप्तमीति योगविभागात् समासः । खमाकाशमानशे व्याप्तम् । अश्नोतेः कर्मणि लिट् । "अश्नोतेश्च" इति नुट् ॥ शिरसि जाताः शिरस्याः । शरीरावयवाद्यत् । आपिङ्गा आसमन्तात् पिङ्गा विद्युदिव । रूक्षाः सूक्ष्माः ऊर्ध्वशिरस्या बाला येषां तैः । अन्योऽपि शिरस्यो भवति इति बालग्रहणम् । अमङ्गलसा-

ला इत्यर्थः । शिराः सन्ति यासामिति "प्राणिस्थादातो लजन्यतरस्याम्" इति लच् । शिराला जङ्घा येषां तैः । गिरिकूटदघ्नैर्गिरिकूटप्रमाणैः । "प्रमाणे द्वयसच्—" इति दघ्नच् । पृथूनि विस्तीर्णानि पिङ्गलानि चाक्षीणि येषां तैः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । प्रावृषेण्यैरिवेति प्रावृष एण्यः । अब्दैर्मेघैः कृष्णसाधर्म्यात् । अपो ददतीति अब्दाः । चकारः पादपूरणार्थः ॥

**अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताक्षोऽञ्चितदक्षिणोरुः ।**
**तान् लक्ष्मणः सन्नतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी ॥३१॥**

**अधीत्यादि** ॥ तान् क्षपाटान् गगनस्थान् लक्ष्मणो जघान हतवान् । कीदृशः अधिज्यचापः । अध्यारूढा उत्कलिता ज्या गुणो यस्य चापस्य तदधिज्यम् । प्रादिभ्यो धातुजस्येति समासः । अधिज्यं चापो यस्य लक्ष्मणस्य । स्थिरो निश्चलो बाहुर्मुष्टिश्च यस्य । उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः । आकाशस्थापितदृष्टिरित्यर्थः । अञ्चितः सङ्कोचितो दक्षिणोरुर्येन सोऽञ्चितदक्षिणोरुः । अञ्चेः पूजायामितीटोऽनुत्पन्नत्वात् ण्यन्तस्य रूपम् । न चात्र पूजा गम्यते किन्तु गतिविशेष एव । अनुषङ्गलोपोऽपि न भवति णिलोपस्य स्थानिवद्भावात् । समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः । शुद्धेषुः निशितबाणः । अमन्दमत्यन्तं क्रष्टुं शीलमस्यासावमन्दकर्षी । कर्णान्ताकृष्टचाप इत्यर्थः ॥

**गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्रचुञ्चुः ।**
**स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ॥३२॥**

**गाधेयेत्यादि** ॥ गाधेरपत्यं गाधेयो विश्वामित्रः । व्यच इत्यनुवर्त्तमाने इतश्चानिञ इति ढक् । तेन दिष्टं कथितं मारीचं नाम राक्षसं रामो जगाद गदितवान् । रसन्तम् वदन्तम् । विरसमश्राव्यमिति क्रियाविशेषणम । मायाचणं मायया वित्तम् । अस्त्रचुञ्चुः अस्त्रैः प्रतीतो रामः । तेन वित्तश्चुञ्चुप्चणपाविति । स्थास्नुं रणे स्थितिशीलम् । तस्य सेनापतित्वात् । स्मेरमुखः चित्तस्याक्षोभादीषद्धसनशीलवदनः । नमिकम्पीत्यादिना रः । उच्चैस्तरां जगादेति क्रियाविशेषणम् । वचनं वक्ष्यमाणं महार्थं प्रधानार्थम् । ब्रुविशासीत्यत्र ब्रुवीत्यर्थग्रहणाद्द्विकर्मकता । मारीचं वचनं च ॥

**आत्मम्भरिस्त्वं पिशितैर्नराणां फलेग्रहीन् हंसि वनस्पतीनाम् ।**
**शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मात् ॥३३॥**

**आत्मेत्यादि** ॥ नराणां पिशितैर्मांसैः आत्मानं बिभर्षि पुष्णासि । नान्यदपि शा-

रीरस्थितिहेतुर्भवतीति भावः । स त्वमात्मम्भरिः आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनां तान् फलेग्रहीन् फलाशिनो मुनीन् हंसि मारयसि । शपो लुक् । फलेग्रहिरात्मम्भरिश्चेति निपातितौ । श्वोभवितारः शौवस्तिकाः । श्वसस्तुट्चेति ठञ् तुडागमश्च । द्वारादित्वादैजागमः । शौवस्तिकत्वं तद्येषां विभवा न व्रजन्ति तेषामश्वस्तनिकवृत्तीनां कस्मान्न दयसे न रक्षसि । अधीगर्थदयेशामिति कर्मणि षष्ठी ॥

**अद्मो द्विजान् देवयजीन्निहन्मः कुर्मः पुरं प्रेतनराधिवासम् ।**
**धर्मो ह्ययं दाशरथे निजो नो नैवाध्यकारिष्महि वेदवृत्ते ॥ ३४ ॥**

**अद्म इत्यादि** ॥ राक्षस प्राह । द्विजान् ब्राह्मणक्षत्रियवैश्यान् अद्मो भक्षयामः । देवयजीन् देवान् यजन्ति आराधयन्ति ये तान्निहन्मः । अत्र उणिन्प्रत्ययवर्त्तमाने सर्वधात्वादिषूह्यमानेष्वौणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथापि यजेरिः प्रकृतेश्च तदर्थामिति वचनात् । जासिनिप्रहणेत्यत्र सङ्घातविगृहीतविपर्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति । कर्मणः शेषत्वेनाविवक्षितत्वात् । पुरं नगरं प्रेतनराणां मृतनराणाम् । अधिवासमवस्थानं कुर्मः । नित्यहननेन स्मशानतुल्यमित्यर्थः । कस्मादेवमित्याह । धर्म इति । दशरथस्यापत्यं दाशरथिः । अत इञ् । हे दाशरथे । हि यस्मादर्थे वर्तते । यस्मादयं धर्म आचारः । निजो नित्यः । न इत्यस्माकम् । वेदविरुद्ध इति चेत् नैवाध्यकारिष्महि वेदवृत्ते । वेदविहितं वृत्तमिति मध्यमपदलोपी समासः । यद् ब्राह्मणानामुक्तमनुष्ठानं तत्र वयं नैवाधिकृता इत्यर्थः । अधिपूर्वात्करोतेः कर्मणि लुङ् । स्यसिजित्यादिना चिण्वदिट् ॥

**धर्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः ।**
**ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्मुकेषुः ॥ ३५ ॥**

**धर्म इत्यादि** ॥ रामः प्राह । हे राक्षस रक्ष एव राक्षसः प्रज्ञादित्वादण् । स्वार्थिका अतिवर्तन्त इति पुंलिङ्गता । तवायं पूर्वोक्तः परहिंसाद्रोहलक्षणो धर्मोऽस्तीति सत्यमेतत् किन्तु ममापि रामस्य अन्यो धर्मोऽशिष्टनिग्रहलक्षणो व्यतिस्ते । व्यतिभवते इदमुक्तं भवति यद्यप्येवंप्रकारस्त्वद्धर्मो भविष्यति तथापीदानीमेव या त्वद्धर्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्मेणैव निष्पादकत्वेन व्यतिस्ते । ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनीमितर इति कर्मव्यतीहारसम्भवात् अस्तेः कर्मव्यतीहारे तङ् । तथाहि यो यदवसरे यां कांचित् क्रियां करोति स तत्क्रियाकारीत्युपचाराल्लोक उच्यते । येन धर्मेण हेतुना ब्रह्मद्विषस्ते प्रणिहन्मि मारयामि स व्यतिस्ते इति योज्यम् । नेर्गदेत्यादिना णत्वम् । जासिनीत्यादिना कर्मणि षष्ठी । तथा कथं तव

धर्म इति चेदाह राजन्यवृत्तिरिति । क्षत्रियवृत्तिः । ततो राज्ञोऽपत्यम् । राजश्वशुराद्यत् । ये चेति प्रकृतिभावः । धृतं कार्मुकम् इषवश्च येन सः। यतः अहं राजन्यवृत्तिः ततोऽहं धृतकार्मुकेषुरिति। धृतकार्मुकेष्विति पाठान्तरम् । क्व राजन्यवृत्तिः सायुधेष्वित्यर्थः ॥

**इत्थंप्रवादं युधि संप्रहारं प्रचक्रतू रामनिशाविहारौ ।**
**तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत् ॥ ३६ ॥**

**इत्थमित्यादि** ॥ इत्थम् अनेन प्रकारेण प्रवादः अन्योन्याभिघातो यत्र संप्रहारे तं संप्रहारं परस्पराभिभवलक्षणं प्रकृतवन्तौ । युधि रणभूमौ । युध्यन्ते अस्यामिति । सम्पदादित्वादधिकरणे क्विप् । रामनिशाविहारौ । रामो निशाविहारो निशाचरो मारीचश्चेत्यर्थः । निशायां विहारो यस्येति समासः। अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो मारीचं बाणेन तत्सम्बन्धिधनिसत्यपि तृणाय मत्वा तृणमपि नावमत्य । मन्यकर्मण्यनादर इति चतुर्थी । तत्र प्रकृष्टकुत्सितग्रहणं कर्तव्यम् । इह माभूत् तृणं मत्वेति । प्रधनात् संग्रामात् निरास्थत् अपनीतवान् ॥

**जग्मुः प्रसादं द्विजमानसानि द्यौर्वर्षुका पुष्पचयं बभूव ।**
**निर्व्याजमिज्या ववृते वचश्च भूयो बभाषे मुनिना कुमारः ३७**

**जग्मुरित्यादि** ॥ यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि मनांस्येव मानसानि प्रज्ञादित्वादण् । प्रसादम् अव्याकुलत्वं जग्मुः गतानि । गमहनेत्युपधालोपः । द्यौः पुष्पचयं वर्षुका वर्षणशीला बभूव भवति स्म । लषपतपदेत्यादिना उकञ् । नलोकेति षष्ठीप्रतिषेधः । निर्व्याजं निर्विघ्नम् । इज्या यागः । व्रजयजोर्भावे क्यप्। ववृते वृतः लिट् । भूयः पुनरपि मुनिना गाधेयेन । कुमारः रामः।अकृतदारकर्मत्वात् । वचो वक्ष्यमाणं बभाषे । कर्मणि लिट् । ब्रुवीत्यर्थग्रहणात् द्विकर्मकता वचः कुमारश्च ॥

**महीय्यमाना भवतातिमात्रं सुराध्वरे घस्मरजित्वरेण ।**
**दिवोऽपि वज्रायुधभूषणाया ह्रिणीयते वीरवती न भूमिः॥३८॥**

**महीत्यादि** ॥ भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना । अतिमात्रं सुष्ठु सम्यक् पालनाद्दिवोऽपि स्वर्गस्य न ह्रिणीयते न लज्जते किन्तु प्रतिस्पर्धत इति भावः। ह्रिणीं महीङिति कण्ड्वादिपाठाद्यक् । ङित्वात्तङ् । अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति महीयशब्दात्कर्मणि लकारः । शानच् यक् । अतो लोपः। मुक् । महीय्यमानेति रूपम् । सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र । ये घस्मराः अदनशीलाः राक्षसाः । सृघस्यदः क्मरच् । तेषां जित्वरेण जयशीलेन भवता । इण्नशजी-

त्यादिना क्यप् । वज्रायुधभूषणायाः । शक्र एवालङ्कारो यस्याः । क्विप् । वीरवती त्वद्विधो वीरो यस्यां भूमाविति ॥

संक्षेपेण स्तुतिमाह—

**बलिर्बबन्धे जलधिर्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये ।**
**कल्पांतदुःस्था वसुधा तथाहि येनैष भारोऽतिगुरुर्न तस्य ३९**

**बलिरित्यादि** ॥ येन भवता बलिर्बबन्धे बद्धः । जलधिर्ममन्थे मथितः । मन्दरं दोर्भिर्गृहीत्वा । मन्थविलोडन इत्यस्य रूपम् । सयोगांतत्वाल्लिटोऽकित्वे अनुनासिकलोपो न भवति । जह्रेऽमृतम् । स्त्रीरूपधारिणा । दैत्यबलं विजिग्ये विजितमनेकधा । सन लिटोर्जेरिति कुत्वम् । एरनेकाच इति यणादेशः । तथा कल्पान्ते प्रलये दुःस्था दुःस्थिता वसुधा पृथिवी । ऊहे उद्धृता । वराहरूपिणा । वहेर्यजादित्वात सम्प्रसारणम् । तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुर्न भवति । सर्वत्र कर्मणि लिट् ॥

**इति ब्रुवाणो मधुरं हितं च तमाञ्जिहन्मैथिलयज्ञभूमिम् ।**
**रामं मुनिः प्रीतमना मखान्ते यशांसि राज्ञां निजिघृक्षयिष्यन् ४०**

**इतीत्यादि** ॥ इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितंच ब्रुवाणः अभिदधानः । लक्षणहेत्वोरिति शानच् । मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं रामं मैथिलस्य यज्ञभूमिं आञ्जिहत् गमितवान् । मिथिलानां राजेति जनपदशब्दात् क्षत्रियादञित्यत्र तस्य राजन्यपत्यवदित्यतिदेशादञ् । अंहिगतौ । इदितो नुम् । प्रयोजकव्यापारे णिच् । लुङ् । आट् । चङि णिलोपः । द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् । नन्द्रा इति नकारस्य प्रतिषेधः । अभ्यासकार्यम् । आञ्जिहदिति रूपम् । राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् । ग्रहेः सन् । सनि ग्रहगुहोश्चेति इट्प्रतिषेधः । द्विर्वचनादि । रुदविदेत्यादिना सन किन्त्वम् । ग्रहिज्येत्यादिना सम्प्रसारणम् । ढत्वभष्भावौ । गकारस्य घकारः । कत्वषत्वे । पश्चाण्णिच् । तदन्ताद्भविष्यत्सामान्यविवक्षायां लृट् । तेन भविष्यदनद्यतने लुङ् न भवति ॥

**इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू ।**
**जनं समस्तं जनकाश्रमस्थं रूपेण तावौजिहतां नृसिंहौ ॥ ४१ ॥**

**इत इत्यादि** ॥ एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव । जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्ककारितवन्तौ । सिंहाविव । ऊहवितर्के इत्यस्माद्धातोः ण्यन्तात् कर्तुः क्रियाफलाविवक्षायां णिचश्चेति तङ् न भवति । चङि णिलोपस्य स्था-

निवद्भावात् । अजादेर्द्वितीयस्येति द्विर्वचनम् । ऊहमाह । मित्रावरुणौ आदित्यवरुणौ । देवताद्वन्द्वे चेत्यानङ् । तयोर्महानुभावत्वात् सोमरसं पिपासू पातुमिच्छू । न लोकेति षष्ठी-प्रतिषेधः । एतावागतौ । आङ् पूर्वस्येणो निष्ठायां रूपम् । किमश्विनौ अश्विनीकुमारौ सोमरसं पिपासू । एनाविति । एवं जनम् औजिहताम् । सुशब्दपाठे एतौ सुमित्रेति पाठः । एतौ स्म मित्रेति स्मशब्दो निपात पादपूरणार्थ ॥

**आजिग्रहत्तं जनको धनुस्तद्येनार्दिदद्दैत्यपुरं पिनाकी ।**
**जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥४२॥**

**अजिग्रहदित्यादि ॥** येन धनुषा दैत्यपुरं पिनाकी महादेव आर्दिदत् हिसितवान् । अर्देः स्वार्थिकण्यन्तात् चङि अजादेर्द्वितीयस्येति दिशब्दो द्विरुच्यते । रेफस्य प्रतिषेध । तद्धनु तं रामं जनक अजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरंदधमिति । ग्रहेर्हेतुमण्ण्यन्ताच्चङि णिलोप. णौ चङि ह्रस्वः । सन्वद्भावादित्वम् । ग्रहेश्च बुद्ध्यर्थत्वात् गतिबुद्धीत्यादिना रामस्य कर्मसंज्ञा । अस्य रामस्य बाह्वोर्भुजयोर्बलं जिज्ञासमानो जनकः । एवंभूतं धनुः हसन् स्मयमानो रघुनन्दनो राम अभाङ्क्षीत् भग्नवान् । भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः । तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम् ॥

**ततो नदीष्णान् पथिकान् गिरिज्ञानाह्वायकान् भूमिपतेरयोध्याम् ।**
**दित्सुः सुतां योधहरैस्तुरङ्गैर्व्यसर्जयन्मैथिलमर्त्यमुख्यः ॥ ४३ ॥**

**तत इत्यादि ॥** धनुर्भङ्गादनन्तरं महानयमिति ज्ञात्वा जनक. सुतां दुहितरं दित्सुः दातुमिच्छु । ददाते. सनिमीमेत्यादिना अच इस् । द्विर्वचनम् । अत्रलोप इत्यभ्यासलोप. । सस्येति तत्वम् । सनाशंसभिक्ष उ. । भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्तरि ण्वुल् । आतो युक् । कृत्प्रयोगे भूमिपतौ कर्मणि षष्ठी । तान् अयोध्यां व्यसर्जयत् । विसर्जितवान् । विपूर्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपम् । गत्यर्थत्वात् द्विकर्मकता । नद्यां स्नान्तीति नदीष्णा । सुपि स्थ इति योगविभागात्कः । आतो लोपः । निनदीभ्यां स्नातेरिति षत्वम् । नदी तरीतुं कुशलानित्यर्थः । पथिकान् पथि कुशलान् । तत्र कुशलः पथ इति ठक् । गिरिज्ञान् । यथाप्रदेशं गिरिज्ञान् । इगुपधेत्यादिना क । तुरङ्गैः अश्वै करणभूतै । युध्यन्त इति योधाः । पचाद्यच् । तानाहर्तुं क्षमै । वयसि चेत्यच् । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्नित्यौणादिकस्तन् । म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः । तत्र भवा मर्त्या मनुष्या दिगादेराकृतिगणत्वात् यत् । आकृतिगणत्वस्य लिङ्गं देवमनुष्यपुरुषपुरुमर्त्येभ्य इति निर्देशः । मुखमेव मुख्यः प्रधानम् ।

शाखादिभ्यो यः । मर्त्यानां मुख्यो मर्त्यमुख्यः । मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषण-समासः । जनक इत्यर्थः ॥

**क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्वृद्धतमोऽपि राजा।**
**आख्यायकेभ्यः श्रुतसूनुवृत्तिरग्लानयानो मिथिलामगच्छत्॥२४॥**

**क्षिप्रमित्यादि** ॥ आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता सूनु-वृत्तिर्येन स राजा दशरथः । सूयत इति सूनुः पुत्रः । दाभाभ्यां नुरिति वर्तमाने सुवः किच्चेत्यौणादिको नुप्रत्ययः । ततोऽनन्तरमेव क्षिप्रं शीघ्रम् । स्फायितञ्चीत्यादिना रक् । क्रियाविशेषणं चैतत् । मिथिलामगच्छत् । भरतशत्रुघ्नाभ्यां सहेत्यर्थादनुसक्तव्यम् । गमेर्लङि इषुगमियमां छः । अध्वानम् अलंगामिनो ये तुरङ्गा अश्वास्ते अध्वन्याः । अलंगामीत्यस्मिन्नर्थे अध्वनो यत् खाविति यत् । ये चाभावकर्मणोरिति प्रकृतिभावः । तैः साधु यातीति साधु कारिणि णिनिः । अध्वन्यतुरङ्गयायी । एवंच कृत्वा अग्लानयानः न विद्यते ग्लानं ग्लानिर्यस्मिन्याने तत् अग्लानं अग्लानं यानं यस्य तादृशैस्तुरङ्गैः सुगम यानं । ग्लानेति भावे निष्ठा । संयोगादेरात इति नत्वम् । वृद्धतमोऽपि यविष्ठवत् । युवशब्दस्येष्ठनि स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वस्य च गुणः । यविष्ठेन तुल्यम् इति वतिः ॥

**वृन्दिष्ठमार्चीद्वसुधाधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठम् ।**
**सदृङ्महान्तं सुकृताधिवासं बंहिष्ठकीर्त्तिं यशसा वरिष्ठम् ॥२५॥**

**वृन्दिष्ठमित्यादि** ॥ तं राजानमेतमायातं जनक आर्चीत् पूजितवान् । अर्चेर्लुङि रूपम् । वृन्दिष्ठं वृन्दारकतमं प्रशस्ततममित्यर्थः । केषां वसुधाधिपानां पृथ्वीपतीनाम् प्रेष्ठं प्रियतमम् । गुरुवत् गुरुणा तुल्यं वर्तमानं गरिष्ठम् गुरुतमम् । सदृक् समानान्य-योश्चेत्युपसंख्यानाद् दृशेः क्विप् । रूढिशब्दश्चायम् । नात्र दर्शनक्रिया विद्यते । अभिज्ञ नादिभिस्तुल्यो जनक इत्यर्थः । महान्तं महानुभावं सदृशां मध्ये महत्तमम् । सुकृताधि वासं सुकृतनिलयम् । अधिवसत्यस्मिन्निति अधिकरणे घञ् । बंहिष्ठा बहुलतमा कीर्ति र्यस्य स बंहिष्ठकीर्तिः । यशसा वरिष्ठं गुरुतमम् । अत्र वृन्दारकप्रियगुरुबहुलोरूणा मिष्ठनि यथासंख्यं प्रियस्थिरेत्यादिना वृन्दप्रगर्बंहवर इत्येते आदेशा भवन्ति ॥

**त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।**
**विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे॥२६॥**

**त्रिवर्गेत्यादि** ॥ तं दशरथं मैथिलो जनकः वाक्यमिदं बभाषे । ब्रुवीत्यर्थग्रहणात्

द्विकर्मकता । किं तद्वाक्यमित्याह । असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विवेकदृश्वत्वमगादिति संबन्धः । आसनस्याधिशीङित्यादिना अधिकरणे कर्मसंज्ञा । भवन्तमिति गतिबुद्धीत्यादिना आस्तेरण्यन्तावस्थायामकर्मकत्वात् । पारंगमी त्वस्मिन्वाक्ये अवारपारेत्यादिना पारशब्दात् ख । तत्र विगृहीतविपर्यस्तग्रहणात् । त्रिवर्गस्य धर्मार्थकामस्य पारीणमिति षष्ठीसमासः । त्रिवर्गपारीणं भवन्तम् । सुराणां मध्ये स एवैको विवेकदृश्वत्वं विवेकज्ञतामगात् । इणोगा लुङि । गातिस्थेत्यादिना सिचो लुक् । विवेकं दृष्टवानिति दृशेः क्वनिप् ॥

**हिरण्मयी साललतेव जङ्गमा**
**च्युता दिवः स्थास्नुरिवाचिरप्रभा ।**
**शशाङ्ककान्तेरधिदेवताकृतिः**
**सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥**

**हिरण्मयीत्यादि** ॥ तस्य दशरथस्य सुताय रामाय । सूयत इति सुतः । षुप्रसवैश्वर्ययोरित्यस्मात् कर्मणि निष्ठा । सुता मैथिली सीता ददे जनकेनेत्यर्थात् । कर्मणि लिट् । मैथिलस्यापत्यं अतइञ् । तदन्तादितो मनुष्यजातेरिति ङीप् । रामस्य ज्येष्ठत्वात्तस्यैव कविना परिणय उक्तः न शेषाणाम् । तेन अन्या अपि तदैव दुहितरो दत्ताः । हिरण्मयी सुवर्णनिर्मितेव साललता वृक्षलता सुवर्णच्छवित्वात् तस्याः । हिरण्यविकार इति मयटि दाण्डिनायनेत्यादिना यलोपनिपातनम् । जंगमा संचारिणी नतु स्थावरा । अत्यर्थं गच्छतीति यङि नुगत इति नुक् । यङन्तात्पचाद्यचि यङोऽचिचेति यङो लुक् । च्युता दिवः आकाशात्पतिता । अचिरप्रभेव विद्युदिव तेजस्वित्वात् तन्वीत्वाच्च । किन्तु स्थास्नुरचञ्चला । सा तु चञ्चलेति व्यतिरेकः । ऊदुत इति ऊङ् न भवति क्रियाशब्दत्वात् । तत्र मनुष्यजातेरिति वर्तते । शशाङ्ककान्तेर्याधिदेवता अधिष्ठात्री देवता तस्या आकृतिर्यस्याः । सौम्यत्वात् । आक्रियते अनयेत्याकृतिः संस्थानम् । अकर्तरि कारकेति स्त्रियां क्तिन् ॥

**लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ रामः ।**
**सद्रत्नमुक्ताफलभर्मशोभां संबंहयन्तीं रघुवर्ग्यलक्ष्मीम् ॥ ४८ ॥**

**लब्धामित्यादि** ॥ ततो दानानन्तरम् लब्धां तामात्मनीनाम् आत्मने हिताम् । आत्मन्विश्वेति खः । रामः उदवोढ । वहे स्वरितेत्त्वात्कर्तृक्रियाफलविवक्षया तङ् । विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्तिर्यस्य रामस्य सः । पूर्ववत् खः । सती उ-

त्कृष्टा रत्नादिशोभा यस्या । तैरलंकृतत्वात् । तां सद्रत्नमुक्ताफलभर्मशोभाम् । भर्म स्वर्णम् । सर्वधातुभ्यो मनिन् । भर्मभूषामिति पाठान्तरम् । सद्रत्नादिभूषा अलंकारो यस्या इति योज्यम् । गुरोश्च हल इत्यकारः । संबंहयन्ती संबहुलामतिस्थिरां कुर्वाणाम् । बहुलशब्दात्तत्करोतीति णिचि इष्ठवद्भावात् प्रियस्थिरेत्यादिना बंहादेश. । पश्चात्तदन्तस्य संपूर्वस्य साधनेन योगः । कामित्याह । रघुवर्ग्यलक्ष्मीमिति । रघुवर्गे भवां विभूतिं । वर्गान्ताच्चेत्यनुवृत्तौ अशब्दे यत्खावन्यतरस्यामिति यत् ॥

**सुप्रातमासादितसंमदं तद्वन्दारुभिः संस्तुतमभ्ययोध्यम् ।**
**अश्वीयराजन्यकहास्तिकाढ्यमगात्सराजं बलमध्वनीनम् ४९**

**सुप्रातेति** ॥ विवाहं निर्वर्त्य प्रभाते अयोध्याभिमुखं तद्बलं दशरथस्यागात गतवत् । सुप्रातं निरुपद्रवत्वात् । शोभनं प्रातर्दिनमुखं यस्य बलस्य । सुप्रातसुश्वेत्यादिना समासान्तष्टिलोपश्च निपात्यते । आसादितसंमदं प्राप्तहर्षम् । " प्रमदसंमदौ हर्षे " इति निपातनम् । वन्दारुभिः संस्तुतं कृतस्तवम् । अभ्ययोध्यम् । अयोध्याभिमुखम् । "अभिप्रती आभिमुख्ये " इति अव्ययीभाव । अश्वानां समूहो अश्वीयम् । केशाश्वाभ्यां यञ्छाविति छ । राजन्यानां क्षत्रियाणां समूहो राजन्यकम् । गोत्रोक्षेत्यादिना वुञ् । "प्रकृत्याके राजन्यमनुष्ययुवानः " इति प्रकृतिभावादपत्ययकारलोपो न भवति । हस्तिनां समूहो हास्तिकम् । अचित्तहस्तीति ठक् । एषां सेनाङ्गत्वात् द्वन्द्व एकवद्भाव । तेनाढ्यमुपचितमिति तृतीयेति योगविभागात समास । सह राज्ञेति विगृह्य साकल्यवचने यौगपद्ये वाव्ययीभाव. । " अव्ययीभावे चाकाले " इति सभाव । अनश्चेति टच् समासान्तः । अध्वनीनमध्वानमलंगामीत्यध्वनो यत्खौ । आत्माध्वानौ खे इति प्रकृतिभावः ॥

**विशङ्कटो वक्षसि बाणपाणिः संपन्नतालद्वयसः पुरस्तात् ।**
**भीष्मो धनुष्मानुपजान्वरत्निरैतिस्म रामं पथि जामदग्न्यः ५०**

**विशंकटेत्यादि** ॥ एवमस्य गच्छतः पथि मार्गे । सप्तम्या अस्य टेर्लोप । पुरस्तादग्रत । अस्तातौ चेति पूर्वस्य पुरादेश । रामो जामदग्न्य । जमदग्नेरपत्यं रामोऽयम् । गर्गादिपाठाद्यञ् । स ऐति स्म आगतवान् । आङ्पूर्वादिणो लट् । एत्येधत्यूठ्स्विति वृद्धि । विशङ्कटो वक्षसि विशाल उरसि । वेः शालच्छङ्कटचाविति शङ्कटच् । बाणः पाणावस्येति बाणपाणिः । प्रहरणार्थेभ्य इत्यादिना सप्तम्यन्तस्य परनिपात । संपन्नो निष्पन्नो यस्मात्तालवृक्षः स प्रमाणं यस्य स तथोक्तः । प्रमाणे द्वयसच् । भीयते अस्मादिति भीष्म. । भियः षुग्वेति औणादिको मक्प्रत्ययः । वा षुगागमश्च । भीमादयोऽपादान इत्यपादाने

साधुः । धनुष्मान् धनुषा युक्तः । संसर्गे मतुप् । जानुनोः समीपमुपजानु । सामीप्ये-ऽव्ययीभावः । उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः ॥

**उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु मातियासीः ।**
**पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे॥५१॥**

**उच्चैरित्यादि** ॥ उच्चैर्महता ध्वनिना राघवं दाशरथिं एवं वक्ष्यमाणमाह्वत आहूतवान् । "स्पर्द्धायामाङः" इत्यात्मनेपदम् । आत्मनेपदेष्वन्यतरस्यामिति च्लेरङ् । धनु सबाणं कुरु । धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः । मातियासीः मातिक्रम्य गमनं कार्षीः । यातेर्माङि लुङ् । अडभावः । यमरमनमातां सक्चेति इट् । इट ईटीति सिचो लोपः । अथ क्षितीन्द्रो दशरथः तमूचे । ब्रुवो वचिः । आदेशस्य स्थानिवद्भावेन कर्तुः क्रियाफलविवक्षायां तङ् न । वचेः परस्मैपदित्वात् । वच्यादिना संप्रसारणम् । पराक्रमज्ञः यतस्तस्य पराक्रमं जानाति । राजा प्रियसन्ततिः प्रिया सन्ततिर्यस्य । रामे व्यापादिते माभूत्सन्तानविच्छेद इति नम्रः प्रणतो भूत्वा अनुनिनीषुः अनुनेतुमिच्छुः ॥

तदनुनयमाह ॥

**अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः ।**
**संक्षिप्य संरंभमसद्विपक्षं कास्थार्भकेऽस्मिंस्तव राम ! रामे ५२**

**अनेकश इत्यादि** ॥ संरंभं क्रोधं संक्षिप्य उपसंहर । क्षिपेः लोटि मध्यमैकवचने रूपम् । श्यन् । एकमेकमिति विगृह्य सङ्ख्यैकवचनाच्चेति शस् । पश्चान्नञ्समासः । अनेकशोऽनेकप्रकारमिति क्रियाविशेषणमेतत् । निर्जितं पराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः । गोत्रोक्षेत्यादिना वुञ् । त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि । कैः नृपरक्ततोयैः । 'तृपप्रीणने' इत्यस्माल्लुङ् । सिच् । हलन्तलक्षणा वृद्धिः । असद्विपक्षम् । असन्नविद्यमानो विपक्षो यस्मिन् संरंभे । निर्जितराजकत्वात् । रामो विपक्ष इति चेदाह । कास्थार्भकेऽस्मिंस्तव राम रामे । हे परशुराम अर्भके बालके रामे तव का आस्था क आदरोऽस्ति नैवेत्यभिप्रायः ॥

**अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः ।**
**धनुर्व्यकार्क्षीद्गुरुबाणगर्भं लोकानलावीद्विजितांश्च तस्य ॥५३॥**

**अजीगेत्यादि** ॥ दाशरथं दशरथस्येदं दाशरथम् । तस्येदमित्यण् । वाक्यं वचनम् । यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् । न गणितवान् । 'गण संख्याने' इत्यस्यादन्तत्वान्न वृद्धिः । चङि चेति द्विर्वचनम् । "ई च गणः" इति अभ्यासस्येकारः । तदा कुमारो रामो धनुर्व्यकार्क्षीत् । आकृष्टवान् । कृष आकर्षणे । स्पृशमृशेत्यादिनोप-

संख्यानेन सिचि पक्षे रूपम् । हलन्तलक्षणा वृद्धिः । षढोः कस्सीति कत्वम् । कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते । गर्भयतीति गर्भः । गुरुर्बाणो गर्भो यस्य धनुषः । लोकांश्च स्वप्रभावाद्विजितान् । तस्य परशुरामस्य । अलावीत् छिन्नवान् । लुनातेर्लुङि सिचि वृद्धौ रूपम् । समुच्छिद्यन्तामस्य लोका इति अमोघमस्त्रं मुक्तवानित्यर्थः । ततः प्रभृति तस्य सर्वं तेजोऽपहृतम् ॥

**जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैरशङ्कम् ।**
**वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमुखानि मार्गान् ५४**

**जित इत्यादि** ॥ जिते नृपारौ । परशुरामे बलानि सैन्यानि मार्गान् पथः । जगाहिरे अवष्टब्धवन्ति । वृद्धस्य राज्ञो दशरथस्यानुमते सति गच्छतेति । जामदग्न्यसंरंभादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि । अरुर्मन इत्यादिना च्वावन्त्यस्य लोपे अस्य च्वावितीत्वे रूपम् । शब्दायमानानि । अशनैः सुष्ठु शब्दं कुर्वाणानि । एवंजितस्तथा जितो नृपारिरिति । शब्दवैरेत्यादिना क्यङ् । अशङ्कं निर्भयं जगाहिर इति क्रियाविशेषणम् । अनेकमुखानि पृथग्भूतानि पूर्वं भयेन बहुलीभूतत्वादनीकानां बहुवचनमिति ॥

**अथ पुरुजवयोगान्नेदयद्दूरसंस्थं**
**दवयदतिरयेण प्राप्तमुर्वीविभागम् ।**
**क्रमरहितमचेतन्नीरजीकारितक्ष्मां**
**बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥**

## इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयो नाम द्वितीयः सर्गः ।

**अथेत्यादि** ॥ अथेत्यानन्तर्ये । बलं दाशरथम् । तूर्णं शीघ्रम् । त्वरत्वरेत्यादिना पक्षे इड्भावः । ज्वरत्वरेति वकारोपधयोरूठ् । रदाभ्यामिति नत्वम् । अयोध्यामायात आगतम् । आङ्पूर्वाद्यातेर्लङि रूपम् । पुरुर्महान् वेगो जवः तेन योगात् । पर्वते वर्धते इति पुरुः । कुर्भ्रश्चेत्यधिकृत्य पृभिदिव्यधीत्यादिना कुप्रत्ययः । दूरसंस्थं दूरे सन्तिष्ठत इति कः । उर्वीविभागम् । नेदयत् अन्तिकं कुर्वत् । अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच् । इष्ठवद्भावादन्तिकबाढयोर्नेदसाधाविति नेदादेशः पश्चाट्टिलोपः । शतरि शप अयादेशः । प्राप्तं विषयीकृतं चोर्वीविभागं भूविभागम् । अतिरयेण अतिवेगेन । दवयत् दूरीकुर्वत् पश्चाद्भागेन । दूरशब्दात् पूर्ववण्णिचि इष्ठवद्भावे च स्थूलदूरेत्यादिना यणादि-

परलोपः पूर्वस्य च गुणः । पश्चात्तथा एव लडादयः । क्लमरहितम् अपगतश्रमम् । अचेतत् कियद्दूरमागतोऽहमित्यबुध्यमानम् । 'चितीसंज्ञाने' इत्येतस्य शतरि रूपम् । अनीरजा नीरजा कारितेति अरुर्मन इत्यादिना च्वावन्त्यलोपः । अस्य च्वावितीत्वम् । नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायां तां सिक्तसम्मृष्टभूतलामित्यर्थः । उपहितशोभाम् छत्रध्वजपताकाभिरारोपितशोभाम् ॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे सीतापरिणयो नाम द्वितीयः सर्गः ॥

# तृतीयः सर्गः ।

**वधेन संख्ये पिशिताशनानां क्षत्रान्तकस्याभिभवेन चैव ।**
**आढ्यंभविष्णुर्यशसा कुमारः प्रियंभविष्णुर्न स यस्य नासीत् १**

**वधेनेत्यादि** ॥ संख्ये संग्रामे पिशिताशनानां राक्षसानां । पिशितं मांसम् अशनं येषामिति । तेषां वधेन हननेन । हनश्च वध इति अप्प्रत्यये वधादेशः । कृत्प्रयोगे कर्मणि षष्ठी । क्षत्रान्तकस्य परशुरामस्य । अभिभवेन पराजयेन च । ऋदोरप् । चैवशब्दो निपातसमुदायः समुच्चये । तेन हेतुभूतेन । यशसा आढ्यंभविष्णुः । अनाढ्य आढ्यो भूतः । कर्त्तरि भुव इति खिष्णुच् । अरुर्द्विषदिति मुम् । कुमारो यस्य न प्रियंभविष्णु । यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियोभूतः स नासीत् न बभूव ॥

**ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः ।**
**आघोषयन् भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार॥२॥**

**तत इत्यादि** ॥ ततः प्रियम्भविष्णुताया अनन्तरं भूमिपतिर्दशरथो लोकं सुमनीचकार । किमयं सम्यक् पालयिष्यति नवेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः । भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार । कथमित्याह । राज्ये राजकर्मणि पालनलक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकं करिष्यामीति । सिचेरुभयपदित्वात्तङ् । अनीचैर्महता ध्वनिना । आघोषयन् घोषणां कारयन् । सुचेतीसुमनीशब्दौ अरुर्मन इत्यादिना साधू ॥

**आदिक्ष दादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठम् ।**
**सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥**

**आदिक्षदित्यादि** ॥ तस्य रामस्य सिंहासनमादिक्षत् आदिष्टवान् एवं विधं कारयेति । दिशेः स्वरितेतो लुङि शल इगुपधादित्यादिना च्लेः क्सः । अकर्तृगामिक्रियाफलत्वात्तिप् । आदीप्तकृशानुकल्पं ज्वलिताग्नितुल्यं । तस्य कारणमाह । सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वस्त्राणि यस्मिन् । तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र । सपादपीठं सह पादपीठेन ॥

**प्रास्थापयत्पूगकृतान् स्वपोषं पुष्टान् प्रयत्नाद्दृढगात्रबन्धान् ।**
**सभर्मकुम्भान् पुरुषान् समन्तात्पत्काषिणस्तीर्थजलार्थमाशु ॥ ४ ॥**

**प्रास्थेत्यादि** ॥ तीर्थजलार्थं पुरुषान् प्रयत्नात् आदरेण । समन्तात् सर्वासु दिक्षु । आशु शीघ्रं प्रास्थापयत् प्राहिणोत् । प्रपूर्वस्तिष्ठतिर्गमने वर्तते तस्य हेतुमण्ण्यन्तस्य लङि रूपम् । पूगकृतान् अपूगाः पूगाः कृता इति । श्रेण्यादिषु च्व्यर्थवचनमिति समासः । सङ्घीकृतानित्यर्थः । स्वपोषम्पुष्टान् । स्वे पुष इति णमुल् । अमैवाव्ययेनेति समासः । यथाविध्यनुप्रयोगश्च । दृढो गात्रबन्धो येषां तान् । संयतकायान् । महाभारोद्वहनक्षमत्वात् । सहेमकुम्भान् ससुवर्णकलशान् । पत्काषिणः पादौ कषितुं हिंसितुं शीलं येषामिति । सुप्यजातौ णिनि । हिमकाषिहतिषु चेति पदादेशः । पदातीनित्यर्थः । आश्विति कृवापाजीत्यादिना उण् ॥

**उक्षान् प्रचक्रुर्नगरस्य मार्गान् ध्वजान् बबन्धुर्मुमुचुः खधूपान् ।**
**दिशश्च पुष्पैश्चकरुर्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः ॥ ५ ॥**

**उक्षानित्यादि** ॥ ये निपुणा अर्थेषु कार्येषु राज्ञा दशरथेन नियुक्ता अभिक्तास्ते नगरस्य मार्गान् पथः उक्षान् सेकवतः प्रचक्रुः । उक्षणमुक्षा । गुरोश्च हल इत्यकारः । सा विद्यते येषामित्यर्शआदिभ्योऽच् । इजादेश्च गुरुमत इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् । ध्वजान् बबन्धुः उच्छ्रायितवन्तः । मुमुचुः खधूपान् आकाशे घटिकादिभिर्धूपान्मुमुचुः प्रमुक्तवन्तः । दिशश्च पुष्पैश्चकरुः छादितवन्तः । कॄ विक्षेपे इत्यस्य लिटि ऋच्छत्यृतामिति गुणः । विचित्रैः नानाप्रकारैः ॥

**मातामहावासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम् ।**
**तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥ ६ ॥**

**मातेत्यादि** ॥ तत्पूर्वोक्तमभिषेकसंविधानं सोढुमशक्नुवाना असहमाना कैकयी रामस्य वनप्रयाणं ववार प्रार्थितवती राज्ञ इत्यर्थात् । सहेः शक्नोतावुपपदे शकधृषेत्यादिना तुमुन् । तत्र नञा शक्त्यर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य बहिरङ्गत्वात् ।

शक्नोतेः परस्मैपदित्वात् शानज् नास्ति । ताच्छील्यवयोवचनेत्यादिना चानश् । स्वादित्वा-च्छ्नुः । अचि श्नुधात्वित्यादिना उवङ् । किं कृत्वेत्याह । तदानीं प्रार्थनाकाले देशान्तरा-वस्थितत्वात् किमेवं क्रियते न वेति न भरतं पृष्टवती । देशान्तरावस्थितिं दर्शयन्ना-ह । मातामहावासमिति । मातुः पिता मातामहः । पितृव्यमातुलेत्यादिना निपातनात् डामहच् । आवासः निलयम् । आवसत्यस्मिन्निति अधिकरणे घञ् । उपेयिवांसम् । उपेयिवाननाश्वाननूचानश्च इत्यादिना निपातितः । मोहादज्ञानात् । दूतप्रेषणेनापृष्ट्वा । गमस्येति कर्त्तरि षष्ठी । वनाय प्रयाणं गमनमिति । चतुर्थीति योगविभागात् समासः । गत्यर्थकर्मणीत्यादिना चतुर्थी । परत्वात्कृल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न पुनर्द्वि-तीयाग्रहणात्परामपि षष्ठीं बाधित्वा द्वितीयैव यथा स्यादिति । यद्येवं द्वितीयैव स्यात् न चतुर्थी । नैष दोषः द्वितीयाग्रहणस्योपलक्षणार्थत्वात् । तथा च वृत्तावुभयमुक्तं ग्रामं गन्ता ग्रामाय गन्तेति ॥

**कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना ।**
**रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युम् ॥ ७ ॥**

**कर्ण इत्यादि** ॥ कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः । स्तम्बकर्णयोरि-त्यच् । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । तैराहितः आनायितो राज्यलोभो यस्याः सैवम् । स्त्रैणेन स्त्रिया अयम् । स्त्रीपुंसाभ्यां नञ्स्नञाविति नञ् । लघोर्भावो लघिमा । पृथ्वादिभ्य इमनिच् । टिलोपः । तेन विकृतिमन्यथात्वं नीता केकयी रामप्रवासे सति दोषं न व्यमृशत् नालोचितवती । मृश आमर्शने इति तौदादिकस्य लङि रूपम् । किं स्वरूपं दोषम् । जनापवादं लोकवैमुख्यम् । राज्यार्हो ज्येष्ठः पुत्त्रोऽनया प्रव्राजित इति । नरेन्द्रस्य दशरथस्य मृत्युना सह वर्तमानम् ॥

**वसूनि देशांश्च निवर्तयिष्यन्रामं नृपः संगिरमाण एव ।**
**तयावजज्ञे भरताभिषेको विषादशङ्कुश्च मतौ निचख्ने ॥ ८ ॥**

**वसूनीत्यादि** ॥ रामं निवर्तयिष्यन् रामं निवर्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा केकय्या तदनङ्गीकरणादवजज्ञे अवज्ञातः । ज्ञा इत्ययं धातुरवपूर्वोऽवज्ञाने वर्तते । तस्मात्कर्मणि लिट् । गमहनेत्युप-धालोपः । तत्र वृतेर्हेतुमण्ण्यन्तात्क्रियार्थोपपदे लृट् । सङ्गिरणं च क्रिया । गिरे स्तौदा-दिकादवाद्ग्र इति अधिकृत्य समः प्रतिज्ञान इति तङ् । शानच् । ऋत इत् । आनेमुक् । इदं चापरमनुष्ठितं तया भरतो राज्येऽभिषिच्यतामिति भरताभिषेको मतौ मनसि निचख्ने निखातः । कर्मणि लिट् । गमहनेत्यादिना उपधालोपः । तथा विषादः शङ्कुरिव शल्य-

मिव निचख्ने । ज्येष्ठत्वात् नायं समभिषिच्यत इति विषाद. । संग्रामात्किल परिश्रान्तमागतं दशरथं केकयी परिचचार तेन परितुष्टेनोक्तं किं ते दास्यामीति सा प्राह यदार्थयिष्यते तदा यूयं दास्यथेति सा तदवसरं बुद्ध्वा वरद्वयं प्रार्थितवती । एको रामस्य वनगमनं द्वितीयो राज्ये भरतोऽभिषिच्यतामिति ॥

**ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं वनाय ।**
**सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥ ९ ॥**

**तत इत्यादि** ॥ केकयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राजयिषु प्रव्रजन्तमेनं प्रव्राजयितुमिच्छु । व्रजेर्हेतुमण्ण्यन्तात्सन । अस्य कुमारस्य । रथेन वनायाभिगममभिगमनम् । ग्रहवृदृनिश्चिगमश्चेत्यप् । आदिक्षत् । आदिष्टवान् । अस्येति कर्त्तरि षष्ठी । वनायेति गत्यर्थकर्मणीति चतुर्थी । सौमित्रिसीतानुचरस्य लक्ष्मणसीतासहायस्य । सुमित्राया अपत्यम् । बाह्वादित्वादिञ् । सहचरत्वेनाभ्यर्हितत्वात् पूर्वनिपात । अनु पश्चाच्चरतीति अनुचर । भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्चयार्थत्वात् ट । अनुचरश्चानुचरी च । पुमान् स्त्रिया । तावनुचरौ सौमित्रिसीते अनुचरौ सहायौ यस्य । कालापिकास्ततोऽन्यत्रापि पठन्ति अनधिकरणोपपदे चरेष्ट इत्यर्थ. । नीयतेऽनेनेति नेत्रं लोचनं । दाम्नीत्यादिना ष्ट्रन् । सुमन्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तद्वशात्तस्य प्रवृत्तेः । शोचन् परिदेवयमानो राजा ॥

**केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्रमुच्चैः ।**
**ऊचुस्तथान्ये भरतस्य मायां धिक्केकयीमित्यपरो जगाद ॥ १० ॥**

**केचिदित्यादि** ॥ राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपं निनिन्दु कुत्सितवन्त. । णिदि कुत्सायाम् । अप्रशान्तं वृद्धभावेऽपि स्त्रीवशम । केचन केचित्सास्रं सबाष्पमुच्चै सुष्टु विचुक्रुशुः सुतरामाक्रन्दितवन्त. । तथान्ये भरतस्य माया शाठ्यमूचुः उक्तवन्तः । तत्कृतोऽयं प्रयोगो येनात्मरक्षणार्थं मातामहनिवासे स्थित इति । अपरो धिक्केकयी ययैवमनुष्ठितमिति जगाद गदितवान् । धिगुपर्यादिषु त्रिष्विति धिग्योगे द्वितीया ॥

**गतो वनं श्वोभवितेति रामः शोकेन देहे जनतातिमात्रम् ।**
**धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमारानुगमे मनांसि ॥ ११ ॥**

**गत इत्यादि** ॥ श्व आगामिनि दिवसे वनं गतो रामो भवितेति तासू । जनता जनसमूह । "ग्रामजनबन्धु—" इत्यादिना तल् । देहे दग्धा । कर्मणि लिट् । अतएकहलित्येत्वाभ्यासलोपौ । गत इति भूतकालः श्वोभवितेति भविष्यत्कालेन सम्बध्यमान.

साधुः । धातुसम्बन्धे प्रत्यया इति । ये तु तत्र धीरा' ते च्युतमन्यवो विगतशोकाः सन्त कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्तः । राममनुव्रजाम इति । निमित्तात्कर्मसंयोगे सप्तमीति । मनांसीति कर्मणा योगात् ॥

**प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान् ।**
**किं शोचतेहाभ्युदये बतास्मान् नियोगलाभेन पितुः कृतार्थान् १२**

**प्रस्थेत्यादि** ॥ तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ । "समवप्रविभ्यःस्थः" इति तङ् । जनान् इदं वक्ष्यमाणमूचतु' उक्तवन्तौ । ब्रुवीत्यर्थग्रहणात् वचेर्द्विकर्मकता । उपसेदुषस्तौ ढौकितवत' जनान् । भाषाया सदवसेत्यादिना क्वसुः । शोशुच्यमानान् अत्यर्थं शोकं कुर्वत' । भृशार्थे यङ् । किमूचतुरित्याह किं शोचतेति हे जनाः ! कस्मादस्मान शोचत परिदेवयध्वम । विधावपूर्वार्थप्रकाशेन लोट् । इहाभ्युदये बतशब्दो विस्मये तस्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम् । कुत इत्याह । पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् । कृतार्थत्वादशोच्या वयमित्यर्थ ॥

**असृष्ट यो यश्च भयेष्वरक्षीद्यः सर्वदास्मानपुषत्स्वपोषम् ।**
**महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः १३**

**असृष्टेत्यादि** ॥ असृष्ट जनितवान् । सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम् । न तौदादिकस्य परस्मैपदित्वात्सृजिदृशोरित्यम । यश्च भयेषु सत्सु अरक्षीत् पालितवान् । 'रक्षपालने' इत्यस्य लुङि रूपम् । य सर्वदा सर्वकालं । सर्वैकान्येत्यादिना दाप्रत्यय' । यश्चापुषत् पुष्टवान् । स्वपोषं धनेनास्मानपुषत् । पुषेर्लुङि रूपम् । पुषादित्वादङ् । स्वे पुष इति णमुल् । अमैवाव्ययेनेति समास । यथाविध्यनुप्रयोगश्च । तस्य पितु' संबन्धिनो महोपकारस्य किमस्ति मोक्ष प्रत्युपकारो नैवेति भाव' । केनेत्याह । तुच्छेन असारेण वनस्य यानेन । यातेर्भावे ल्युट् । वनस्येति शेषसामान्ये षष्ठी । कृल्लक्षणायास्तु षष्ठ्या गत्यर्थकर्मणि चतुर्थ्या बाध्यमानत्वात ॥

**विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोर्ध्वशोषं तृणवद्विशुष्कः ।**
**अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् १४**

**विद्युदित्यादि** ॥ अर्थे कार्यविशेषे दुरापेऽपि-कृच्छ्रप्राप्येऽपि । ईषद्दुःसुष्वित्यादिना खल् । गुरूणां यच्छासनमादेशः तस्मिन् यो नावास्थित नावस्थितवान् । अवपूर्वात्तिष्ठतेर्लुङ् । समवेत्यादिना तङ् । स्थाघ्वोरिच्चेति कित्त्वमित्वं च । ह्रस्वादङ्गादिति सिचो लोप' । स वरं विद्युत्प्रणाशं प्रनष्टः । विद्युदिवोत्पत्त्यनन्तरमेव विनाशं गत । उपमाने कर्मणि चेति चकारात् कर्त्रोर्जीवपुरुषयोरित्यत' कर्तृग्रहणानुवृत्तौ कर्तृवाचिनि विद्यु-

च्छब्द उपपदे णमुल् । "उपसर्गादसमासे—" इत्यादिना णत्वम् । यद्वेत्यथवा । स ऊर्ध्वशोषं तृणवद्विशुष्क: । ऊर्ध्वेशुषीत्यादिना णमुल् । उभयत्रामेवेत्यादिना समास । यथाविध्यनुप्रयोगश्च । किमु प्रवासे किम्पुनः प्रवासविषये यच्छासनं तत्र तावदनवस्थितस्य सुतरामेव पूर्वोक्तं प्रयुज्यते ॥

**पौरा निवर्त्तध्वमिति न्यगादीत्तातस्य शोकापनुदा भवेत ।**
**मा दर्शतान्यं भरतं च मत्तो निवर्तयेत्याह रथं स्म सूतम्॥१५॥**

**पौरा इत्यादि** ॥ हे पौरा ! यथागतं निवर्त्तध्वम् । विधौ लोट् । इति तान् न्यगादीत् उक्तवान् राम: । गदेरतोहलादेरिति वृद्धि: । इट इटीति सिचो लोप: । तातस्य पितुः शोकापनुदाः शोकस्यापहर्त्तारो भवेत । तुन्दशोकयोरित्यादिना क: । भवतेर्विधौ प्रार्थनायां वा लिङ् । मध्यमपुरुषबहुवचनम् । भरतं च मत्तो मत्त सकाशात् । अस्मद: पञ्चम्यास्तसिल् । प्रत्ययोत्तरपदयोश्चेति मदादेश: । अन्यं भरतं मा दर्शत मा द्रष्टारः स्थ । अपि तु योऽहं स एव भरत: स च प्रतिष्ठित: राज्यं पालयिष्यतीत्येव न्यगादीत् । दृशेर्माङि लुङ् । इरितो वेत्यङ् । ऋदृशोऽङि गुणः । निवर्तय रथमिति सूतं च सुमन्त्रमाह स्म । "लट् स्मे" इति लट् । ब्रुव पञ्चानामित्याहादेश । तिपो णल् ॥

**ज्ञात्वेंगितैर्गत्वरतां जनानामेकां शयित्वा रजनीं सपौरः ।**
**रक्षन् वनेवासकृताद्भयात्तान् प्रातश्छलेनापजगाम रामः॥१६॥**

**ज्ञात्वेत्यादि** ॥ निवर्तध्वमित्युक्ते ये तत्रानिवृत्ता तेषां जनानां गामो गत्वरतां गमनशीलतां ज्ञात्वा । गत्वरश्चेति निपातितः । तैरिङ्गितैरभिप्रायसूचकैश्चेष्टितैः । इंगतेर्भावे निष्ठा । वनेवास इति सप्तमीति योगविभागात् समासः । शयवासवासिष्विति विभाषा सप्तम्या अलुक् । तेन कृतात्सिंहादिभयात् रक्षन् पालयन् तान् पौरान् सपौर पौरैः सह एकां रजनी शयित्वा । कालाध्वनोरिति द्वितीया । शयितेर्वेति नक्त्वासेडिति कित्त्वप्रतिषेधात् गुणो भवति । प्रातः प्रात:काले । छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान् ॥

**अस्राक्षुरस्रं करुणं रुवन्तो मुहुर्मुहुर्न्यश्वसिपुः कवोष्णम् ।**
**हा राम हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः१७**

**अस्राक्षुरित्यादि** ॥ ते पौरा राममपश्यन्तः करुणं रुवन्तो विलपन्तः । रुशब्द इत्यस्य शतरि रूपम् । अस्रम् अश्रु अस्राक्षुः । मुक्तवन्तः । सृजेस्तौदादिकस्य परस्मैपदिनः सिचि सृजिदृशोरित्यम् । हलन्तलक्षणा वृद्धिः । चोः कु: स्वरि चेति चर्त्वम् । मुहुर्मुहुः भूयो भूयः कवोष्णमीषदुष्णमन्तः सन्तापात् । "कवं चोष्णे" इति कोः कवादे-

श । न्यश्वसिषु । श्वसेर्लुङ् । ह्म्यन्तेत्यादिना श्वसेर्वृद्धिप्रतिषेधः । अतो हलादेर्लघोरिति विकल्पस्य प्राप्तत्वात् । हा राम हा कष्टं कृच्छ्रमिति ब्रुवन्तः पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्थंभूतै । न्यवृतन् निवृत्तवन्तः । द्युद्भ्यो लुङीति परस्मैपदविकल्पात् । द्युतादित्वादङ् ॥

**सूतोऽपि गंगासलिलैः पवित्वा सहाश्वमात्मानमनल्पमन्युः ।**
**ससीतयोराघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश ॥ १८ ॥**

**सूतइत्यादि** ॥ सूतोऽपि सुमन्त्र सहाश्वमश्वै सह । अनल्पमन्यु प्रवृद्धशोकः । राघवयोः रामलक्ष्मणयो । सरूपाणामित्येकशेष । ससीतयोः सीतासहितयो । अधीयन् स्मरन् । इक्स्मरण इत्यस्य शतरि रूपम । यणादेशः । अधीगर्थेति कर्मणि षष्ठी । श्वसन् । कदुष्णं ईषदुष्णम् । "कवं चोष्णे" इति चकारात् कदादेशः । गंगातटात्प्रतिनिवृत्य पुरमयोध्यामाजगाम आगतवान् । गङ्गासलिलै आत्मानं बाह्यमाभ्यन्तरं च पवित्रीकृत्य । पूङश्चेति विकल्पेनेट् । पूङ क्त्वाचेति कित्त्वप्रतिषेधात् गुणः ॥

**प्रतीय सा पूर्ददृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव ।**
**राजन्यनक्षत्रसमन्वितापि शोकान्धकारक्षतसर्वचेष्टा ॥ १९ ॥**

**प्रतीयेत्यादि** ॥ जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य । पूरयोध्या ददृशे दृष्टा । कर्मणि लिट् । प्रतीय इति ईङ्गताविल्यस्य रूपं न पुनरिण तस्य हि तुकि प्रतीत्येति स्यात् । पत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वात् । प्रतीयुषा सा ददृशे इति पाठान्तरम । प्रतिनिवृत्तेन सा पर्ददृशे दृष्टेत्यर्थः । अस्मिन् पाठे तु उपेयिवानित्यादिना इण क्सौ रूपं द्रष्टव्यमत्रोपसर्गस्यातन्त्रत्वात् । शोकोऽन्धकार इव शोकान्धकारः । तेन क्षता नीतानुष्ठेयकर्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता । राज्ञोऽपत्यानि । राजश्वशुराद्यत । राजन्या क्षत्रिया । ये चाभावकर्मणोरिति प्रकृतिभाव. । राजन्या नक्षत्राणीव तै समन्वितापि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाश यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ्यां विनाकृता रहिता अन्धकारच्युतसर्वचेष्टा तद्वत्सापि भानुचन्द्रस्थानीययो राघवयोर्विरहात् ॥

**विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपतिश्च्युताशः ।**
**मधूनि नैषीद्व्यलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे ॥२०॥**

**विलोक्येत्यादि** ॥ रामेण विना सुमंत्रं विलोक्य दृष्ट्वा नृपतिर्दशरथ सत्वात् स्वभावादच्योष्ट च्युतः । च्यवतेरकर्मकाल्लुङ् । गतोऽपि मद्वचनमतिक्रम्य आगच्छेद्राम

इति अस्य या आशा सा च्युता यस्य स च्युताश । सत्वात् च्युतश्च मधूनि पातुं नैषीन् नेष्टवान् । नेटीति सिचि वृद्धिप्रतिषेधः । गन्धैश्चन्दनादिभिर्नालिपत् । लिपेर्लिपिसिचि ह्वश्चेत्यङ् । मनोरमे चेतोहारिणी वस्त्रे न व्यवसिष्ट न परिहितवान् । वस आच्छादने इत्यस्मात् लुङ् । अनुदात्तेत्वात्तङ् ॥

**आसिष्ट नैकत्र शुचा व्यरंसीत् कृताकृतेभ्यः क्षितिपालभाग्भ्यः ।**
**स चन्दनोशीरमृणालदिग्धः शोकाग्निनागाद्द्युनिवासभूयम् ॥२१॥**

**आसिष्टेत्यादि** ॥ एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्ट । आसेरात्मनेपदिनो लुङ् । कृतानि चाकृतानि चेति । क्तेन नञ्विशिष्टेनानञिति समासः । असमापितेभ्य इत्यर्थः । क्षितिपालं भजन्ते यानि । दूतप्रेषणादीनि तेभ्य क्षितिपालभाग्भ्यः । व्यरंसीत् विरत विमुखोऽभूदित्यर्थ । जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति अपादानसंज्ञा । रमेर्लुङ् । व्याङ्परिभ्यो रम इति तिप् । यमरमेत्यादिना सगिटौ । स एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयं देवत्वमगात् गतवान् । दिहेर्निष्ठायां दादेर्धातोर्घ इति घः । झषस्तथोर्धोध । झलां जश झशीति जश्त्वम् । दिवि निवासो येषां ते द्युनिवासा देवा तेषां भाव इति "भुवो भावे" इति क्यप् ॥

**विचुक्रुशुर्भूमिपतेर्महिष्यः केशाँल्लुलुञ्चुः स्ववपूंषि जघ्नुः ।**
**विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभंजुर्वलयानि चैव ॥ २२ ॥**

**विचुक्रुशुरित्यादि** ॥ भूमिपते राज्ञो महिष्यः पत्न्य । अविमह्योष्टिषच् इत्यौणादिकष्टिषच् । विचुक्रुशु रुदितवत्य इत्यर्थ । हा स्वामिन्निति । तथा केशान् लुलुञ्चुः । उत्पाटितवत्यः । स्ववपूंषि स्वशरीराणि जघ्नुस्ताडितवत्य । विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः । क्षमायां भुवि पेतुः । वलयानि अवैधव्यचिह्नानि बभंजु । चूर्णितवत्यः । एते लिडन्ता । पतेरेत्वाभ्यासलोपौ ॥

**ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले ।**
**दूतांश्च राजात्मजमानिनीषून् प्रास्थापयन्मंत्रिमतेन यूनः॥२३॥**

**ता इत्यादि** ॥ बन्धुता बन्धुसमूह । ग्रामजनबन्धुभ्यस्तल् । ता महिषीः सान्त्वयन्ती संस्थापयन्ती । सान्त्वं करोतीति णिच् । तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती । आशु शीघ्रं । माभूत्पूतिरिति । क्षिपेर्लुङ् । पुषादित्वादङ् । कस्मात्तमक्षिपदित्याह । भरतप्रतीक्षा तेन संस्कार कर्त्तव्य इति सा भरतं प्रतीक्षते । ईक्षिक्षमिभ्यां चेत्युपसंख्यानाण्णः । दूतान् प्रास्थापयत् प्रहितवती । राजात्मजं भरतमानिनीषून्

आनेतुमिच्छून् । अन्यथा केकयी वैमुख्याद्भरतेऽपि वैमुख्याद्दूता अपि मानेतुमिच्छन्ति । तत्रापि मन्त्रिमतेन न स्वमतेन । यूनः तेषां गन्तुं समर्थत्वात् ॥

**सुप्तो नभस्तः पतितं निरीक्षाञ्चक्रे विवस्वन्तमधःस्फुरन्तम् ।**
**आख्यद्वसन्मातृकुले सखिभ्यः पश्यन् प्रमादं भरतोऽपि राज्ञः ॥२४॥**

**सुप्त** इत्यादि ॥ भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान् । ख्यातेर्लुङ् । अस्यतिवक्तीत्यादिना अङ् । क्रियाग्रहणं कर्तव्यमिति संप्रदानसंज्ञायां चतुर्थी । किमाख्यदित्याह । अहं सुप्तः सन् नभस्तो नभस्तलात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुरन्तं चलन्तं निरीक्षाचक्रे निरीक्षितवान् । ईक्षेरिजादेरित्याम् । उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट् । पश्यन् विलोकयन् । राज्ञो दशरथस्य । प्रमादमनिष्टम् ॥

**अशिश्रवन्नात्ययिकं तमेत्य दूता यदार्थं प्रयियासयन्तः ।**
**आंहिष्ट जातांजिहिषस्तदासावुत्कण्ठमानो भरतो गुरूणाम् ॥२५॥**

**अशीत्यादि** ॥ दूता एत्य आगत्य भरतमातृकुलमित्यर्थः । आङ्पूर्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम् । यदा तं भरतमर्थं वचनमशिश्रवन् श्रावितवन्तः । अर्थयतेऽनेनेति णिच् घश्च । शृणोतेर्ण्यन्ताल्लुङि चङि द्विर्वचनम् । स्रवतिशृणोतीत्यभ्यासस्येत्वम् । आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् । पिता ते म्लानस्त्वां द्रष्टुमिच्छतीति आत्ययिकं वचनम् । तमिति गतिबुद्धीत्यादिना कर्मसंज्ञा । शृणोतेः शब्दकर्मत्वात् अर्थमिति । कर्तुरीप्सिततममित्यनेन । प्रयियासयन्तः प्रयातुमिच्छन्तं भरतं प्रयोजितवन्तः । सन्नन्तण्यन्तोऽयम् । तदा असौ भरतो जातांजिहिषः । जाता अंजिहिषा गमनेच्छा यस्य सः । अहिगतौ । इदितो नुम् । तस्मादंहितुमिच्छतीति सन् । इट् । अजादेर्द्वितीयस्येति हिशब्दो द्विरुच्यते । नकारस्य नन्द्रा इति प्रतिषेधः । अभ्यासकार्यम् । अनुस्वारपरसवर्णौ । अः प्रत्ययादित्यकारप्रत्ययः । टाप् । आंहिष्ट गतवान् । तस्मादेवात्मनेपदिनो लुङ् । उत्कण्ठमानः स्मरन् । मठिकठिशोक इत्यस्मादात्मनेपदिनो रूपम् । अनेकार्थत्वाद्धातूनाम् । गुरूणां पितामहादीनाम् । अधीगर्थेति कर्मणि षष्ठी ॥

**बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेहवशादपायम् ।**
**गोमायुशारङ्गगणाश्च सम्यङ्नायासिषुर्भीममरासिषुश्च ॥ २६ ॥**

**बन्धूनित्यादि** ॥ दुःस्वप्नदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि

समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः । शङ्कतेरात्मनेपदिनो लुङि रूपम् । कीदृशान् आसेदुषः अपायं विनाशं गतवतः । भाषायां सदवसेत्यादिना क्वसुः । अत एकहलित्येत्वाभ्यासलोपौ । अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति । गच्छतस्तस्य गोमायुशारङ्गगणाः शृगालमृगगणाश्च सम्यगनुकूलं नायासिषुः नागताः । यातेर्लुङि यमरमेति सगिटौ । शृगालाः प्रदक्षिणं गताः मृगाश्च सव्यामित्यर्थः । भीममुद्वेगकरमरासिषुः रसिताः । रसेः परस्मैपदिनो लुङ् । अतो हलादेरिति वृद्धौ रूपम । न रासेः तस्यात्मनेपदित्वात् ॥

**स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यम् ।**
**आकर्णयामास न वेदनादान्न चोपलेभे वणिजां पणायान्॥२७॥**

**स इत्यादि** ॥ स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् । भाषायामित्यादिना क्वसुः । यजादित्वात् सम्प्रसारणं द्विर्वचनम् । वस्वेकाजाद्घसामिति इट् । पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात् पुरं प्रविष्ट । घोषं शब्दं न शुश्राव न श्रुतवान् । जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यम् । शकिशसिचनियतीति जनेर्यत । तथा वेदध्वनीन्नाकर्णयामास न श्रुतवान् । प्रातिपदिकाद्धात्वर्थे इति णिच् । तदन्तात् लिट्यामि अयामन्तेत्ययादेशः । न चोपलेभे नोपलब्धवान् । वणिजां पण्यजीविनाम् । पणायान् पणलाभान् । क्रयविक्रयरूपव्यवहारस्योच्छिन्नत्वात् । पणन्ते इति वणिजः पणेरिज्जादेश्च व इत्यौणादिकः । पण्यन्त इति पणाः । नित्यं पणः परिमाण इत्यप् । व्यवहर्तव्या । ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभाः । एरजिति इणः कर्मणि अच् । पणानामयाः पणायाः तान् । पणायामिति पाठान्तरं वणिजां स्तुतिं संव्यवहारविषयां नोपलेभे । संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपणिना साहचर्यात् पणेरपि तदर्थादेवायप्रत्ययः । अः प्रत्ययादित्यकारः । टाप् । वणिजां प्रलापानिति तृतीयः पाठः । वणिक्प्रसारकलहानित्यर्थः ॥

**चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपागतास्राः ।**
**पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्णमन्याः॥२८॥**

**चक्रन्दुरित्यादि** ॥ तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकित्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः । हा स्वामिन् ! हा राजन् ! क्व गतोऽसीति । उपागतं प्राप्तमस्रमश्रुजलं यासां ताः । एवंविधाः । युध्यन्त इति योधाः पचादित्वादच् ते च तं समेत्य नृपतिं चक्रन्दुः । पुरोधीयत इति पुरोहितः । निष्ठा । दधातेर्हिः । अमाशब्दः सहार्थे । सह राज्ञा कार्येषु भवतीत्यमात्यः । अमेहक्वतसि-

त्रेभ्यः इति निपातात् । पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते पुरोहितामात्यमुखाः । अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात् पूर्वनिपातः । विवृद्धमन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति ॥

**दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणं च ।**
**रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥**

**दिदृक्षमाण इत्यादि** ॥ स भरतो यदा ससीतं रामं लक्ष्मणं च परितः सर्वतो दिदृक्षमाणः द्रष्टुमिच्छन् । ज्ञाश्रुस्मृदृशां सन इति तङ् । हलन्ताच्चेति सन. किच्त्वे सृजिदृशोरित्यम् न भवति । नैक्षत न दृष्टवान् । तदा रोरुद्यमानः अत्यर्थं रुदन् । यङि रूपम् । अभ्यपृच्छत् पृष्टवान् । ऐक्षताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् । अन्यथा कवेः परोक्षत्वात् लिट् स्यात् । अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तं भूतं तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुखा अस्मै भरताय । ख्यातेरस्यतीत्यादिना च्लेरङ् । आतो लोपः ॥

**आबद्धभीमभ्रुकुटीविभङ्गः शेश्वीयमानारुणरौद्रनेत्रः ।**
**उच्चैरुपालब्ध स केकयीं च शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ३०**

**आबद्धेत्यादि** ॥ स भरत उच्चैर्महता ध्वनिना केकयी च मुहुर्मुहुर्भूयो भूय उपालब्ध उपालब्धवान् । उपाङ्पूर्वो लभिरुपालम्भे वर्तते । तस्मादात्मनेपदिनो झलो झलीति सिज्लोपे धत्वजश्त्वे रूपम् । शोके च मन्यौ अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः । मस्जेर्लुङि मस्जिनशोर्झलीति नुम् । तत्रापि मस्जेरन्त्यादिनियमात् नुम् । संयोगादिलोपः । हलन्तलक्षणा वृद्धिः । हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम् । कीदृशः आबद्धभीमभ्रुकुटीविभङ्गः । भ्रमेश्च डुरित्यौणादिको डुः । कुडेः स्त्रीलिङ्गे भावे कृशादिभ्य इतीः । तदन्तान् कृदिकारादिति ङीष् । भ्रुवोः कुटी कौटिल्यं भ्रुकुटी । इको ह्रस्वो ङ्योगोलवस्येति ह्रस्वः । तस्या विभङ्गो विरचनम् । आबद्धः कृतः प्रयत्नेनायासवृत्तेन भीमो भयानको भ्रूकुटीविभङ्गो येन यस्य वेति । शेश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः । श्वयतेर्यङि विभाषा श्वेरिति वा सम्प्रसारणम् ॥

तमुपालम्भमाह—

**नृपात्मजौ चिक्लिशतुः ससीतौ ममार राजा विधवा भवत्यः ।**
**शोच्या वयं भूरनृपा लघुत्वं केकय्युपज्ञं बत बह्वनर्थम् ॥ ३१ ॥**

**नृपेत्यादि** ॥ नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ ।

ममार मृतो राजा । म्रियतेर्लुङ्लिङोश्चेति नियमात्तङोऽभावः । विधवाः धवो भर्त्ता तेन विना भवत्यो जाताः । शोच्याः शोचनीया वयम् अयशोभाजनत्वात् । ऋहलोर्ण्यत् । शङ्क्या इति पाठान्तरम् । शङ्कनीया वयम् । एतत्कृतोऽयं प्रयोग इति । भूश्चानृपा । न विद्यते नृपो यस्यामिति । नञोऽस्त्यर्थानामिति बहुव्रीहिः । लघुत्वं राज्यप्रार्थनालक्षणं । कैकय्युपज्ञम् । कैकय्याः प्रथमतो ज्ञातं नान्यस्य कस्यचित्पूर्वं ज्ञातम् । उपज्ञायत इत्युपज्ञम् । आतश्चोपसर्गे इति स्त्रियामङ् । कृल्लक्षणा षष्ठी । कैकय्या उपज्ञेति समास. । उपज्ञोपक्रममिति नपुंसकता । बत कष्टं । बह्वनर्थं बहुदोषम् । क्लेशमरणाद्यनिष्टानां सम्भवात् ॥

भरतकृत एवायं प्रयोग इत्येतत्परिहरन्नाह—

**नैतन्मतं मत्कमिति ब्रुवाणः**
**सहस्रशोऽसौ शपथानशप्यत् ।**
**उद्वाश्यमानः पितरं सरामं**
**लुठ्यन् सशोको भुवि रोरुदावान् ॥ ३२ ॥**

**नैतदित्यादि** ॥ यदेतत्कैकय्यनुष्ठितं मतमभिप्रायः । न मत्कृतं तत् । नाहमस्य ग्रामणीर्न प्रभुरिति । अस्मच्छब्दात्स एषां ग्रामणीरिति कन् । प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य मादेशः । नास्मन्मतादनुष्ठितमनयेत्यर्थः । इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरत. शपथान् सम्प्रत्ययकारणवचनानि अशप्यत् कृतवान् । अनेकार्थत्वाद्धातूनां । शपेर्दैवादिकस्य उभयपदिनो लङि रूपम् । उद्वाश्यमानः आह्वयन् । वाशृशब्दे दैवादिकः । अनुदात्तेत् । पितरं सरामं हा तात ! हा रामेति । लुठ्यन् भुवि लुठन् । लुठविलोडने दैवादिकः । परस्मैपदी । सशोक इति शाठ्यपरिहारार्थम् । रोरुदावान् अर्थ्यर्थं रोदनं कुर्वन् । यङन्तात् अः प्रत्ययादित्यकार. । अतो लोपः । यस्य हल' । स्त्रियामतष्टाप् । सावियते यस्येति मतुप् ॥

**तं सुस्थयन्तः सचिवा नरेन्द्रं दिधक्षयन्तः समुदूहुरारात् ।**
**अन्त्याहुतिं हावयितुं सविप्राश्चिचीषयन्तोऽध्वरपात्रजातम् ३३**

**तमित्यादि** ॥ सचिवा अमात्याः । कार्येषु सचन्ते समवयन्तीति सचेरिवन्नित्यौणादिक इवन् । तं भरतं सुस्थयन्त' सुस्थं कुर्वाणाः । तत्करोतीति णिच् । नरेन्द्रं दशरथं । समुदूहुः उद्वाहितवन्तः । शिबिकायामारोप्य । वहिरन्तर्भावितण्यर्थोऽव द्रष्टव्यः । यजादित्वात्सम्प्रसारणम् । आरात् नातिदूरे । दिधक्षयन्तः । दग्धुमिच्छन्तं भ-

रतं प्रयोजितवन्तः। दहेः सनि दादेर्धातो र्घः। भष्भावचर्त्वे। प्रयोजकव्यापारे णिच्। अन्ते विनाशे भवा या आहुतिः। दिगादित्वाद्यत्। तामन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं। सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीषयन्तः। चेतुं निधातुमिच्छन्तः प्रयोजितवन्तः। किंतत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम्॥

**उदक्षिपन् पट्टदुकूलकेतूनवादयन् वेणुमृदङ्गकांस्यम्।**
**कम्बूंश्च तारानधमन् समन्तात्तथानयन् कुङ्कुमचन्दनानि॥३४॥**

**उदेत्यादि**॥ पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्त ये नियुक्ताः। क्षिपेस्तौदादिकस्य ग्रहणम्। वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालमवादयन् वादितवन्तः। वदेर्ण्यन्तस्यैव प्रयोगः। जातिरप्राणिनामित्येकवद्भावः। न पुनस्तूर्याङ्गत्वात् तत्र हि प्राणिनां तूर्याङ्गाणां द्वन्द्वैकवद्भावः। यथा मार्दङ्गिकपाणविकमिति। वृतृवदिहनिकमिकषिभ्यः सः इत्यौणादिकः कंसशब्दः। तदर्थाय हितं कंसीयम्। त्रपुणा दृढद्रव्यम्। प्रकृतिविकारभावेछः। तस्य विकार इति। कंसीयपरशव्ययोर्यञञौ लुक् चेति छस्य लुक् यञ् च प्रत्ययः। कम्बून् शङ्खान् तारान्। उच्चैस्तरध्वनीन्। अधमन् शब्दितवन्तः। पाघ्रेत्यादिना धमादेशः तथा कुङ्कुमचन्दनानि आनयन् आनीतवन्तः। सर्वत्र लङि रूपम्॥

अन्त्येष्टिं दर्शयन्नाह—

**श्रोत्राक्षिनासावदनं सरुक्मं कृत्वाजिने प्राक्शिरसं निधाय।**
**सञ्चित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितं चिताग्निम्॥३५॥**

**श्रोत्रेत्यादि**॥ अजिने कृष्णसारचर्मणि प्राक्पूर्वं शिरो मूर्द्धा यस्येति तं प्राक्शिरसं शवं निधाय स्थापयित्वा पश्चात् श्रोत्राक्षिनासावदनम्। प्राण्यङ्गत्वादेकवद्भावः। वृतृवदीत्यादिसूत्रस्यानन्तरं नयतेराचेति प्रकृतेराकारे नासेत्यौणादिकं रूपम्। सरुक्मं ससुवर्णं कृत्वा। संचित्य विन्यस्य अङ्गप्रत्यङ्गेषु। पात्राणि स्रुगादीनि। यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे। ऋत्विग्याजकः। ऋतौ यजतीति ऋत्विग्दधृगित्यादिना निपातितः। ज्वलितं चिताग्निम्। ज्वलनं चितं तदर्थमाग्निं जुहाव जुहोति स्म॥

**कृतेषु पिण्डोदकसञ्चयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः।**
**प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः॥ ३६॥**

**कृतेष्वित्यादि**॥ पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तुतमभिषेकमादिकर्मणि क्तः। हित्वा त्यक्त्वा। जहातेश्च क्त्वीति हिरादेशः। रामं प्रत्यानि-

नीषुः प्रत्यानेतुमिच्छु । विनयेन प्रसादनया न भयादरण्यं वनं प्रायान् गतवान् । भरतः सह पौरैः । अयोध्याभवैर्जनैर्मय्येकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति ॥

**शीघ्रायमाणैः ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य सृप्तैः ।**
**शोकादभूषैरपि भूश्चकासाञ्चकार नागेन्द्ररथाश्वमिश्रैः ॥ ३७ ॥**

**शीघ्रेत्यादि** ॥ जनैर्हेतुभूतैर्भूश्चकासाञ्चकार शोभतेस्म । कर्तृ क्रियाफलयोगेऽपि नात्मनेपदम् । आम्प्रत्ययवदित्यत्र पूर्वग्रहणानुवृत्ते । चकासेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ । शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः । भृशादित्वात् क्यङ् । ङित्त्वात्तङ् । ककुभोऽश्नुवानैः दिशो व्याप्नुवद्भिः । अश्नोतेः सौत्रादिकस्य आत्मनेपदिनो रूपम् । अपन्थानमुपेत्य सृप्तैः बहुत्वादमार्गमपि गत्वा गतैः । ऋक्पूरित्यादिना समासान्त प्राप्तो नञस्तत्पुरुषादिति प्रतिषिद्धः सन् पथो विभाषेति विकल्पितः । शोकाद्धेतोरभूषैरनलङ्कारैरपि चकासाञ्चकार भूः भूमिः । भूषेति गुरोश्च हल इत्यकारप्रत्ययः । चकासृदीप्तावित्यस्मात् कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्याम् । नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः । अल्पाच्तरस्य न पूर्वनिपातः बहुष्वनियम इति वचनात् । तेन सेनाङ्गत्वात् कृतैकवद्भावेन मिश्रैर्युक्तैः । पूर्वसदृशेत्यादिना तृतीयासमासः ॥

**उच्चिक्यिरे पुष्पफलं वनानि सस्नुः पितॄन् पिप्रियुरापगासु ।**
**आरेटुरित्वा पुलिनान्यशङ्कं छायां समाश्रित्य विशश्रमुश्च ॥ ३८ ॥**

**उच्चीत्यादि** ॥ ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति जातिरप्राणिनामित्येकवद्भावः । उच्चिक्यिरे उच्चितवन्त । ञित्वात्तङ् कर्तृ क्रियाफलयोगात् । विभाषा चेरिति धातोः कुत्वम् । एरनेकाच इति यणादेश । उच्चिच्यिर इति पाठान्तरं युक्तम् । वनानीति हेतुत्वेनाकथितं कर्म । वनानि विघट्टयन्त फलानि जगृहुरित्यर्थः । ततः सस्नुः स्नातवन्तः । स्नातेर्लिटि उस्यपदान्तादिति पररूपम । पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्तः । प्रीणातेर्लिटि इयङादेशः । आपगासु नदीषु । एतत्कृत्वा पुलिनानि सैकतानि इत्वा आरेटु आरटिताः । आरेमुरिति पाठान्तरं । शोकापनोदनार्थं कियन्तमपि कालमारमन्तिस्म । व्याङ् परिभ्यो रम इति परस्मैपदम । अशङ्कं विस्रब्धम् । छायां समाश्रित्य विशश्रमुः विश्रान्ताः ॥

**संप्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।**
**विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥**

**संप्राप्येत्यादि** ॥ तमसापगायाः तमसाख्यायाः आपगायाः नद्याः । अत्यवि-

चमितमिनमिरभिलभितपिपतिजनिपणिगहिभ्योऽसच् । यस्याः स्मरणात्पापं ताम्यति सा तमसा । तरसा इति पाठान्तरं । तत्र तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजते या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययु. गताः । गङ्गेति गन् गम्यद्योरित्यौणादिको गन् । विगाहितुं विगाहिष्यामह इति कृत्वा । यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलम् । पुण्यं पुण्यहेतुत्वात् पुण्ययुक्तत्वाद्वा ॥

**ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन् विशश्राम समेत्य रामः ।**
**च्युताशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः ॥४०॥**

**ईयुरित्यादि** ॥ भरद्वाजमुनेर्निकेतं आश्रमयीयुः गताः । इणो यणिति यत्वम् । अभ्यासस्य दीर्घ इणः कितीति दीर्घत्वम् । यस्मिन्निकेते रामो विशश्राम विश्रान्त । समेत्य मिलित्वा। तमीयुर्जना इति योज्यम् । फलवद्विभूत्या फलवतां वृक्षाणां समृद्ध्या हेतुभूतया च्युताशनायोऽपगतबुभुक्षः । अशनायेत्यादिना निपातितः । व्यस्यन् उदन्यां वारयन् । असेर्दैवादिकस्य रूपम् । उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥

**वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून् ।**
**अध्यापयन्तं विनयात् प्रणेमुः पद्गा भरद्वाजमुनिं सशिष्यम् ॥४१॥**

**वाचमित्यादि** ॥ ते भरद्वाजमुनि सशिष्यं शिष्यैः सहवर्त्तमानं प्रणेमु प्रणमन्ति स्म । विनयात् विनयेन । अतएव पद्गाः पदातयः पादाभ्यां गच्छन्तीति । अन्येष्वपि दृश्यत इति डः । हिमकाषिहतिषु चेति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेश । पदिति योगविभागाद्वा । कीदृशम् । अध्यापयन्तं पाठयन्तम् । कान् वाचंयमान् मौनव्रतान् । वाचियमोव्रत इति खच् । वाचंयमपुरंदरौ चेति निपातनात् पूर्वपदस्य अमन्तता । स्थण्डिलशायिन भूशायिनः । स्थण्डिलाच्छयितरिव्रत इति णिनि । युयुक्षमाणान् योक्तु मिच्छत । योगाभ्यासनिष्ठानित्यर्थः । अनिशमविच्छेदेन मुमुक्षून्मोक्षाभिलाषिण इत्यर्थः । अतएव योगाभ्यासमिच्छून् ॥

**आतिथ्यमेभ्यः परिनिर्विवप्सोः**
**कल्पद्रुमा योगबलेन फेलुः ।**
**धामप्रथिम्नो म्रदिमान्वितानि**
**वासांसि च द्राघिमवन्त्युदूहुः ॥ ४२ ॥**

**आतिथ्यमित्यादि** ॥ अतिथ्यर्थमातिथ्यमन्नपानादि । अतिथेर्ञ्यः । एभ्यो भर-

तादि जनेभ्यः इति संप्रदाने चतुर्थी । परिनिर्विवप्सोः निर्वप्तुमिच्छोर्दातुमिच्छोरित्यर्थः । निपूर्वो वपिर्दाने वर्तते । धामप्रथिम्नः । धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य । तेजसो बहिर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते । तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन । युजसमाधावित्यस्य रूपम् । कल्पद्रुमाः फेलु फलिताः । भक्ष्यान्नपानादिकमित्यर्थः । तृफलभजत्रपश्चेत्येत्वमभ्यासलोपश्च । वासांसि च वस्त्राणि उदूहु उद्वहन्ति स्म । यजादित्वात् संप्रसारणम् । म्रदिमान्वितानि मृदुत्वमुपगतानि । द्राघिमवन्ति दैर्घ्ययुक्तानि । पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिच् । पृथुमृदुशब्दयोर्ऋतोहलादेरिति रादेशः । दीर्घशब्दस्य प्रियस्थिरेत्यादिना द्राघादेशः पश्चान्मतुप् ॥

**आज्ञां प्रतीषुर्विनयादुपास्थुर्जगुः सरागं ननृतुः सहावम् ।**
**सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाद्या वनिताश्च तस्मिन् ॥४३॥**

**आज्ञामित्यादि** ॥ तस्मिंस्तपोवने तिलोत्तमाद्या वनिता दिव्यस्त्रियः आगता आज्ञामादेशं मुनेः प्रतीषुः प्रतीष्टवत्यः । चेटीभवत्य इत्यर्थः । प्रतिपूर्व इषिर्ग्रहणे वर्तते तस्य लिटि रूपम् । विनयादुपास्थुः उपस्थिताः । पादप्रक्षालनादिदानेन उपस्थानं कृतवत्यः । उपपूर्वात्तिष्ठतेर्लुङि सिच् । गातिस्थेति सिचो लुक् । सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् । उस्यपदान्तादिति पररूपम् । जगुः सरागं सरक्तं गीतवत्यः । ननृतुः सहावं सशृङ्गारचेष्टं नर्तितवत्यः । सविभ्रमं नेमुः सविलासं प्रणताः । उदारमूचुः अग्राम्यमुक्तवत्यः ॥

**वस्त्रान्नपानं शयनं च नाना कृत्वावकाशे रुचिसंप्रक्लृप्तम् ।**
**तान् प्रीतिमानाह मुनिस्ततः स्म निवध्वमाध्वं पिबतात्त शेध्वम् ४४**

**वस्त्रेत्यादि** ॥ ततोवनितोपस्थानान्तरमवकाशे प्रदेशे यथाभिमते वस्त्रान्नपानम् । सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः । शयनमित्यधिकरणे ल्युट् । नाना कृत्वा पृथक् कृत्वा । रुचिसंप्रक्लृप्तम् । यस्य यावदभिरुचितं तत्तथैव संपादितम् । कृपो रो लः । प्रीतिमान्मुनिस्तान् भरतादीनाह स्म उक्तवान् । किमाह । निवध्वं परिधत्त वस्त्राणि । 'वस आच्छादने' इत्यस्य विधौ लोट् । झलाञ्जश् झशीति सकारस्य दकारः । आध्वं उपविशत । आसेः पूर्ववत् दादेशः । अत्त खादत अन्नादिकम् । अद् भक्षणे इत्यस्मात् लोट् । पानादिकं पिबत । पिबतेः पाघ्रादिसूत्रेण पिबादेशः । शेध्वम् स्वपित शयने । सर्वत्र विधौ लोट् ॥

**ते भुक्तवन्तः सुसुखं वसित्वा**
**वासांस्युषित्वा रजनीं प्रभाते ।**

**द्रुतं समध्वा रथवाजिनागै-**
**र्मन्दाकिनीं रम्यवनां समीयुः ॥ ४५ ॥**

**ते भुक्तेत्यादि** ॥ ते भरतादयः सुसुखमिति क्रियाविशेषणम् । भुक्तवन्तः सन्तो वासांसि वसित्वा परिधाय । रजनीमुषित्वा रजनीं रात्रीं । वसतिक्षुधोरिट् । कालाध्वनोरिति द्वितीया । द्रुतं शीघ्रं प्रभाते मन्दाकिनीं नदीं समीयुः संभूय गताः । समध्वा अविच्छिन्नाध्वानः । सङ्गता अध्वन इति प्रादिसमासः । उपसर्गादध्वन इति समासान्तष्टच् । रथवाजीति द्वंद्वैकवद्भावः । तेन सहिता नागा इति शाकपार्थिवादित्वात् समासः । अन्यथा सेनाङ्गत्वात्समुदायस्यैकवद्भावः स्यात् । रम्यवनां रमणीयकाननां रमणीयजलां वा ॥

**वैखानसेभ्यः श्रुतरामवार्तास्ततो विशिञ्जानपतत्रिसङ्घम् ।**
**अभ्रंलिहाग्रं रविमार्गभङ्गमानंहिरेऽद्रिं प्रति चित्रकूटम् ॥४६॥**

**वैखानसेत्यादि** ॥ ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः । चित्रकूटे रामोऽस्तीति श्रुतरामवार्ताः । चित्रकूटनामानमद्रिं पर्वतं प्रति । लक्षणेत्थम्भूताख्यानेत्यादिना कर्मप्रवचनीयसंज्ञा । कर्मप्रवचनीययुक्त इति द्वितीया । तं लक्ष्यीकृत्य आनंहिरे जग्मुः । अंहतेर्लिटि द्विर्वचनम् । हलादिः शेषः । अत आदेरिति दीर्घः । तस्मान्नुड् द्विहल इति नुट् । विशिञ्जानपतत्रिसंघं कूजत्पक्षिगणम् । अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् । वहाभ्रे लिह इति खश् । अरुर्द्विषदित्यादिना मुम् । रविमार्गभङ्गम् । उच्चैस्तरत्वात् रवेर्मार्गभङ्गो यस्मिन्नद्राविति ॥

**दृष्ट्वोर्णुवानान् ककुभो बलौघान्**
**वितत्य शार्ङ्गं कवचं पिनह्य ।**
**तस्थौ सिसंग्रामयिषुः शितेषुः**
**सौमित्रिरक्षिभ्रुवमुज्जिहानः ॥ ४७ ॥**

**दृष्ट्वेत्यादि** ॥ बलौघान्दृष्ट्वा सौमित्रिस्तस्थौ स्थितः । अभ्यासस्य शर्पूर्वाः खय इति खय शेषः । कीदृशः ककुभो दिश ऊर्णुवानान् आच्छादयतः । ऊर्णोतेराद्यादिकस्योभयपदिनः शानचि उवङादेशे च रूपम् । शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपितगुणं कृत्वा । वा ल्यपीत्यनुनासिकलोपः । कवचं पिनह्य बध्वा । 'णहबन्धने' इत्यस्य ल्यपि । अपिशब्दाकारलोपस्तु वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ धाञ्कृञ्वोस्तनिनह्योश्च बहुलत्वेन शौनकिरिति । सिसंग्रामयिषुः संग्रामयितुमिच्छुः । 'संग्रामयुद्धे'

इति चौरादिको णिच् । तदन्तस्य सनि प्रथमस्यैकाचो द्विर्वचनम् । शितेषुः तीक्ष्णशरः । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । अचतुरेत्यत्र निपातितः । उज्जिहानः उर्ध्वं नयन् । ओहाङ्गतावित्यस्य जुहोत्यादिकस्य भृञामितीत्वम् ॥

**शुक्लोत्तरासङ्गभृतोविशस्तान्**
**पादैः शनैरापततः समन्यून् ।**
**औहिष्ट तान् वीतविरुद्धबुद्धीन्**
**विवन्दिषून् दाशरथिः स्ववर्ग्यान् ॥ ४८ ॥**

**शुक्लेत्यादि** ॥ दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान् । अशब्दे यत्खाविति यत् । आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्याह । वीतविरुद्धबुद्धीन् । औहिष्ट ऊहितवान् । ऊहतेरात्मनेपदिनो लुङि आट् वृद्धिः । तदेवाविरुद्धबुद्धित्वं दर्शयन्नाह । शुक्लोत्तरासङ्गभृत । शुक्लो य उत्तरासङ्गः उत्तरीयं तं बिभ्रतीति क्विप् । विशस्त्रान् निरायुधान् । पादैरापतत आगच्छतो मुक्तवाहनत्वात् । शनैर्न त्वरया । समन्यून् प्रकृष्टशोकान् । आगतशोकान् वा । विवन्दिषून् वन्दितुमिच्छून् ॥

**समूलकाषं चकषूरुदन्तो-**
**रामान्तिकं बृंहितमन्युवेगाः ।**
**आवेदयन्तः क्षितिपालमुच्चैः-**
**कारं मृतं रामवियोगशोकात् ॥ ४९ ॥**

**समूलेत्यादि** ॥ ते रामान्तिकं रामसमीपं प्राप्ताश्चकषुः पिष्टवन्त । समूलकाषं समूलं कषित्वा भूमेरधोभागमुत्खन्य । निमूलसमूलयो कष इति कषेर्णमुल । कषादिषु यथाविध्यनुप्रयोग. । रुदन्त· रोदनं कुर्वन्त. । बृंहितमन्युवेगा विवृद्धशोकवेगाः । बृहि-वृद्धावित्यस्य रूपम् । रामवियोगशोकात् कारणात् क्षितिपालं दशरथमुच्चैःकारं कृत्वा । मृतं निधनंगतं आवेदयन्त. । अव्यये यथाभिप्रेताख्यान इति कृञो णमुल् । एतद्यथा भिप्रेताख्यानमिति नीचैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति ॥

**चिरं रुदित्वा करुणं सशब्दं**
**गोत्राभिधायं सरितं समेत्य ।**
**मध्येजलाद्राघवलक्ष्मणाभ्यां**
**प्रत्तं जलं द्वयञ्जलमन्तिकेऽपाम् ॥ ५० ॥**

**चिरमित्यादि** ॥ चिरं महान्तं कालं करुणं समन्यु सशब्दं प्रतिकृत्य रुदित्वा। रलोव्युपधाद्धलादेरिति क्त्वे विकल्पिते रुदविदेत्यादिना क्त्वम्। सरितं समेत्य नदीं संभूय गत्वा। मध्येजलात् जलस्य मध्यात् तस्माद्वा स्नात्वोत्थाय अवतीर्य। ल्यब्लोपे पञ्चमी। पारे मध्ये षष्ठ्या वेत्यव्ययीभाव। अपञ्चम्या इति प्रतिषेधात् अम्न भवति। नाव्ययीभावादिति लुक्प्रतिषेधश्च। राघवलक्ष्मणाभ्यां अपामन्तिके समीपे जलं प्रत्तम् दत्तं। अच उपसर्गात्तः। गोत्राभिधायं नामाभिधायम्। द्वितीयायाञ्चेति णमुल्। व्यञ्जलमिति। अञ्जलिपरिच्छिन्नम्। जलमञ्जली द्वौ विगृह्य। तद्धितार्थे समासः। द्वित्रिभ्यामञ्जलेरिति टच्। ताभ्यां प्रत्येकमञ्जलिप्रदानात्। द्वावञ्जली प्रमाणमस्येत्यस्मिन्वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक् द्विगोर्नित्यमिति लुक्। ततः समासान्तो न प्राप्नोति। अतद्धितलुकीत्यधिकारात् ॥

**अरण्ययाने सुकरे पिता माम्**
**प्रायुङ्क्त राज्ये बत दुष्करे त्वाम्।**
**मागाः शुचं वीर भरं वहामु-**
**माभाषि रामेण वचः कनीयान् ॥ ५१ ॥**

**अरण्ययान इत्यादि** ॥ अरण्याय यानं अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान्। युजे रौधादिकस्य लङि रूपम्। कर्त्रभिप्राये प्रोपाभ्यां युजेरित्यात्मनेपदम्। राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त। एवं च सति हे वीर शुचं शोकं मागाः। माकार्षीरित्यर्थः। इणो गा लुङि गातिस्थेति सिचो लुक्। बत इति खेदे। किन्तु भरममुं पितुर्नियोगम्। भृभरण इत्यस्मात् ऋदोरप्। वह संपादय। विधौ लोट्। एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः। कर्मणि लुङ्। ब्रुवीत्यर्थग्रहणात् द्विकर्मकता। अल्पशब्दादीयसुनि युवाल्पयोरित्यादिना कनादेशः ॥

**कृती श्रुती वृद्धमतेषु धीमां-**
**स्त्वं पैतृकं चेद्वचनं न कुर्याः।**
**विच्छिद्यमानेऽपि कुले परस्य**
**पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२ ॥**

**कृतीत्यादि** ॥ वृद्धानां पण्डितानां मतेषु श्रुतानि कृतानि चानुष्ठितानि येनेति। श्राद्धमनेनेत्यधिकृत्य इष्टादित्वादिनि। क्तस्येन्विषयस्येति कर्मणि सप्तमी। स्वमते भावक्तान्तादस्त्यर्थे इन्। स त्वमेवंविधः धीमान् पैतृकं पितुरागतम्। पितुर्यच्चेति चका-

राद्दतष्ठञ्चि इसुसुक्तांतात्कः । चेद्यदि वचनं न कुर्याः । मध्यमपुरुषैकवचने लिङि रूपम् । तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः । अपिशब्दोभिन्नक्रमः । कथं स्यादिह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा नैवेत्यर्थः । पुत्रशब्दात् काम्यच्चेति काम्यच् । तदन्तादप्रत्ययः । टाप् ॥

अस्माकमुक्तं बहु मन्यसे चे-
द्यदीशिषे त्वं न मयि स्थिते च ।
जिह्रेष्यतिष्ठन् यदि तातवाक्ये
जहीहि शङ्कां व्रज शाधि पृथ्वीम् ॥ ५३ ॥

**अस्माकमित्यादि** ॥ अस्माकमुक्तं अस्मत्सम्बन्धि वचनं चेद् यदि बहु मन्यसे आद्रियसे । पितृतुल्यो भ्राता अस्यानुमतः कथमेवं न कुर्यामिति । यदि च मयि स्थिते नेशिषे न प्रभुत्वं करोषि । प्रभुस्त्वमहं त्वदाज्ञाकर इति । ईशेरदादिकस्य ईशः स ईतीडागम । गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्ननिष्ठन् वचनमकुर्वाणः यदि जिह्रेषि लज्जसे । श्लौ द्विर्वचनम् । एतन्निश्चित्याह जहीहि शङ्कां त्यज विकल्पम् । व्रज गच्छ अयोध्याम् । शाधिपालय पृथ्वीम् । जहातेश्चेति इत्वे विकल्पिते ईहल्यघोरितीत्वम् । शासेः शाहाविति शाभावः । तस्याभीयत्वेनासिद्धत्वान् हुझल्भ्यो हेर्धिः ॥

वृद्धौरसां राज्यधुरां प्रवोढुं
कथं कनीयानहमुत्सहेय ।
मा मां प्रयुक्थाः कुलकीर्त्तिलोपे
प्राह स्म रामं भरतोऽपि धर्म्यम् ॥ ५४ ॥

**वृद्धौरसामित्यादि** ॥ भरतः प्राह । धूर्वहनशीला । धूर्नयनशीला इत्यर्थः । अनेकार्थत्वाद्धातूनाम् । भ्राजभासेति क्विप् । राल्लोप इति वलोपः । राज्यस्य सप्ताङ्गस्य धूर्धात्री । प्रकृतिरिति विगृह्य । ऋक्पूरित्यकारप्रत्यय । परवल्लिङ्गमिति धूरिति स्त्रीलिङ्गम् । ततष्टाप् । कीदृशी वृद्धौरसां वृद्धो ज्येष्ठः औरसः पुत्रो यस्याम् । उरसा निर्मित इति छन्दसो निर्मित इत्यनुवृत्तौ "उरसोऽण् च" इत्यण् । तां निष्ठनि गमे प्रवोढुं कथमुत्सहेय । कनीयान् सन् नैवेत्यर्थः । शकधृषेत्यादिना वहेः सहावुपपदे तुमुन् । गर्हायां लडपि जात्वोरित्यनुवृत्तौ विभाषा कथमि लिङ्चेति लिङ् । सहेरुत्पूर्वस्य आत्मनेपदित्वात् सीयुट् । इटोत् । लिङः सलोपोऽनन्त्यस्य । अतो मा मां प्रयुक्थाः ।

मा नियोजय । माङि लुङ् । झलो झलीति सिचो लोपः। कुलकीर्तिलोपे । लोपयतीति लोपः । पचाद्यच् । रघुवंशस्य या कीर्तिः तस्या लोप इति समासः । पूर्वैरनाचरितत्वात् । एवं च धर्म्यं धर्मादनपेतं भरतोऽपि प्राहस्म उक्तवान् ॥

पुनश्चाह—

**ऊर्जस्वलं हस्तितुरङ्गमेत-**
**दमूनि रत्नानि च राजभाञ्जि ।**
**राजन्यकं चैतदहं क्षितीन्द्र-**
**स्त्वयि स्थिते स्यामिति शान्तमेतत् ॥ ५५ ॥**

**उर्ज्जेत्यादि** ॥ एतद्धस्तितुरङ्गं सेनाङ्गत्वादेकवद्भावः । ऊर्ज्जस्वलं बलवत् । ऊर्जनमूर्क् । संपदादित्वात् क्विप् । सा विद्यते यस्येति । ज्योत्स्नातमिस्रेत्यादिना वलच् । असुगागमश्च । अमूनि च रत्नानि राजभाञ्जि राजगृह्याणि । एतच्च राजन्यकं क्षत्त्रियसमूहः । क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत् । स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥

**इति निगदितवन्तं राघवस्तं जगाद**
**व्रज भरत गृहीत्वा पादुकेत्वं मदीये ।**
**च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः**
**सकलभुवनराज्यं कारयास्मन्मतेन ॥ ५६ ॥**

**इतीत्यादि** ॥ इति एवं निगदितवन्तं उक्तवन्तं तं भरतं राघवो रामो जगाद उक्तवान् । किमित्याह । हे भरत मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ । विधौ लोट् । अस्मदस्त्यदादित्वे त्यदादीनि चेति वृद्धसंज्ञायां तस्येदमर्थे वृद्धाच्छः । प्रत्ययोत्तरपदयोश्चेति मदादेशः । ततश्च पूज्यमानोजनौघैर्जनसमूहैः । च्युतनिखिलविशङ्कः । अपगताशेषविकल्पः । सकलभुवनराज्यं सर्वत्र भूमण्डले राज्यं कारय अनुष्ठापय । पादुके इति योज्यम् । अस्मन्मतेन अस्माकमभिप्रायेण । अत्र मदादेशो न भवति अस्मदो बहुवचनान्तस्य विवक्षितत्वात् । तत्र ह्येकवचन इति वर्तते । ननु कथं मदीय इत्यत्र मदादेशः बहुवचनान्तत्वादिति विरोधः पादुके रामस्यैव तर्ह्यस्मन्मतेन इत्यत्रापि एकवचनम् । आवयोरामलक्ष्मणयोर्मतेनेति षष्ठीसमासे न दोषः ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रकीर्णकाण्डे रामप्रवासो नाम

तृतीयः सर्गः ॥ ३ ॥

---

# चतुर्थः सर्गः ।



निवृत्ते भरते धीमानत्रेरामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥ १ ॥

**निवृत्त इत्यादि** ॥ धीमान् बुद्धिमान् अत्र स्थिते मयि कदाचिद्भरतः पुनरेष्यतीत्येवं बुद्धिमान् रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे गतः । तस्मिंश्च तपोवने अर्घ्यपाद्यादिभि पूजितः । दाण्डक्यो नाम भोजो भार्गवकन्यामहरत् । तच्छापात् पांसुवर्षेणाक्रान्त सबन्धुराष्ट्रविनाशो यस्मिन् स्थाने तत्त्वोपलक्षितं अरण्यमभूत् तदीयिवान गतवान् । उपेयिवानित्यत्र उपसर्गस्यातन्त्रत्वात्केवलादपीणः क्वसु ॥

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।
बलाद्बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥

**अटाट्येत्यादि** ॥ महदरण्यमरण्यानी । इन्द्रवरुणेत्यादिना हिमारण्ययोर्महत्त्वेङीषानुकौ । तां अटाट्यमानः अत्यर्थमटन् रामः । सूचिसूत्रीत्यादिना यङ् । ससीतः सहलक्ष्मणः वोपसर्ज्जनस्येति विकल्पेन सभावः । बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः । कर्मणि लिट् । उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा । वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना । भीमेन भयानकेन । भियः षुक् इत्यौणादिकषुगभावपक्षे रूपम् ॥

अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमम् ।
भंक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥

**अवागित्यादि** ॥ तं विराधाख्यं राक्षसं । कृतान्तेनापि यमेनापि । दुर्दमं दुःखेन दम्यत इति खल् । तौ रामलक्ष्मणौ भुवि निचख्नतुर्निखातवन्तौ । कीदृशम् अवाक्शिरसं अधोमस्तकम् । अवाक्शिरो यस्येति । उर्ध्वं पादौ यस्येति उत्पादम् । भुजौ भंक्त्वा मोटयित्वा । जान्तनशां विभाषेत्यनुनासिकलोपाभावपक्षे रूपम् ॥

आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥ ४ ॥

**आंहीत्यादि** ॥ ततो विराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमं आंहिषातां गतवन्तौ । अंहेर्लुङि रूपम् । अध्यासितं आश्रयीकृतम् । श्रिया लक्ष्म्या ।

ब्राह्म्या ब्रह्मसम्बन्धिन्या । ब्रह्मण इयमित्यण् । ब्राह्मो जाताविति निपातनात् टिलोपः । टिड्ढाणञित्यादिना ङीप् । शरणे अवस्थाने साधु अनुकूलं शरण्यम् । तत्र साधुरिति यत् । शरणैषिणां शरणं त्राणमेषितुं शीलं येषाम् ॥

**पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः ।**
**शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनम् ॥ ५ ॥**

**पुर इत्यादि** ॥ शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार कुष्ठित्वात्तस्य । भीह्रीभृहुवामिति आम् । आमि श्लुभावे द्विर्वचनम् । किं कृत्वेत्याह । प्रदिश्य कथयित्वा । किं आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनं आश्रमम् । तत्र वासमुपकल्पयेति ॥

तत्र किमत्रावस्थानमिति चेदाह—

**यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने ।**
**दृष्टाःस्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम् ॥ ६ ॥**

**यूयमित्यादि** ॥ अपि नाम यूयं समैष्यथ आगमिष्यथ । आङ्पूर्व इण् आगमने वर्तते । एत्येधत्यूठ्स्विति वृद्धिः । इत्यस्मात्कारणात् । अस्मिन्वने वयमासिष्महि स्थिताः । आसेर्लुङि रूपम । अस्मदो द्वयोश्चेति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहु वचनम् । अस्मदागमने किन्ते फलमिति चेदाह । दृष्टाः स्थ अधुना दृष्टा भवथ । अस्तेर्मध्यमपुरुषबहुवचने श्नसोरल्लोप इत्यकारलोपः । स्वस्ति कल्याणम् । वः युष्मभ्यम् । नम स्वस्तीत्यादिना चतुर्थी । बहुवचनस्य वस्नसौ । स्वपुण्येन विजितां लब्धां गतिं जन्म। यामः व्रजामः । रामरूपेण विष्णुरवतीर्ण तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति ॥

**तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ ।**
**उवास पर्णशालायां भ्रमन्ननिशमाश्रमान् ॥ ७ ॥**

**तस्मिन्नित्यादि** ॥ तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येनाग्नीभूते । "विभाषा साति कार्त्स्न्ये" इति सातिः । रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यामुवास उषितवान् । तत्र कृताधिवासस्य वृत्तिमाह । भ्रमन्ननिशमाश्रमान् पर्यटन् सदा तपोवनानि मुनीन् उपासितुम् ॥

**वनेषु वासतेयेषु निवसन् पर्णसंस्तरः ।**
**शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे ॥ ८ ॥**

**वनेष्वित्यादि** ॥ वासतेयेषु वसतौ साधुषु । पथ्यतिथीत्यादिना ढञ् । निव-

सन् शयान । संस्तीर्यत इति संस्तरः । ऋदोरप् । पर्णानि संस्तरो यस्येति पर्णसंस्तरः । शय्योत्थायं शय्याया उत्थाय । उत्पूर्वात्तिष्ठतेरपादाने परीप्सायामिति णमुल् । शय्यते अस्यामिति शय्या । संज्ञायामित्यादिना क्यप् । त्वरया मुखधावनादीन्यपि न-कृत्वा । मृगान्विध्यन् ताडयन् । ग्रहिज्यादिना सम्प्रसारणम् । तत्रापि नात्मार्थं लुब्ध इत्याह । आतिथेय अतिथौ साधु । पूर्ववत् ढञ् । विचक्रमे विहरति स्म । वे: पादविहरण इति तङ् ॥

**ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन् ।**
**बुभुजे देवसात्कृत्वा शूल्यमुख्यं च होमवान् ॥ ९ ॥**

**ऋग्यजुषमित्यादि** ॥ ऋक्च यजुश्च ऋग्यजुषम् । अचतुरेत्यादिना निपातितम् । द्वन्द्वाच्चुदषहान्तात् समाहारे टच् । ऋग्वेदं यजुर्वेदं च अधीयानान् पठत । इङोऽधिपूर्वस्य लटि शानचि रूपम् । न लोकेति षष्ठीप्रतिषेधः । सामन्यांश्च सामसु साधून् द्विजान् । तत्र साधुरिति यत् । ये चाभावकर्मणोरिति प्रकृतिभावः । समर्चयन् पूजयन् । शूल्यमुख्यं च मांसं बुभुजे भुक्तवान् । शूले उखायां च स्थाल्यां संस्कृतम् । शूलोखाद्यत् । "भुजोऽनवने" इति तङ् । किं कृत्वा । देवसात्कृत्वा देवेभ्यो दत्वा । तदधीनं कृत्वा । देये त्रा चेति चकारात् सातिश्च । होमवान् होमो विद्यते यस्येति-कृताग्निकार्य इत्यर्थः ॥

**वसानस्तन्त्रकनिभे सर्वाङ्गीने तरुत्वचौ ।**
**काण्डीरः खाङ्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान् ॥ १० ॥**

**वसान इत्यादि** ॥ असौ रामो वनेष्वानभ्र भ्रान्तवानिति वक्ष्यमाणेन श्लोकेन सम्बन्धः । वसानः परिदधानः । वस आच्छादने इत्यस्मात् शानच् । तरुत्वचौ वल्कले प्रत्यग्रे । तन्त्रकः तन्त्रादचिरापहृत इति कन् । तन्निभे तत्तुल्ये । सर्वाङ्गीने सर्वाङ्गाणि व्याप्नुवत्यौ । तत्सर्वेत्यादिना खः । काण्डीरः काण्डोऽस्यास्तीति । काण्डाण्डादीरन्नीरचौ । खाङ्गिकः खङ्गोऽस्यास्तीति । अत इनि ठनौ । खाङ्गिक इति पाठान्तरम् तत्र खङ्ग प्रहरणमिति ठक् । शार्ङ्गी सधनुः । तनुत्रवान् तनुं शरीरं त्रायत इति तनुत्रम् । आतोऽनुपसर्गे कः । संसर्गे मतुप् । पिनद्धकवच इत्यर्थः । स एवंविधो विप्रान् ब्राह्मणान् रक्षन् ॥

**हित्वाशितङ्गवीनानि फलैर्येष्वाशितम्भवम् ।**
**तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः ॥ ११ ॥**

**हित्वेत्यादि** ॥ आशितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात् । अषडक्षादिसूत्रेण खः पूर्वपदस्य च मान्तत्वं निपात्यते । तान्यरण्यानि हित्वा येषु वनेषु फलैराशितम्भवमाशितस्य भवनं तृप्तिर्वर्तते । आशिते भूव इत्यादिना भावे खच् । तेष्वानभ्र । अभ्रवभ्रेति गत्यर्थो धातु । लिटि अत आदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुट् । दन्दशूकारि । व्यालानां हन्ता । लुपसदेत्यादिना दंशेर्यङ् । तदन्ताद्यजजपेत्यादिना ऊकः ॥

**व्रातीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन् ।**
**पर्षद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ १२ ॥**

**व्रातीनेत्यादि** ॥ तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् । अटेरभ्यासस्यात आदेरिति दीर्घत्वम् । ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयो भिक्षवो ये निवसन्ति ते नैकटिकाः । निकटे वसतीति ठक् । तेषां आश्रमांस्तपोवनानि । कीदृशः । व्रातीनव्यालदीप्रास्त्र. । नानाजातीया. अनियतवृत्तय शरीरमायास्य ये जीवन्ति ते व्रातास्तेषां यत्कर्म तदपि व्रातं तेन जीवन्ति इति व्रातीनाः । व्रातेन जीवतीति खञ् । तेषां व्याला हिंस्राः उपघातका । तेषु दीप्रास्त्रः । ज्वलदायुधः । सप्तमीति योगविभागात्सः । सुत्वनः सुतवतः परिपूजयन् । सोमपायिन इत्यर्थ । सुयजोर्ङ्वनिप् तुक् । न संयोगादित्यल्लोपो न । पर्षद्वलानिनि । पर्षस्नेहने अस्मात्पर्षते स्निह्यतीति । शृषणसो दिगित्यत्र पर्वेर्बाहुलकादौणादिको दि पर्षन् । तव यदि रज कृष्यासुतिपर्षदो वलजिति तदा पर्षन् विद्यते येषा सुत्वनामिति वलच् । अत्र परिषीदतीति परिषत् क्विबन्तो यथा परिषदप्येषा गुणग्राहिणी तदा परिषद्वलं सहायो येषामिति बहुव्रीहिः । महाब्रह्मैर्महाब्राह्मणैः । कुमहद्भ्यामन्यतरस्यामिति टच् । तै सहाट ॥

( युग्मकम )

**परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन् ।**
**वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥ १३ ॥**

**परेद्यवीत्यादि** ॥ परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः । अद्यैतस्मिन्नहनि । पूर्वेद्यु पूर्वस्मिन्नहनि । अन्येद्युरन्यस्मिन्नहनि चिरातिक्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् । प्रियम्भावुकतां पूर्वं प्रियाप्रियस्वभावनिर्मुक्तत्वादतथाभूतः सन् प्रियो भवतीति प्रियम्भावुकः । आढ्यसुभगेत्यधिकृत्य कर्तरि भुव खिष्णुच् खुकञाविति खुकञ् । तद्भावः । तामगात् गतः । अर्थान्मुनीन्द्राणामेव । परेद्यव्यादयः शब्दाः सद्यः परुदित्यादिना निपातिताः ॥

**आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ।**
**प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥ १४ ॥**

**आतीत्यादि** ॥ जपन्मन्त्रमिति सामर्थ्यलभ्यम् । सन्ध्याकालोऽधिकरणम् । तेनात्यन्तसंयोगे द्वितीया । सम्यक् ध्यायन्त्यस्यामिति । आतश्चोपसर्गे इत्यङ् । किमवधि सन्ध्यामित्याह । प्रक्रान्तामायतीगवम् । आयत्य आयान्त्यो भवन्ति यस्मिन् काले गाव. अस्मिन्नायतीगवं आरब्धाम् । तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावसमासत्वात्साधु । नाव्ययीभावादिति सप्तम्या अम्भाव । आङ्पूर्वादिण. शतरि इणो यणिति यणि ङीपि च रूपं आयतीति । गावोऽपि गोचरान् गोष्ठमायान्ति दिवसस्यार्धनाडिकावशेषे सन्ध्यापि तदैव प्रवर्तते । कियन्तमेवं जपन्नित्याह । आतिष्ठद्गु इति । तिष्ठन्ति गावो यस्मिन् काले दोहाय । गावो हि रात्रिप्रथमयामस्य नाडिकायामतीतायां विश्रान्ता सत्य. उत्थाप्य दुह्यन्ते । आतिष्ठदित्याङ्मर्यादाभिविध्योरित्यव्ययीभाव. । तिष्ठद्गुप्रभृतीनि चेति चकारस्यानुक्तसमुच्चयार्थत्वादव्ययीभाव एव पुन. समासान्तरं न भवति । प्रातस्तरामिति । प्रातरित्यव्ययं प्रभातवाचि । प्रकर्षविवक्षायान्तरप् । तदन्तात्किमेदित्यादिना आम् । अतिप्रभाते । पतत्रिभ्य. कुक्कुटादिभ्यः प्रथमं प्रबुद्ध उत्थित । पञ्चमी विभक्ते इति पञ्चमी । रविमादित्यं प्रणमन् यदा चरति तदा प्रियम्भावुकतामगादिति पूर्वेण योज्यम् ॥

**ददृशे पर्णशालायां राक्षस्याभीकयाथ सः ।**
**भार्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥**

**ददृश इत्यादि** ॥ पर्णानां शालायां स्थित. स रामः राक्षस्या ददृशे दृष्ट । कीदृश्या । अभीकया कामुकया । अनुकाभिकेत्यादिना निपातितः । दृशेः कर्मणि लिट् । अथ दर्शनानन्तरं भार्योढं ऊढभार्यमूढा भार्या यस्येति । आहिताग्न्यादिषु दर्शनान्निष्ठान्तस्य परनिपातः । अवज्ञाय अनादृत्य । सद्भार्यत्वात् । असकौ राक्षसी पापासौ । कुत्सायामव्ययसर्वनाम्नामकच् । सौमित्रये लक्ष्मणाय । श्लाघह्नुङित्यादिना सम्प्रदानसंज्ञा । तस्थे स्वाभिप्रायं मैथुनायाविष्कृतवती । प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने तङ् ॥

( कलापकम् )

**दधाना बलिभं मध्यं कर्णजाहविलोचना ।**
**वाक्त्वचेनातिसर्वेण चन्द्रलेखेव पक्षतौ ॥ १६ ॥**

**दधानेत्यादि** ॥ सा तं प्रार्थयाञ्चक्र इति वक्ष्यमाणेन सम्बन्धः । कीदृशी मध्यं

स्तनजघनयोरन्तरम् । बलिभं बलयोऽस्मिन् सन्तीति । तुन्दिबलिवटेर्भ. । दधाना धारयन्ती । कर्णजाहविलोचना । कर्णजाहं कर्णमूलसमीपमित्यर्थः । तस्य पाकमूल इत्यादिना जाहच् । कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युपमानेत्यादिना उपपदलोपी बहुव्रीहिः । वाक्त्वचेन वाक्च त्वक्चेति प्राण्यङ्गत्वादेकवद्भावः । द्वन्द्वाच्चुदषहान्तादिति टच् । अतिसर्वेण अतिक्रान्तेन सर्वम् । अत्यादय इति स. । एकविभक्तिचापूर्वनिपात इति सर्वशब्दस्योपसर्जनत्वेऽपि पूर्वनिपातो न भवति अपूर्वनिपात इति प्रतिषेधात् । वाक्त्वचेन वाङ्मयेन माधुर्येण मार्दवेन चामाधारणेनोपलक्षितेनेत्यर्थ. । इत्थम्भूते तृतीया । चन्द्रलेखेव पक्षतौ तनुत्वात् । पक्षोऽत्रार्धमासः । तस्य मूले प्रतिपदि । पक्षात्ति. ॥

**सुपाद् द्विरदनासोरूर्मृदुपाणितलाङ्गुलिः ।**
**प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥**

**सुपादित्यादि** ॥ शोभनौ पादौ यस्या असौ सुपात् । सङ्ख्यासुपूर्वस्येति पादान्तलोप । पादोऽन्यतरस्यामिति यदा ङीप् नास्ति तदेत्थं रूपम् । द्विरदनासोरुर्द्विरदनासे इव करिपोतकरा इव ऊरू यस्या । उपमानपूर्वो बहुव्रीहि । ऊरूत्तरपदादौपम्य इति ऊङ् । रद्यते अनेनेति रदः दन्तः । पुंसि संज्ञायां घः करणे । द्वौ रदौ यस्येति द्विरदः । मृदुपाणितलाङ्गुलि· । तलश्च अङ्गुलिश्चेति द्वन्द्व· । तत्र घ्यन्तात्पाच्तरयोः अल्पाच्तरस्य पर्वनिपात. । पाण्योम्तलाङ्गुलि पाणितलाङ्गुलि । मृदु पाणितलाङ्गुलि यस्या इति योज्यम् । प्रथिमानं पृथुतां दधानेन धारयता । घनेन उपचितेन जघनेनोपलक्षिता सा राक्षसी ॥

**उन्नसं दधती वक्रं शुद्धदल्लोलकुण्डलम् ।**
**कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥ १८ ॥**

**उन्नसमित्यादि** ॥ उच्यते अनेनेति वक्त्रम् । सर्वधातुभ्य औणादिकः ष्ट्रन् । तत्र वक्त्रशब्दो मुखैकदेशे वर्तमानोऽपि कविभि· समुदाये प्रयुज्यते । वक्त्रं मुखमुन्नसं दधती । नाभ्यस्ताच्छतुरिति नुम् न भवति । उन्नता नासिका यस्मिन्निति । अच्नासिकाया. संज्ञायां नसं चेत्यधिकृत्य उपसर्गाच्चेत्यच् । नासिका च नसादेशमापद्यते । शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिस्तच्छुद्धदत् । अग्रान्तशुद्धेत्यादिना ददादेश. । लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलम् । पश्यतो जनान् शंयून् विद्यमानसुखान् कुर्वाणा । शं सुखं तदस्यास्तीति । कंशंभ्यां बभयुस्तितुतयस इति युस् । सित्वात्पदसंज्ञा । अनुस्वारः । अपश्यतो वा शंयून् कुर्वाणा पश्यतां तु पीडाकरी । स्रग्विणी मालावती । अस्मायेत्यादिना विनिः । सुहसानना हसनं हसः । स्वनहसोर्वेत्यप् । शोभनहसनमाननं यस्याः सा ॥

**प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमम् ।**
**अनुका प्रार्थयाञ्चक्रे प्रियाकर्तुं प्रियंवदा ॥ १९ ॥**

**प्राप्येत्यादि** ॥ प्राप्य ढौकित्वा । चञ्चूर्यमाणा गर्हितमाचरन्ती । प्राणिनो हन्तव्या इति । चरेर्लुपसदेत्यादिना भावगर्हायां यङ् । चरफलोश्चेत्यभ्यासस्य नुक । उत्परस्यात इत्युत्वम् । हलिचेति दीर्घत्वम् । पतीयन्ती आत्मन. पतिमिच्छन्ती । सुप आत्मनः क्यच् । अनुका अभिलाषुका । अनुकेत्यादिना निपातित. । रघूत्तमं लक्ष्मणं प्रार्थयाञ्चक्रे प्रार्थितवती । प्रियाकर्तुमनुलोमयितुम । पतिर्मे स्या इति । सुखप्रियादानुलोम्य इति डाच् । प्रियंवदा प्रियवादिनी । प्रियवशे वद खच् ॥

तां प्रार्थनामाह—

**सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्वशंवदाम् ।**
**त्वद्भोगीनां सहचरीमशङ्कः पुरुषायुषम् ॥ २० ॥**

**सौमित्रे इत्यादि** ॥ हे सौमित्रे । इच्छुरेषणशील । विन्दुरिच्छुरिति निपातित. । अशङ्क निर्विकल्प मन । कि मा वंचयिष्यतीति । मामुपायंस्था परिणय । आशंसायाम्भूतवच्चेति लुङ् । उपाद्यम स्वीकरण इति तङ् । विभाषोपयमन इत्यकित्त्वपक्षे रूपम् । कम्राम् नमिकम्पीत्यादिना रः । वशंवदाम् । अहं ते वश्येति वदन्तीम । त्वद्भोगीनां त्वच्छरीराय हिताम् । अवैधव्यादिलक्षणयोगात् । आत्मन्विश्वजनेत्यादिना खः । सहचरीं सहगामिनीम् । भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्चयार्थत्वात टप्रत्ययः । कियन्तं कालम । पुरुषायुषं पुरुषस्यायु र्यावत् । अचतुरेत्यादौ निपातित । न्तसंयोगे द्वितीया । चरणक्रियाया कृत्स्नसंयोगात । यथा मासमुषित इति ॥

**तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे ।**
**असूर्यंपश्यरूपा त्वं किमभीरुरटार्यसे ॥ २१ ॥**

**तामित्यादि** ॥ राक्षसीं लक्ष्मण उवाच । उक्तवान् । किमित्याह । गौष्ठीने वने गोष्ठं भूतपूर्वं यस्मिन्वने । इदानीनामापि न ज्ञायते । गोष्ठात् खञ् भूतपूर्वे इति खञ् । स्त्रीपुंसभीषणे । स्त्री च पुमांश्चेति स्त्रीपुंसौ । अचतुरेत्यादौ निपातितौ । तयोर्भीषण इति षष्ठीसमास. । बिभेतेर्णिचि हेतुभये षुक् । तदन्तात् कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । तस्मिन्नभीरु सती किमित्यटार्यसे अत्यर्थमटसि । अर्ते. सूचिसूत्रीत्यादिना यङ् । यङि चेति गुणः । न न्द्रा इति प्रतिषेधस्य प्रतिषेधो यकारपरस्य न द्वित्वनिषेध इति रेफो द्विरुच्यते । भयशीला भीरुः । भियः क्रुक्लुकनौ । क्रियाशब्द-

त्वादूङुत इति ऊङ् न भवति । अमनुष्यत्वाच्च । तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता । तथाच भङ्ग्या दर्शयन्नाह । असूर्यम्पश्यरूपा । अतिगोपनीयतया । सूर्यमप्य-निषिद्धदर्शनं न पश्यतीति । असूर्यललाटयोरित्यादिना खश् । पाघ्रेत्यादिना पश्यादेशः । असूर्यम्पश्यं रूपं यस्या इति समासः । सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥

**मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी ।**
**त्वमप्सरायमाणेह स्वतन्त्रा कथमश्चसि ॥ २२ ॥**

**मानुषानित्यादि** ॥ मनोरपत्यानि मानुषा. । मनोर्जातावञ्यतौ षुक्च । तानभिलष्यन्ती कामयन्ती रन्तुमिच्छन्ती । वा भ्राशेत्यादिना श्यन् । रोचिष्णु । रोचनस्वभावा । अलङ्कृञित्यादिना इष्णुच् । अतएव दिव्यधर्मिणी । दिवि भवा दिव्याः देवाः । राक्षसा अपि देवयोनित्वात् । तेषां धर्म· स्वभाव. सोऽस्या अस्तीति । धर्मशीलेत्यादिनेनि । अप्सरायमाणा । अप्सरा इवाचरन्ती । राक्षसभावं गोपुमिति भाव । उपमानादाचार इत्यधिकारे कर्तु क्यङ् सलोपश्च । ओजसोऽप्सरसो नित्यमिति वचनात् । इह वने स्वतन्त्रा कथमश्चसि भ्रमसि । स्व आत्मा तन्त्रः प्रधानं यस्या· । अपराधीनत्वात् । अनयोक्त्या राक्षसीत्वं दर्शयति ॥

**उग्रंपश्याकुलेऽरण्ये शालीनत्वविवर्जिता ।**
**कामुकप्रार्थनापट्वी पतिवत्नी कथंन वा ॥ २३ ॥**

**उग्रमित्यादि** ॥ उग्रम्पश्यन्तीत्युग्रम्पश्या. । पापाशयत्वात् । शबरादय । उग्रम्पश्येत्यादिना खश् निपात्यते । तैराकुले व्याप्ते अरण्ये । पतिवत्नी जीवत्पति. कथं केन प्रकारेण न वा नैवं भवसीत्यर्थ. । अन्तर्वत्पतिवतोर्नुगित्यत्र पतिर्विद्यते अस्या इति मतुप् सिद्ध· । जीवत्पत्या मतुपो यत्वं निपात्यते । नुक्सूत्रेणैव विधीयते । ङीपप्रत्ययस्तूगित्वादेव सिद्ध । शालीनत्वविवर्जिता । अधृष्टतया वर्जिता । शालाप्रवेशमर्हतीति शालीनकौपीने इति खञ् निपात्यते । अधृष्टेऽभिधेये प्रवेशशब्दस्य लोपः । तस्य भाव· शालीनत्वम । कामुक कामशीलः । लषपतेत्यादिना उकञ् । तस्य प्रार्थनायां पट्वी चतुरा । वोतो गुणवचनादिति ङीष् ॥

**राघवं पर्णशालायामिच्छानुरहसं पतिम् ।**
**यः स्वामी मम कान्तावानौपकर्णिकलोचनः ॥ २४ ॥**

**राघवमित्यादि** ॥ रामं पर्णशालायामवस्थितं पतिमिच्छ । अनुरहसं विवेकप्राप्तमनुगतोरह इति विगृह्य अन्ववतप्ताद्रहस इत्यच् । यो राघवो ममापि स्वामी प्र-

भु । स्वामिन्नैश्वर्ये इति निपातितम् । कान्तावान् सभार्य । प्रवृत्तसम्भोगोऽसौ नाहमिति दर्शयति । तमेव रूपशौर्याभ्यां वर्णयन्नाह । औपकर्णिकलोचन । कर्णयो समीपमुपकर्णम् । समीपार्थे अव्ययीभाव. । तत्र प्रायभव इति उपजानूपकर्णोपनीवेष्ठक् । शेषमपि शब्दद्वयं प्रयोक्ष्यते । औपकर्णिके लोचने यस्य कर्णान्तायतलोचन इत्यर्थ ॥

**वपुश्चान्दनिकं यस्य कार्णवेष्टकिकं मुखम् ।**
**संग्रामे सर्वकर्माणौ पाणी यस्यौपजानुकौ ॥ २५ ॥**

**वपुरित्यादि** ॥ यस्य राघवस्य वपु शरीरं चान्दनिकं चन्दनेन सम्पद्यते प्राप्तशोभं भवति । मुखं च कार्णवेष्टकिकम् । कर्णवेष्टकाभ्यां कर्णालङ्काराभ्यां कार्णवेष्टकिकम् । तत्रोभयत्र सम्पादिनीति ठक् । पाणी हस्तौ संग्रामे युद्धे सर्वकर्माणौ धनु खड्गादिव्यापारकर्माणि व्यापृत । तत्सर्वादेरिति खः । औपजानुकौ । आजानुकौ । आजानुलम्बावित्यर्थ । अत्र ठक् । इसुसुक्तान्तात्कः ॥

**बद्धो दुर्बलरक्षार्थमसिर्येनोपनीविकः ।**
**यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहम् ॥ २६ ॥**

**बद्ध इत्यादि** ॥ येन असि खड्ग औपनीविक । नीवीसमीपे प्रायेण भवतीति । स हि नीवी प्राप्य वर्तमान. पार्श्वयोश्चोर्ध्वं निबद्धः । किमर्थं दुर्बलरक्षार्थं दुर्बलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी । तदर्थेत्यादिना स । तत्रार्थेन नित्यसमासः सर्वलिङ्गता च यश्चापं धनुर्धत्ते धारयति । आश्मनप्रख्यम् । अश्मनो विकार इत्यण् । "अन" इति प्रकृतिभावे प्राप्ते आश्मनो विकार उपसङ्ख्यानमिति टिलोप. पाक्षिक । विभाषर्जोरित्यतो मण्डूकप्लुत्या विभाषाग्रहणानुवृत्तेर्विकारे वाच्ये । अन्यत्राश्मन एव भवति । आश्मनेन प्रख्या सादृश्यमस्य तदाश्मनप्रख्यमुपलघटितमिव । सेषुं सशरम । अन्यदुर्वहं दु स्तेनोह्यत इति खल् । रामादन्येन दुर्वहमित्यर्थ ॥

**जेता यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने ।**
**प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥**

**जेनेत्यादि** ॥ यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसा. । सत्सूद्विषेत्यादिना क्विप । तेषां संग्रामे जेता । तृजन्तोऽयम । ततश्च कृत्प्रयोगे कर्मणि षष्ठी । धर्मसन्तानसूः पूर्ववत् क्विप् । धर्मरत इत्यर्थ । वने वर्तमानानां मुनीनां वानप्रस्थादीनामित्यर्थ । तेषा भार्याग्निपरिग्रहात् यानि दारगवानि । दाराश्च गावश्चेति दारगवानि । अचतुरेत्यादिना निपातितानि । दारयन्तीति दारा । दारजारौ कर्तरि णिलुक्चेति घञ् । तेषां च येनाभय सदा दत्तमिति योज्यम् । येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम् ॥

**ततोवावृत्यमानासौ रामशालां न्यविक्षत ।**
**मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥**

**तत इत्यादि** ॥ ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना । वा वृतुवरण इति दैवादिकः आत्मनेपदी । रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा । विशेः शल इगुपधादनिटः क्सः । नेर्विश इति तङ् । मामुपायंस्त रामेति हे राम अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यभेदेन योज्यम् । आशंसायां भूतवच्चेति लुङ् । "उपाद्यमः स्वकरणे" इति तङ् । "विभाषोपयमने" । इत्यकिस्वपक्षे रूपम् । इत्येवं वचः सादरं वदन्ती ॥

**अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव ।**
**पतिरित्यब्रवीद्रामस्तमेव व्रज मा मुचः ॥ २९ ॥**

**अस्त्रीत्यादि** ॥ असौ लक्ष्मणोऽस्त्रीक । न विद्यते अस्य स्त्रीति । नद्यृतश्चेति कप् । न कपीति ह्रस्वप्रतिषेधः । अहं पुनः स्त्रीमान् सभार्यः । प्रशंसायां मतुप् । स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः । तिङश्चेति तरप् । किमेदित्याम । तस्मात्तमेव लक्ष्मणं व्रज गच्छ । मा मुचः मा त्याक्षीः । मुचेर्लुङ् । लृदित्वादङ् । इति एवमब्रवीद्रामः उक्तवान् । आदादिकस्य ब्रुवो लङि ब्रुव ईडिति ईटि रूपम् ॥

**लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत् ।**
**मन्मथायुधसम्पातव्यथ्यमानमतिः पुनः ॥ ३० ॥**

**लक्ष्मणमित्यादि** ॥ लक्ष्मणं पुनर्भूयोऽगमत् । लक्ष्मणं प्रति गता । यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षं महावृषम । वृषस्यन्तीत्युपमानविशेषणमेतत् । तेन वृषं लब्धुमिच्छन्तीति क्यच् । अश्वक्षीरेत्यादिना असुक् । तद्वयश्ववृषयोर्मैथुनेच्छायामिति । तद्वदागमत् । महोक्षमिति अचतुरादिसूत्रेण निपातितम् । मन्मथस्यायुधानि शराः । आयुध्यन्ते एभिरित्यायुधानि । घञर्थे कविधानमिति कः । तेषां सम्पातः संश्लेषः । तस्मात् व्यथ्यमाना पीड्यमाना मतिर्मनो यस्याः ॥

**तस्याः सासद्यमानाया लोलूयावान् रघूत्तमः ।**
**असिं कौक्षेयमुद्यम्य चकारापनसं मुखम् ॥ ३१ ॥**

**तस्या इत्यादि** ॥ सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः । लुपसदेत्यादिना यङ् । रघूत्तमो लक्ष्मणः । मुखमपनसमपगतनासिकं चकार । उपसर्गाच्चेत्यच् । नासिका च नसादेशमापद्यते । तत्र संज्ञायामिति नानुवर्तते । किं कृत्वा कौ-

क्षेयमसिमुद्यम्य उत्क्षिप्य । कुक्षौ भव इति दृतिकुक्षील्यादिना ढञ् । कौक्षेयः । लोलूयावान् अत्यर्थं लवनक्रियायुक्तः । लुनातीति लोलूया । यङन्तादप्रत्ययादित्यकारः । सा विद्यते यस्येति मतुप् ॥

**अहं शूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया ।**
**दण्डोऽयं क्षेत्रियो येन मय्यपातीति साब्रवीत् ॥ ३२ ॥**

**अहमित्यादि** ॥ सा राक्षसीत्यब्रवीत् । अहं शूर्पणखेति नाम्ना नूनमवश्यं त्वया नाज्ञायिषि न ज्ञातास्मि । ज्ञा इत्यस्मात्कर्मणि लुङ । स्यसिजित्यादिना अजन्तत्वात् चिण्वदिट् । आतो युगिति युक् । स्वाङ्गाच्चेति ङीषि प्राप्ते नखमुखात संज्ञायामिति प्रतिषेधः । पूर्वपदात्संज्ञायामिति णत्वम । अज्ञाने कारणमाह । येनायं दण्डो नासाछेदनलक्षणो मय्यपाति पातितः । पाते कर्मणि लुङ् । चिणादेशः । अत उपधाया इति वृद्धिः । चिणो लुक् । क्षेत्रियः परक्षेत्रे चिकित्स्यः परक्षेत्रे जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकाया सम्भवात् । क्षेत्रियच् परक्षेत्रे चिकित्स्य इति निपातनम ॥

**पर्यशाप्सीद्दिविष्ठासौ संदर्श्य भयदं वपुः ।**
**अपिस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ ३३ ॥**

**पर्यशाप्सीदित्यादि** ॥ असौ राक्षसी पर्यशाप्सीत् आक्रुष्टवती । शपेरनिटः सिचि हलन्तलक्षणा वृद्धिः । शप उपालम्भन इति तङ् न भवति । उपालम्भनं हि वाचा शरीरस्पर्शनम् । दिविष्ठा नभसि वर्तमाना । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । अम्बाम्बेति षत्वम । भयदं रौद्रं वपुः शरीरं संदर्श्य दर्शयित्वा । बन्धूना विक्रमं शौर्यं मुहुः पुनः पुनः । अपिस्फवत् स्फीतीचकार । अर्तिह्रीत्यादिना णाविल्यनुवृत्तौ स्फायो व इति वकारः । स्फायतेश्चङि णिलोप । ह्रस्वद्विर्वचनादि । अभ्यासस्य खयः शेष । चर्त्वमित्वं च सन्वद्भावे । निनङ्क्षु नष्टुमिच्छुरित्यर्थः । नशेः सनि मस्जिनशोर्झलीति नुम ॥

**खरदूषणयोर्भ्रात्रोः पर्यदेविष्ट सा पुरः ।**
**विजिग्राहयिषू रामं दण्डकारण्यवासिनोः ॥ ३४ ॥**

**खरेत्यादि** ॥ खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनो पुर अग्रतः पर्यदेविष्ट परिदेवनं कृतवतीति । देवृ देवन इत्यस्यात्मनेपदिन सेटो लुङि रूपम । परिदेवने कारणमाह । विजिग्राहयिषु रामं विग्राहयितुं योधयितुमिच्छु । ग्रहेर्ण्यन्तस्य सन्नन्तस्य रूपम । रो रीति रेफलोपः । ढ्रलोप इति दीर्घत्वम् ॥

**कृते सौभागिनेयस्य भरतस्य विवासितौ ।**
**पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥ ३५ ॥**

**कृते इत्यादि** ॥ किंपर्यदेविष्ट इत्याह । भरतस्य कृते कार्यनिमित्तं राज्ये अभिषेक्तव्यमिति । सुभगा केकयी तस्या अपत्यं सौभागिनेयः । स्त्रीभ्यो ढक् । कल्याण्यादीनामिनङ् । तत्र सुभगा दुर्भगा चेति पठ्यते । हृद्भगेत्युभयपदवृद्धिः । पित्रा यौ विवासितौ निष्कासितौ । दौर्भागिनेयौ कौशल्या सुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितं नासाच्छेदनं पश्यतम् । विधौ प्रार्थनायां वा लोट् । थसस्तम् ॥

**मम रावणनाथाया भगिन्या युवयोः पुनः ।**
**अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमम् ॥ ३६ ॥**

**ममेत्यादि** ॥ रावणो नाथः प्रभुर्यस्याः मम विशेषणम् । युवयोर्भगिन्या अयं तापसकात् कुतापसात् । कुत्सायां कन् । ध्वंसो नासिकाविनाशः । यदि वः युष्माकं गुरूणां क्षमं युक्तम क्षन्तुमित्यर्थात् । युष्मदि गुरावेकेषामिति बहुवचनं तयोर्ज्येष्ठत्वात् । तर्हि क्षमध्वं उपेक्षध्वम । रावण एव ज्ञास्यतीति भावः ॥

**असंस्कृत्रिमसंव्यानावनुप्तिमफलाशिनौ ।**
**अभृत्रिमपरीवारौ पर्यभूतां तथापि माम् ॥ ३७ ॥**

**असमित्यादि** ॥ पुनरप्येजयितुमाह । संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिम् । उप्त्रिमं भृत्रिमं च । ड्वित. क्त्रिः । क्त्रेर्मम् नित्यम् । संपर्युपेभ्य इति सुट् । सम्पूर्वस्य क्वचिदभूषणेऽपीष्यते । संस्कृत्रिमं न विद्यते येषामिति नञ् समास. । असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरीयाणि ययोः । वल्कलवाससावित्यर्थः । अनुप्त्रिमाणि फलानि अशनमाहारो ययोः तौ वन्यफलाहारौ न शालिभोजनौ । परिक्रियतेऽनेनेति घञ् । उपसर्गस्य घञीति दीर्घः । मृगाणाममनुष्यत्वात् । अभृत्रिमः परीवारो अनुजीविलोको ययोस्तौ । मृगपरिवारौ । तथापि मां पर्यभूतां परिभूतवन्तौ । लुङि रूपम् ॥

**श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा ।**
**प्राणिवस्तव मानार्थं व्रजाश्वसिहि मा रुदः ॥ ३८ ॥**

**श्वःश्रेयसमित्यादि** ॥ श्वःशब्दः प्रशंसामाह । शोभनं श्रेय इति वाक्ये श्वसोवसीयः श्रेयस इत्यच् । मयूरव्यंसकादित्वात् सः । श्वःश्रेयसं कल्याणमवाप्तासि प्राप्स्यसि । भविष्यदनद्यतने लुट् । मारयावस्तावित्युक्तं भवति । ताभ्यां भ्रातृभ्यां प्रत्यभाणि प्रतिभणिता सा । कर्मणि लुङ् । प्राणिवस्तव मानार्थम् । तव मानखण्डनं माभूदिति

जीवावः। श्वस् प्राणने अन् च। रुदादिभ्यः सार्वधातुक इति इट्। अनितेरिति णत्वम्। तस्माद्व्रज। यथास्थानं गच्छ। आश्वसिहि। उद्वेगं त्यज। विधौ प्रार्थनायां वा लोट्। मा रुदः। माङि लुङ्। इरितो वेत्यङ् यदा नास्ति तदा मारोदीरिति॥

**जक्षिमोऽनपराधेऽपि नरान्नक्तन्दिवं वयम्।**
**कुतस्त्यं भीरु यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे॥ ३९॥**

**जक्षिम इत्यादि**॥ वयं अनपराधेऽपि। नक्तं च दिवा च नक्तन्दिवम्। अचतुरेति निपातितम्। नरान् जक्षिमो भक्षयामः। जक्षभक्षहसनयोरिति भक्षार्थस्य रुदादिभ्य इतीट्। अस्मदोर्द्वयोश्चेति द्वित्वे वयमिति बहुवचनम्। यत एवं हे भीरु! संबुद्धौ गुणो न भवति संज्ञापूर्वको विधिरनित्य इति। कुतस्त्यम् कुत एतदागतम्। अव्ययत्वात् त्यप्। अमेहक्वतसित्रेभ्य इति त्यप्। तेभ्यो नरेभ्यो द्रुह्यद्भ्योऽपि द्रोहं कुर्वाणेभ्योऽपि क्षमामहे। नैवेत्यर्थः। क्रुधद्रुहेति सम्प्रदानत्वम्। क्षमेर्गम्यमानो नञर्थस्तस्यासूयार्थत्वात् क्षमध्वं यदि वः क्षममित्यस्य प्रतिवचनम्॥

**तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः।**
**पारश्वधिकधानुष्कशाक्तिकप्रासिकान्वितौ॥ ४०॥**

**तावित्यादि**॥ ततो निगदनादुत्तरकालं निर्ययतुर्निर्गतवन्तौ। चतुर्दशसहस्राणि परिमाणं यस्य बलस्य। तदस्य परिमाणमित्यस्मिन्विषये शतमानविंशतिकसहस्रवसनादण् प्राग्वतेः। सङ्ख्यायाः संवत्सरेत्युत्तरपदवृद्धिः। चतुर्दशसाहस्रं बलं ययोः तौ। तथा पारश्वधिकधानुष्कयाष्टिकप्रासिकान्वितौ। परश्वधः प्रहरणमेषामिति परश्वधात् ठञ्। तथा धनुः प्रहरणमेषां यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक्। प्रासः कुन्तः प्रहरणमित्यौत्सर्गिकष्ठक्। तत्र धनुषष्ठक्। इसुसुक्तान्तात्कः। ततः सेनाङ्गत्वात्कृतैकवद्भावः तेनान्वितावनुगतौ॥

**अथ सम्पततो भीमान् विशिखैरामलक्ष्मणौ।**
**बहुमूर्ध्नो द्विमूर्धांश्च त्रिमूर्धांश्चाहतां मृधे॥ ४१॥**

**अथेत्यादि**॥ अथैतस्मिन् प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ। हन्तिः परस्मैपदी तस्माल्लङि तस्तान्। तस्य ङित्त्वे अनुदात्तेत्यादिना अनुनासिकलोपः। कान् राक्षसान्। विशेषणोपादानात् विशेष्यप्रतिपत्तिः। प्रकृतत्वाद्वा। सम्पततोऽभिपततः। बहुमूर्ध्नो बहुशिरसः। तथा द्विमूर्धांस्त्रिमूर्धांश्च। द्वित्रिभ्यां ष मूर्ध्न इति समासान्तः षः। अतएव भीमान् भयानकान्। त्रिमूर्धांश्चेत्यत्र नश्छव्यप्रशानिति रुः। पूर्वस्य त्वनुनासिकः। विसर्जनीयस्य सः। चुत्वम्॥

**तैर्वृक्णरुग्णसंभुग्नक्षुण्णभिन्नविपन्नकैः ।**
**निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी ॥ ४२ ॥**

**तैरित्यादि** ॥ तैः राक्षसैर्मेदिनी पप्रे पूरिता । प्रापूरण इत्यस्मात्कर्मणि लिट् । वृक्णैः छिन्नै । रुग्णैः भग्नहस्तपादैः । सम्भुग्नैः वक्रीकृतदेहैः । क्षुण्णैः सम्पिष्टशरीरैः । भिन्नैः विदारितै । विपन्नकैः नष्टैः । अनुकम्पायां कन् । निमग्नैः परिभूतैः । उद्विग्नैर्भीतैः । संह्रीणैर्लज्जितैः । वयमपीदृशी दशां प्राप्ता इति । दीनैः हा मातः हा भ्रातरित्येवं भाषमाणै । तत्र वृश्चिरुजिभुजिमस्जिविजिभ्यो निष्ठायामोदितश्चेति नत्वम् । चो. कुरिति कु. । क्षुदिभिदिपदिभ्यो रदाभ्यामिति दस्य च नः । संह्रीण इति नुदविदेत्यादिना । दीङ्क्षये इत्यस्य स्वादय ओदित इत्योदितश्चेति नत्वम् ॥

**केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमम् ।**
**सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥**

**केचिदित्यादि** ॥ तेषां मध्ये केचित् वेपथुं कम्पम् । टुवेपृकम्पने । आसेदुः प्राप्ताः । अन्ये दवथुमुपतापमुत्तमं महान्तम् । टुदुउपतापे । केचिद्वमथुं छर्दनं सरक्तं सशोणितम् । टुवम्उद्गिरणे । भ्राजथुं शोभां नैव केचन न केचिदपि । टुभ्राजृदीप्तौ । सर्वत्र ट्वितोऽथुच् ॥

**मृगयुमिव मृगोऽथ दक्षिणेर्मा**
**दिशमिव दाहवतीं मरावुदन्यन् ।**
**रघुतनयमुपाययौ त्रिमूर्धा**
**विषभृदिवोग्रमुखं पतत्रिराजम् ॥ ४४ ॥**

**मृगयुमित्यादि** ॥ अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्धः त्रिशिरा नाम राक्षस रघुतनयमुपाययौ उपागतः । मृगयुमिव लुब्धकमिव । मृगान् यातीति मृगयुः । मृगय्वादयश्चेत्यौणादिककुप्रत्ययान्त. । दक्षिणेर्मा दक्षिणे ईर्मं व्रणं यस्येति । दक्षिणेर्मा लुब्धयोग इत्यनिच् । यथा मृगो लुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति । दिशमिव दाहवती यथा दिशं दावाग्नियुतां मरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति । उदकमिच्छति सुप आत्मन इति क्यच् । उदकस्योदन् भावः । अशनायेत्यादिना निपातितम् । तदन्ताल्लट् शतृप्रत्ययः । विषभृदिव यथा विषधरः सर्प उग्रमुखं भीषणमुखं पतत्रिराजं गरुडमुपयाति तद्वत्तमिति । राजाहः सखिभ्यष्टच् ॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः
क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः ।
भयमुपनिदधे स राक्षसाना-
मखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥ ४५ ॥

इति भट्टिकाव्ये चतुर्थः सर्गः ॥

**शितेत्यादि** ॥ त्रिमूर्धा राक्षसानां भयमुपनिदधे उपनिहितवान् । कीदृशः शित-विशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य स । क्षितिभृदिव भूधर इव । कीदृश क्षितिकम्पकीर्णशृङ्ग क्षितेर्भूमे कम्पेन कीर्णा-नि क्षिप्तानि शृङ्गाणि यस्य क्षितिभृतः । अखिलस्य सर्वस्य कुलस्य क्षये विनाशे यत् पूर्वं लिङ्गं तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्वलिङ्गतुल्यः ॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामप्रवास-श्चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ।

निराकरिष्णू वर्तिष्णू वर्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥

**निरेत्यादि** ॥ खरदूषणौ रणं परितः समन्तात् । अभित इत्यादिना द्वितीया । चेरतुः भ्रान्तौ । निराकरिष्णू शत्रुनिराकरणशीलौ । वर्तिष्णू अभिमुखं वर्तनशीलौ न पलायनशीलौ । वर्धिष्णू मायया महाप्राणोद्भावनशीलौ । उत्पतिष्णू नभ उत्पतनशीलौ । सहिष्णू शस्त्रप्रहारसहनशीलौ । सर्वत्रालंकृञित्यादिना इष्णुच् ॥

तौ खड्गमुशलप्रासचक्रबाणगदाकरौ ।
अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥ २ ॥

**तावित्यादि** ॥ रणे रणभूमौ रजःसन्तमसे । सङ्गतं तमः सन्तमसम् । अवसम-न्धेभ्यस्तमस इत्यच् । रजसा सन्तमसं अस्मिन् इति रजःसन्तमसं तस्मिन् रजसा कृता-न्धकारे तौ खरदूषणौ आयुधच्छायमायुधबाहुल्यमकार्ष्टाम् कृतवन्तौ । आयुधाना छा-येति छायाबाहुल्य इति नपुंसकत्वे ह्रस्वत्वम । खड्गादीना बाणांताना द्वंद्वैकवद्भावं कृत्वा

पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात् सः । अन्यथा समुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् । बाणगदमिति । खड्गमुशलप्रासचक्रबाणगदाः करे येषामिति समासे प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः ॥

**अथ तीक्ष्णायसैर्बाणैरधिमर्म रघूत्तमौ ।**
**व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥**

**अथेत्यादि** ॥ अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ । कर्मभूतौ द्विषाविति । सत्सूद्विषेत्यादिना क्विप् । यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ । तदधीनवचन इति सातिः । तीक्ष्णायसैर्बाणैः । तीक्ष्णमायसं फलं येषामिति । व्याधं व्याधं विद्ध्वा विद्ध्वा। आभीक्ष्ण्ये णमुल् । तत्र समानकर्तृकयोः पूर्वकाल इति वर्तते । आभीक्ष्ण्ये द्वे भवत इति द्विर्वचनम् । अधिमर्मेति विभक्त्यर्थेऽव्ययीभावः । अमूढौ सावधानौ रामलक्ष्मणौ मर्मवेधमेवाह ॥

**हतबन्धुर्जगामासौ ततः शूर्पणखा वनात् ।**
**पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥ ४ ॥**

**हतेत्यादि** ॥ असौ शूर्पणखा हतबन्धु व्यापादितभ्रातृद्वया ततो वनाद्दण्डकारण्यात् रावणं पतिं प्रभुं शरणं जगाम गतवती । पारेसमुद्रम् । समद्रस्य पार इति। पारे मध्ये षष्ठ्या वेत्यव्ययीभाव । तत्सन्नियोगेन पूर्वपदस्यैकारान्तत्वम् । पश्चात्सप्तमी । नाव्ययीभावादित्यम्भावः । समुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति ॥

**संप्राप्य राक्षससभं चक्रन्द क्रोधविह्वला ।**
**नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके ॥ ५ ॥**

**संप्राप्येत्यादि** ॥ सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा । राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता । चक्रन्द क्रन्दनं कृतवती । क्रोधविह्वला क्रोधविवशा । भ्रातरौ खरदूषणावरोदीत् रुदितवती । नामग्राहं नाम गृहीत्वा । भ्रातरौ खरदूषणाविति। नाम्न्या दिशि ग्रहोरिति णमुल् । अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्मक । रावणान्तिके रावणसमीपे । सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्य इति सप्तमी ॥ तयो कि जातमिति रावणेन पृष्टाह ॥

**दण्डकानध्यवात्तां यौ वीर रक्षःप्रकाण्डकौ ।**
**नृभ्यां संख्येऽकृषातां तौ सभृत्यौ भूमिवर्धनौ ॥ ६ ॥**

**दण्डकानित्यादि** ॥ हे वीर दण्डकान् दण्डकारण्यसन्निवेशान् अध्यवात्ताम्

अध्युषितवन्तौ । वसनिवास इत्यस्माल्लुङ् । हलन्तलक्षणा वृद्धिः । सः सीत्यादिना धातुसकारस्य तत्वम् । झलो झलीति सिचो लोपः । रक्षःप्रकाण्डको प्रशस्तौ राक्षसौ । प्रशंसावचनैश्चेति स । ततः स्वार्थे कन् । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति नपुंसको न भवति । अन्यथा रूढिशब्दा प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणा. स्युः । यथा गोप्रकाण्डमिति । तौ नृभ्यां मनुष्याभ्यां सङ्ख्ये युद्धे भूमिवर्धनावकृपाताम् कृतौ । कर्मणि लुङ् । अभिण्वद्भात्रे रूपम् । वर्धेते इति वर्धनौ । कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । भूमेर्वर्धनाविति स । भस्मीकृतशरीरस्य भूमौ लीयमानत्वात् । सभृत्यौ नैकाकिनौ ॥

**विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा ।**
**सार्धं कुमारसेनान्या शून्यश्चासीति को नयः ॥ ७ ॥**

**विग्रह इत्यादि** ॥ बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन । कार्येषु पुरः धीयत इति पुरोधा । पुर पूर्वाद्धाञ्. सर्वधातुभ्य असुन् । तथा कुमारः कार्तिकेय सेनानीर्यस्य । सेनां नयतीति सत्सूद्विषेत्यादिना क्विप् । तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् । इदानीं कार्यनिपुणाभावात् शून्यश्चासि । तासस्त्योर्लोप इति सकारलोप. । तस्मात्को नयः । नय एव न भवतीत्यर्थः ॥

तदेव दर्शयन्नाह—

**यद्यहं नाथ नायास्यं विनसा हतबान्धवा ।**
**नाज्ञास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः ॥ ८ ॥**

**यदीत्यादि** ॥ विनसा विगता नासा यस्या । नासैव नासिकेति केण इति ह्रस्वत्वे रूपम् । तस्या नसादेशस्य विधीयमानत्वात् । अत्र सम्भव एव नास्ति । विनसेति पाठान्तरम् तत्र विगता चासौ नासिका च विनासिका । तत इत्थम्भूतलक्षणायां तृतीयायां पद्दन्नोमास इत्यादिना नसादेश । विगतया नासिकयोपलक्षितेत्यर्थ । विगता नासिका अस्या इति बहुव्रीहिणा व्याख्याने अञ्नासिकेत्यादिना अच् नसादेशश्च प्राप्नुत । तस्य संज्ञाविषयत्वात् । उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रो वक्तव्य इति ग्रादेशो बाधकः । हे नाथ यद्यहं विनसा हतबान्धवा नायास्यं न याता भविष्यम् तदा तदिदं सर्वं भ्रात्रोर्वधं नासाछेदं च नाज्ञास्य न ज्ञातोऽभविष्य । क्रियातिपत्तौ लिङ् । अज्ञाने कारणमाह । प्रमाद्यन् विषयेषु प्रमादं गच्छन् । चारदुर्बल. चारहीन । चारा हि चक्षू राज्ञां कार्याकार्यज्ञानाय लोके । चरतीति चर पचाद्यच् । चर एव चारः प्रज्ञादित्वादण् ॥

**करिष्यमाणं विज्ञेयं कार्यं किंनु कृतं परैः।**
**अपकारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान्॥ ९॥**

**करिष्यमाणमित्यादि** ॥ परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणं कार्यं विज्ञेयम्। किनु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः। त्वं पुन. परैरपकृतोऽपि अज्ञोऽविदितस्वरूपः। अतो विजिगीपुर्न वा भवान् सुप्तो न राज्यं सम्भावयतीत्यर्थः॥

**वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान्।**
**पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः॥ १०॥**

**वृत इत्यादि** ॥ अत्यन्तं गामिनीति अवारपारेत्यादिना ख. । तस्य भावोऽत्यन्तीनत्वम्। नैवात्यन्तीनामत्यन्तगामिनी श्रियं नेता न प्रापणशीलः। तृन्निति ताच्छीलिकस्तृन्। न लोकेति षष्ठीप्रतिषेधः। यद्यपि महोदयं राज्यं प्राप्तवानसि तथापि न चिरकालमित्यर्थः। यतस्त्वमुन्मनाः भ्रान्तचित्तः। यतः पानशौण्डः पाने प्रसक्तः। सप्तमी शौण्डैरिति स। अतएव प्रमादवान्। अतोऽपि खट्वारूढः उत्पथप्रस्थितः। खट्वाक्षेप इति द्वितीया सः। तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्वृत। पात्रेसमितादयश्चेति क्षेपे सः॥

**अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्।**
**अत्तुं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना॥ ११॥**

**अध्वरेष्वित्यादि** ॥ त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्र आश्रमानैति आगच्छति। आङ्पूर्वस्येणः एत्येधत्यूठ्स्विति वृद्धिः। सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप्। सोमसुत सन्ति येष्वाश्रमेष्विति मतुप्। तसौ मत्वर्थ इति भत्वे तकारस्य जस्त्वं न भवति। झय इति मतोर्वत्वम्। किमर्थमैतीत्याह। अत्तुं भक्षयितुं महेन्द्रियं भागम। महेन्द्रो देवता अस्येति। महेन्द्राद्घाणौ चेति घ.। क्व अध्वरेषु यज्ञेषु। अग्निचित्वत्सु। अग्निचितवन्तोऽग्निचितः। आहिताग्नय.। अग्नौ चेरिति क्विप्। ते सन्ति येष्विति पूर्ववन्मतुप्॥

**आमिक्षीयं दधिक्षीरं पुरोडाश्यं तथौषधम्।**
**हविर्हैयङ्गवीनंच नाप्युपघ्नन्ति राक्षसाः॥ १२॥**

**आमीत्यादि** ॥ दध्ना सहितं शृतं पय आमिक्षा। तस्मै हितमामिक्षीयम्। विभाषा हविरपूपादिभ्य इति छयतौ। दधि च क्षीरं चेति। विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः। पुरोडाशाय हितमौषधं नीवारतण्डुलादि पुरोडाश्यम्। अपूपादित्वाद्यत्।

ओषिधिरेवौषधम् । ओषधेरजाताविल्यण् । तण्डुलानामजातित्वात् । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति नपुंसकलिङ्गता । हविः हूयत इति हवि. । अर्चिशुचीत्यौणादिक इस् । हैयङ्गवीनं घृतम् । ह्यो गोदोहस्य विकार इत्यर्थे हैयङ्गवीनं संज्ञायामिति निपातनात् खञ् हियंग्वादेशश्च । तानि नाप्युपघ्नन्ति राक्षसाः त्वय्युदासीने सति ॥

इदानीकार्यप्रदर्शनेन प्रोत्साहयितुमाह—

**युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः ।**
**रामो यज्ञद्रुहो हन्ति कालकल्पशिलीमुखः ॥ १३ ॥**

**युवेत्यादि** ॥ युवति. यौवनवती जाया यस्य युवजानि । जायाया निङ् । वलि लोप । स्त्रियाः पुंवद्भावात् स्त्रीप्रत्ययो निवर्तते । धनुष्पाणि पाणौ धनुर्यस्य । प्रहरणेत्यादिना परनिपात. । भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठ' । नाकाशचरः । सुपि स्थ इति क' । अम्बाम्बेत्यादिना षत्वम् । कालकल्पशिलीमुखः मृत्युतुल्यशर. । रामो राक्षसान् हन्ति खविचारिणः आकाशचरणशीलान् । सुप्यजाताविति णिनिः ॥

**मांसान्योष्ठावलोप्यानि साधनीयानि देवताः ।**
**अश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः ॥ १४ ॥**

**मांसेत्यादि** ॥ ओष्ठावलोप्यानि ओष्ठाभ्यांछेदार्हाणि शक्यानि वा । अर्हार्थे शक्यार्थे वा कृत्यः । कृत्यैरधिकार्थवचन इति सः । साधनीयानि यज्ञस्य साधनाय हितानि । तस्मै हितमिति छः । सावनीयानीति पाठान्तरम् । तत्र सवनं स्नानं तद्योगात्स्नानकोऽपि तथोच्यते तत्र भव सावनो यज्ञ तस्मै हितानीति छः । तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसा रक्षांसि किन्तु रामाद्बिभ्यति । वा नपुंसकस्येति शतुर्नुमभावपक्षे रूपम् । दिशोऽश्नुवते व्याप्नुवन्ति ॥

**कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज ।**
**लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥**

**कुर्वित्यादि** ॥ कुशाग्रीयां कुशाग्रमिव सूक्ष्माम् । कुशाग्राच्छ इति इवार्थे छः । स्थूलबुद्धिर्माभूदित्यर्थ' । अनुकामीनतां त्यज । यथेच्छगामितां त्यज । अवारपारेत्यादिना खः । परम्परीणां परांश्च परतरांश्च अनुभवतीत्यर्थे परशब्दात् परोवरेत्यादिना खः परंपरादेशश्च । तां लक्ष्मी क्रमायातां त्वं पुत्रपौत्रीणतां नय पुत्रांश्च पौत्रांश्चानुभवतीति खः । तस्य भावः । पुत्रपौत्रानुगामिनी कुर्वित्यर्थ. ॥

**सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।**
**श्रियमाशासते लोलां तां हस्तेकृत्य माश्वसीः ॥ १६ ॥**

**सहेत्यादि** ॥ यांच श्रियं त्वदीयां शौर्योपात्तां सहायवन्तः ससहाया उद्युक्ता उत्साहवन्तो निपुणाः कुशला आशासते इच्छन्ति । आङः शासुइच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् । आत्मनेपदेष्वनत इत्यदादेशः । तां हस्तेकृत्य स्वीकृत्य । माश्वसीः आश्वासं मा कार्षीः । चञ्चलत्वात् । यदाह लोलामिति । ह्यन्तक्षणश्वसजागृणीति वृद्धिप्रतिषेधः । इट ईटीति सिचो लोपः । नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यब्वादेशः ॥

तां लोलतां दर्शयन्नाह—

**लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।**
**अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥**

**लक्ष्मीरित्यादि** ॥ त्वयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न मां परित्यजतीति । यतः छलेन व्याजेन अन्यं निरीक्षते । किमर्थं पुंयोगमाशंसुः । अभिलषन्ती । सनाशंसभिक्ष उः । कुतूहलात् कोऽस्य विशेष इति । स्नेहादन्तिके अदूरेऽपि स्थिता पत्युः । दूरान्तिकार्थैरित्यादिना षष्ठी । कुलटेव बन्धकीव । शकन्ध्वादिषु दर्शनात्पररूपम् ॥

युवजानिरित्युक्तं तद्योषित्प्रलोभनायाह—

**योषिद्वृन्दारिका तस्य दयिता हंसगामिनी ।**
**दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला[1] ॥ १८ ॥**

**योषिदित्यादि** ॥ योषिच्चासौ वृन्दारिका चेति । वृन्दारकेत्यादिना सः । रूपेण प्रियेत्याह दयिता प्रिया । प्रशस्तत्वे कारणमाह । हंस इव गन्तुं शीलं यस्याः । कर्तर्युपमान इति णिनिः । दूर्वाकाण्डमिव श्यामा दूर्वास्तम्बं तदिव श्यामा । न्यग्रोधपरिमण्डला । उपमानानीत्यादिना सः ॥

**नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा ।**
**संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१९॥**

**नास्यमित्यादि** ॥ तस्या आस्यं मुखं यो न पश्यति । दन्तच्छदं ओष्ठम् । छाद्यते अनेनेति घः । छादेर्घेऽद्व्युपसर्गस्येति ह्रस्वः । दन्तानां छदं नवा निंस्ते न चुम्बति । णिसिचुम्बन इत्यादादिक आत्मनेपदी । इदितो नुम् धातोः । उक्तानि उदितानि न संशृणोति ।

---

१ स्तनौ सुकठिनौ यस्या नितम्बे च विशालता ॥ मध्ये क्षीणाभवेद्या सा न्यग्रोधपरिमण्डला ॥ १ ॥

समोगमित्यादिना तङ् न-भवति । अकर्मकादित्यधिकारात् । मिथ्यामौ विहितेन्द्रिय । वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥

**सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः ।**
**तल्पे कान्तान्तरैः सार्धं मन्येऽहं धिङ्निमज्जथुम् ॥ २० ॥**

**सार इत्यादि** ॥ इन्द्रियार्थानां मध्ये सारोऽसौ दयिता इन्द्रियार्थः । रूपाद्यतिशययोगात् । यस्यासौ संपद्यते तस्य नन्दथुः आनन्दश्चेतसः । तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्धं निमज्जथुं शयनम् । सर्वत्र ट्वितोऽथुच् । तस्य धिक् कुत्सितमहं मन्ये । उभसर्वतसोरित्यादिना धिग्योगे द्वितीया । तया सार्धं शोभनमित्यर्थादुक्तं भवति ॥

**न तं पश्यामि यस्यासौ भवेन्नोदेजया मतेः ।**
**त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥**

**न तमित्यादि** ॥ सर्वथा न तं पश्यामि जानामि जगति यस्य संबन्धिन्या मतेश्चेतस उदेजया उत्कम्पिकासौ न भवेत् । चित्तक्षोभजनिकेत्यर्थः । उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्तरि शः । कृद्योगे कर्मणि षष्ठी । तस्मात् त्रैलोक्येनापि । त्रयश्च ते लोकाश्च ते त्रिलोकाः । त एव त्रैलोक्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । स्वार्थिका अतिवर्तन्त इति नपुंसकत्वम् । तेनापि तां क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव । आढ्यो वा भव । पाण्डित्यमस्य त्रैलोक्यमात्रेणापि स्त्रीरत्नं क्रीत्वा लब्धमिति । विन्दतीति तेनैव सूत्रेण शः ॥

अन्या अपि स्त्रियः सन्तीति चेदाह—

**नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी ।**
**वरुणानी न नाग्नायी तस्याः सीमन्तिनी समा ॥ २२ ॥**

**नैवेत्यादि** ॥ तस्यास्तु सीतायाः । तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी । न काचित् सीमन्तिनी स्त्री तुल्या समा । सीमन्तः केशेष्विति पररूपत्वम् । अन्यत्र सीमान्तः । स विद्यते यस्या इति इनिः । इन्द्राणी इन्द्रभार्या । न सम्यक् किंपुनरन्या । तथा रुद्राणी रुद्रभार्या । वरुणानी वरुणभार्या । इन्द्रवरुणेत्यादिना आनुक् । मनावी मनुभार्या । मनोरौ वेत्यौकारः । अग्नायी अग्निभार्या । वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्वत्र पुंयोगादाख्यायामिति ङीष् । रोहिणी चन्द्रभार्या । रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारश्च । वरुणानी न नाग्नायीत्यत्र प्रतिषेध एकः पूर्वेण योज्यः द्वितीयः परेणेति । नचाग्नायीति पाठान्तरम् ॥

**प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किम् ।**
**त्यज नक्तञ्चरि क्षोभं वाचाटे रावणो ह्यहम् ॥ २३ ॥**

**प्रत्यूच इत्यादि** ॥ राक्षसेन्द्रो रावण । राक्षसी प्रत्यूचे । प्रतिवचनमुक्तवान् । आश्वसिहि खेदं त्यज । रुदादीत्यादिना इट् । बिभेषि किं किमर्थं तापसकात् । हे नक्तञ्चरि मद्विषये क्षोभं रोषं त्यज । वाचाटे बहुभाषिणि । आलजाटचौ बहुभाषिणि । यस्माद्रावणोऽहम । अनेनात्मोत्कर्षमावेदयति ॥

तमेवं स्फुटयन्नाह—

**मामुपास्त दिदृक्षावान् याष्टीकव्याहतो हरिः ।**
**आज्ञालाभोन्मुखो दूरात् काक्षेणानादरेक्षितः ॥ २४ ॥**

**मामित्यादि** ॥ मामुपास्त सेवितवान् । हरिरिन्द्रः । दिदृक्षावान् द्रष्टुमिच्छावान् । आत्मदर्शनेच्छावानित्यर्थः । दूरादेव याष्टीकै वेत्रग्राहिभिर्व्याहतोऽपसारितः । कर्तृकरणे कृतेति स । यष्टिः प्रहरणमेषामिति । शक्तियष्ट्योरीकक् । आज्ञालाभे किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः । सप्तमीति योगविभागात् सः । अनादरेक्षित अवज्ञाविलोकित. । काक्षेण कुदृष्ट्या । कापथ्यक्षयोरिति कुशब्दस्य कादेशः । यदि तत्पुरुष इत्यनुवर्तते तदा कुत्सितमक्षमिति विग्रह. । अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्तते । अथ तत्पुरुष इति नानुवर्तते सामान्येनादेशस्तदा कुत्सितमक्षि यस्येति । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । काक्षेण मयेत्यर्थ. ॥

**विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि ।**
**अभिन्नं शतधात्मानं मन्यते बलिनं बली ॥ २५ ॥**

**विरुग्णेत्यादि** ॥ विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् । बली । आत्मानमभिन्नं शतधा शतप्रकारम् । संख्याया विधार्थे धा । बलिनं मन्यते । अहो बलवानहं न येन शतधा भग्न इति । तस्य देवतारूपत्वात् बलमस्त्येव । आत्मानं बलिनं मन्यत इवेत्युत्प्रेक्षा ॥

**कृत्वा लङ्काद्रुमालानमहमैरावतं गजम् ।**
**बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजम् ॥ २६ ॥**

**कृत्वेत्यादि** ॥ एष्वालीयत इत्यालानम् । अधिकरणे ल्युट् । विभाषा लीयत इत्यात्वम् । लङ्काद्रुमा आलानानि यस्यैरावताख्यस्य गजस्य तं कृत्वा । नतं नम्रमुखम् । तृ-

णमिव मत्वा । सोऽहमत्यजं त्यक्तवान् । बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥

**आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः ।**
**ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥**

**आहो इत्यादि** ॥ अहो पुरुषस्य भावः । मनोज्ञादित्वाद्वुञ् । आहोपुरुषिका कार्यसिद्धावपि । तत्साधने वृत्तिः । ता मम शूर्पणखे पश्य । सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा सन्निधानं न पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥

**हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।**
**पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥**

**हृतेत्यादि** ॥ हृतोच्चैःश्रवआदिरत्नो गोत्रभिदिन्द्रः । अतएव च्युतोद्योगः । दिवि वर्तमानोऽपि रक्षोभ्यः करदः । राजग्राह्यं वित्तं प्रयच्छन् । पूतक्रतायी शची पूतक्रतोरै च । ङीप् । पुंयोगादाख्यायामिति । सत्रपः सव्रीडः । किं नाभ्येति न ढौकते ॥

**अतुल्यमहसा सार्धं रामेण मम विग्रहः ।**
**त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥**

**अतुल्येत्यादि** ॥ तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः । कृञो हेत्वित्यादिना टः । तथापि त्वत्प्रार्थनया । एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि । वर्तमानसामीप्ये वर्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥

**उत्पत्य खं दशग्रीवो मनोयायी शितास्त्रभृत् ।**
**समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥**

**उत्पत्येत्यादि** ॥ उच्चैर्नं खमाकाशमुत्पत्य मारीचं प्रति चक्रमे । यत्र मारीचो राक्षसस्तत्र गत इत्यर्थः । अनुपसर्गाद्वेति क्रमेस्तङ् । मनोवदाशु यातुं शीलमस्येति । कर्तर्युपमान इति णिनिः । शितास्त्रभृत् गृहीततीक्ष्णचन्द्रहासः । समुद्रस्य सविधे समीपे आवासो यस्य मारीचस्य । सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीपवाची ॥

**सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ।**
**त्रस्नुनाथ श्रुतार्थेन तेनागादि दशाननः ॥ ३१ ॥**

**सम्पत्येत्यादि** ॥ असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे । अत्रापि सह

नीडेनेति व्युत्पत्तिमात्रम् । समेत्य यात्वा । तं वृत्तान्तम् शूर्पणखाकथितमशिश्रवत् । श्रावितवान् । शृणोतेर्ण्यन्तस्य लुङि रूपम् । तेन मारीचेन श्रुतार्थेन त्रसुना त्रसनशीलेन दशाननः अगादि उक्तः कर्मणि लुङ् ॥

**अन्तर्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर ।**
**यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ ३२ ॥**

**अन्तरित्यादि** ॥ हे राक्षसेश्वर त्वंतस्माद्रघुव्याघ्रादन्तर्धत्स्व अन्तर्हितो भव व्यवहितो भवेति यावत् । दधातेर्लोटि आभ्यस्तयोरित्याकारलोपः । अभ्यासस्य दधस्तथोश्चेति भष्भाव । अन्तर्धौ येनेत्यपादानसंज्ञा । यस्मात् स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति । आतो युच् । यतो हस्तरोधं दधद्धनुः हस्तेन रुद्धा सदैव यो धनुर्धत्ते स कथंदुरुपस्थानो न भवति । हस्तशब्दे तृतीयान्त उपपदे सप्तम्यां चोपपीडरुधकर्ष इति णमुल् । चकारेण तृतीयायाः समुचितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः ॥

तदेव दुरुपस्थानत्वं स्फुटयन्नाह—

**भवन्तं कार्तवीर्यो यो हीनसन्धिमचीकरत् ।**
**जिगाय तस्य हन्तारं स रामः सार्वलौकिकम् ॥ ३३ ॥**

**भवेत्यादि** ॥ यः कार्तवीर्यः कृतवीर्यस्यापत्य सहस्रबाहु भवन्तं हीनसन्धिमचीकरत् । हीनेन दुर्बलेन यः सन्धिः तं भवन्तं कारितवान् । तेन हीनत्वम् । बलान्निर्जित्य कारित इति दुरुपस्थानमुक्तम् । हृक्रोरन्यतरस्यामिति द्विकर्मकता । तस्य कार्तवीर्यस्य यो हन्ता परशुरामः । कृत्प्रयोगे कर्मणि षष्ठी । तेन हि तस्याग्निहोत्रधेनुमपहृत्य गच्छतः परशुना बाहुसहस्रं छिन्नम् । तस्य हन्तारं स रामो जिगाय जितवान् । जयतेर्लिटि धातुजकारस्य सन्लिटोर्जेरिति कुत्वम् । सार्वलौकिकं सर्वलोके विदितम् । लोकसर्वलोकाभ्यां ठञ् । अनुशतिकादित्वादुभयपदवृद्धिः । सार्वलौकिक इति पाठान्तरम् । अत्र राम इति योज्यम् ॥

**यमास्यदृश्वरी तस्य ताडका वेत्ति विक्रमम् ।**
**शूरम्मन्यो राणाञ्चाहं निरस्तः सिंहनर्दिना ॥ ३४ ॥**

**यमेत्यादि** ॥ तस्य रामस्य विक्रमं ताडका वेत्ति ज्ञातवती । वर्तमानसामीप्य इति भूते लट् । कीदृशी यमास्यदृश्वरी । तच्छरताडिता यममुखं दृष्टवती मृतेत्यर्थः । दृशेः क्वनिप् । वनोरचेति ङीब्रेफौ । अहमपि शूरम्मन्यः शूरमात्मानं मन्यमानः । आत्ममा-

ने खश्च । सिंहनर्दिना रामेण । सिंह इव नर्दतीति कर्तर्युपमान इति णिनिः । रणान्निरस्त. बहिष्कृत इत्यर्थः ॥

**न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ ।**
**अनुभूतो मया चासौ तेन चान्वभविष्यहम् ॥ ३५ ॥**

**न त्वमित्यादि** ॥ तेन रामेण त्वं नान्वभाविष्ठाः । त्वमनेन नानुभूत । कर्मणि लुङ् । थासि स्यसिजित्यादिना चिण्वदिट् ष्टुत्वम् । नान्वभावि त्वयाऽप्यसौ नानुभूत' । येनैवमुच्यते । अत्र चिण्भावकर्मणोरिति चिण् । अनुभूतो मया चासौ । चशब्द पुनरित्यर्थे । मया पुनरसावनुभूत. । न शक्यो जेतुमिति । तेन रामेण चान्वभविष्यहमनुभूतोऽहम् । तेन सह योद्धुमक्षम इति । अत्र चिण्वद्भावो न कृत' किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् । तेन वृद्ध्यभावात् गुणएवेति ॥

**अध्यङ् शस्त्रभृतां रामो न्यङ्ङस्तं प्राप्य मद्विधाः ।**
**सकन्याशुल्कमभनङ्मिथिलायां मखे धनुः ॥ ३६ ॥**

**अध्यङ्ङित्यादि** ॥ शस्त्रभृता मध्ये रामोऽध्यङ अधिक । अध्यञ्चत्याधिक्येन वर्तत इति ऋत्विगित्यादिना क्विन् तस्मिन लुप्ते अनुनासिकलोपे उगिदचामिति नुम । तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्याब्भ्यादिसंयोगान्तलोपौ । नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकार. । तं तादृशं प्राप्य मद्विधा न्यञ्चो हीना' । निशब्दोऽत्राधोभावे वर्तते । न्यञ्च इति पूर्ववत् क्विन । अनुनासिकलोप. । नुम । हल्लोपो नास्ति अहल्त्वात कुत्वं च नास्ति अपदसंज्ञत्वात् । यो मिथिलाया महद्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात शस्त्रभृतामध्यङ् । भञ्जेर्लङि श्नान्नलोप । हल्ङ्याब्भ्यादिलोप' । कुत्वं च । कन्याशुल्कं कन्यामूल्यम् । तद्धि यो रौद्रं धनुरारोपितगुणं करोति अस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम् ॥

**संवित्तः सह युध्वानौ तच्छक्तिं खरदूषणौ ।**
**यज्वानश्च ससुत्वानो यानगोपीन्मखेषु सः ॥ ३७ ॥**

**संवित्त इत्यादि** ॥ नाहमेव रामशक्तिमवैमि अपि तु खरदूषणावपि संवित्त. ज्ञातवन्तौ । वर्तमानसामीप्य इति भूते लट् । सकर्मकत्वात् समो गमीत्यादिना तङ न भवति तत्राकर्मकादिति वर्तते । सह युध्वानौ सह तेन युद्धवन्तौ । सहे चेति युधेः क्वनिप् । यज्वानश्चाहिताग्नयः ससुत्वान' सोमयाजिसहिता. । सुयजोर्ङ्वनिप् । संविदन्तीति वचनविपरिणामेन योज्यम् । यानगोपीन् अरक्षीन मखेषु स रामः । लुङि रूपम् । तथापि मखद्रुहो राक्षसान् घ्नतो रामस्य शक्तिं ज्ञातवन्त. ॥

**सुखजातः सुरापीतो नृजग्धो माल्यधारयः।**
**अधिलङ्कं स्त्रियो दीव्य मारब्धा बलिविग्रहम्॥ ३८॥**

**सुखेत्यादि**॥ यत एवं दुरुपस्थानः स तस्माद्बलिना रामेण विग्रहं मारब्धाः। माकार्षीः। रभेराङ्पूर्वात् माङि लुङ्। थास्। झलो झलीति सिज्लोपः। झषस्तथो र्धोध। झलाञ्जश् झशि। किंकार्यमित्याह। अधिलङ्कं लङ्कायामधि। विभक्त्यर्थेऽव्ययीभावः। स्त्रियो दीव्य। क्रीड। लोटि रूपम्। दिवः कर्म चेति कर्मसंज्ञायां वाम्शसोरितीयङ्। कीदृशः सुखजातः। जातं सुखमस्येति बहुव्रीहिः। कृतासवपानत्वात्। यदाह सुरापीत पीतमदिरः। नृजग्धः भुक्तमानुषः। निष्ठायामदो जग्धिः। पूर्ववद्बलम्। एषु वाहिताग्न्यादिदर्शनात् परनिपातः। माल्यं धारयतीति माल्यधारयः। अनुपसर्गात् लिम्पेत्यादिना शः॥

**तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत।**
**यातयामं विजितवान् स रामं यदि किं ततः॥ ३९॥**

**तमित्यादि**॥ तं मारीचं पूर्वोक्तं निराकुर्वन् रावणः प्रत्यभाषत प्रत्युक्तवान्। लङि रूपम्। भीतङ्कारमाक्रुश्य। भीतंकृत्वा भीतोऽसीति। कर्मण्याक्रोशे कृञ खमुञ्। यातयामं गतवयसम्। यदि विजितवान् रामो दाशरथिः कि ततः कि तापसः शूरः॥

**अघानि ताडका तेन लज्जाभयविभूषणा।**
**स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसम्॥ ४०॥**

**अघानीत्यादि**॥ तेन रामेण ताडका अघानि व्यापादिता। हन्तेः कर्मणि लुङ्। लज्जा च भयं च विभूषणं यस्याः। स्त्रीत्वान्न शौर्यम्। एवं विधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघनीयम्। कृत्यानां कर्तरि वेति तृतीया। तं धिक् लोकं क्षुद्रमानसं हीनमानसम्॥

**यद्वेहेनर्दिनमसौ शरैर्भीरुमभाययत्।**
**कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत्॥ ४१॥**

**यद्वेह इत्यादि**॥ असौ रामो यद्भवन्तं भीरुं शरैरभाययत् भायितवान्। पुगात्मनेपदे न भवतः भयहेतोरभावात्। अत्र हि शरेभ्यो भयम् नतु रामात्। तत् कि। पौरुषकारः किमसौ। युवादित्वादण्। गेहेनर्दिनं गेह एव नर्दिनम्। पात्रेसमितादित्वात्सः। कुब्रह्मयज्ञके। कुत्सिता ब्रह्माणः कुब्रह्माः। कुः पापार्थ इति सः। कुमहद्भ्यामन्यतर-

स्यामिति समासान्तष्टच् । तेषां कुत्सितो यज्ञ । तस्मिन् सति कुत्सायां कन् । तेन शूरम्मन्योऽहं रणात्तेन निरस्तः इत्यपुष्कलमुक्तम् ॥

**चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः ।**
**किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥**

**चिरेत्यादि** ॥ यदि रामेण क्षत्रियकान्तिके । कुत्सितक्षत्रियसमीपे । भग्नं धनु किं तच्चित्रमाश्चर्यम् । क्षत्रिया जनकादय. तस्य कुत्सायां कन् । क्षत्रियकस्यान्तिके । दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात् सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी । किमिति न चित्रमित्याह । चिरकालमुषितमिति । कालाध्वनोरिति द्वितीयां विधाय अत्यन्तसंयोगे चेति द्वितीयासमास । जीर्णं चिरकालोषितत्वात् । जॄष्वयोर्हानौ । निष्ठा । ॠत इद्धातो । इको हलि चेति दीर्घ । रदाभ्यामिति निष्ठानत्वम् । कीटैर्घुणैर्निष्कुषितं खादितम् । निरः कुषः इत्यनुवर्तमाने इण् निष्ठायामितीट् ॥

**वनतापसके वीरौ विपक्षे गलितादरौ ।**
**किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ ॥ ४३ ॥**

**वनेत्यादि** ॥ वने तापसो वनतापस । कुत्सायां कन् । तस्मिन् वनतापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयं करिष्यतीत्यश्रद्धयैव योधितवन्तौ खरदूषणौ वीरौ यदि मम्रतु मृतौ को दोषः किं चित्रम् । म्रियतेर्लुङ्लिङोश्चेति नियमान् लिट्यात्मनेपदं न भवति ॥

**त्वं च भीरुः सुदुर्बुद्धे नित्यं शरणकाम्यसि ।**
**गुणांश्चापह्नुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा ॥ ४४ ॥**

**त्वं चेत्यादि** ॥ हे दुर्बुद्धे त्वं पुन भीरुश्च भवसि नित्यं शरणकाम्यसि । आत्मनोऽनिशं शरणमिच्छसि । आत्मेच्छायां काम्यच् । अस्माकं च सतो गुणानपह्नुषे अपनयसि । ह्नुङ् अपनये आदादिक । ङित्त्वात्तङ् । शत्रूंश्च नोऽस्माकं स्तौषि । स्तौतेः उतो वृद्धिर्लुकि हलि ॥

**शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्धनम् ।**
**कारयिष्यामि वा कृत्यं विजिघृक्षुर्वनौकसौ ॥ ४५ ॥**

**शीर्षेत्यादि** ॥ यत एवं विधस्त्वं दुष्ट अतोऽहम् । त्वामौ द्वितीयाया इत्याष्टमिकलक्षणेन त्वादेशः । शीर्षच्छेद्यं शीर्षच्छेदार्हम् । शीर्षच्छेदाद्यत् । क्षितिवर्धनं करोमि । शिरश्छित्वा व्यापादयामीत्यर्थः । अथवा कृत्यं करणीयम् । विभाषा कृवृषोरिति क्यप् ।

कारयिष्यामि । ह्रक्रोरिति द्विकर्मकता । विजिघृक्षुः विग्रहीतुमिच्छुः । सनि ग्रहगुहो-श्चेतीट्प्रतिषेधः। रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना संप्रसारणम् । होढः । एकाचो बशो भष् । षढो कः सि । वनौकसौ रामलक्ष्मणौ । वनमोको गृहं ययोः । न लोकेति कर्मणि षष्ठ्या. प्रतिषेधः ॥

**तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः ।**
**मारीचोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते ॥ ४६ ॥**

**तमित्यादि** ॥ तं रावणं एवमुक्तवन्तम् । निशात इति शाच्छोरन्यतरस्यामितीत्वा-भावपक्षे रूपम् । उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तं मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् । अभ्यमित्र्यो भवामि ते । अमित्रस्याभिमुखमभ्यमित्र्यमाभिमुख्येऽव्य-यीभाव । अभ्यमित्रमलंगामीत्यस्मिन्नर्थे अभ्यमित्राच्छ चेति चकाराद्यत्खौ चेति यत् । त्वदमित्राभिमुखं गच्छामीत्यर्थः । अनुनयन् अनुकूलयन् । किमर्थं जिजीविषुः जीवितु-मिच्छुः ॥

**हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ ।**
**उद्योगमभ्यमित्रीणो यथेष्टं त्वं च सन्तनु ॥ ४७ ॥**

**हरेत्यादि** ॥ अहं मृगो भूत्वा रामसौमित्री हरामि । देशान्तरं प्रापयामि । आ-खेटकाभिरतत्वात् । यदाह मृगद्युवौ मृगैर्दीव्यत इति क्विप् । च्छ्वो शूडनुनासिके चे-ति चकारात् क्वौ च ऊठ् यणादेश. । उवङ् । मृगद्युताविति पाठान्तरम् । तत्र द्यु अभिगमने मृगान् द्यौति अभिगच्छतीति क्विप् । त्वं च यथेष्टं यथारुचि । तमुद्योगं सन्त-नु विस्तारं कुर्वित्यर्थ । तनोतेर्लोटि उतश्चेति हेर्लुक् । अभ्यमित्रीणः अमित्राभिमुख-मलंगामी । अभ्यमित्राच्छ चेति चकाराद्यत्खौ चेति खः ॥

**ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः ।**
**यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥**

**तत इत्यादि** ॥ उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेमरत्नमयः र-त्नंच हेम चेति विगृह्य । मयड्वैतयोर्भाषायामिति विकारे मयट् । निर्मलत्वात् । सीता-या अग्रतो यथामुखीनः प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म । इवशब्दलोपो द्रष्टव्य. । यथामुखसंमुखस्य दर्शनः खः । बहु लोभयन् सुष्ठु स्पृहां जनयन् । यत-श्चित्रीयमाण. । आश्चर्यं भवन् । हेमरत्नमयत्वात् । नमोवरिव इत्यादिना क्यच् । चि-त्रङ् आश्चर्ये । ङकारस्यात्मनेपदार्थत्वात् शानच् । अवयवकृतं लिङ्गं समुदायस्य भवतीति॥

**तेनादुद्यूषयद्रामं मृगेण मृगलोचना ।**
**मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनम् ॥ ४९ ॥**

**तेनेत्यादि** ॥ तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितुमिच्छन्तं प्रयुक्तवती गृह्यतामयमिति । इवन्तस्य दिवेः सनीवन्तेत्यादिना यदा नेट् तदा च्छ्वोः शूठ् । द्विर्वचनम् । तस्मात् सन्नन्तण्यन्तात् लङि रूपम् । मृगलोचना मृगस्य लोचने इव लोचने यस्या । मध्यपदलोपी सः । विपुलोरस्कं विस्तीर्णवक्षस्थलम् । उरःप्रभृतिभ्यः कप् । किमर्थमदुद्यूषयत् । मृगाजिनं मृगचर्म प्रावुवूर्षुः प्रावरीतुमिच्छुः । प्राङ्पूर्वस्य इट् सनि वेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घे । उदोष्ठ्यपूर्वस्येत्युत्वम् । रपरत्वम् । र्वोरुपधाया दीर्घ इकः । द्विर्वचनम् । इण्कोरिति षत्वम् । रेफस्येण्ग्रहणेन ग्रहणादन्त्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥

**योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।**
**मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥**

**योगेत्यादि** ॥ ततो दुद्यूषानन्तरं रामो जगाम । योगक्षेमौ शरीरस्थितिपालने करोतीति कृञो हेत्वित्यादिना हेतौ ट । ग्रहणवता तदन्तविधेरभावात् क्षेमप्रियमद्रेण् चेत्यण्खचौ न भवतः । सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात् साधुः । गजविक्रमः । गजगमनमिव गमनं यस्येत्यर्थः ॥

**स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।**
**वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये ॥ ५१ ॥**

**स्थायमित्यादि** ॥ मृगं चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणो रामो विसिष्मिये विस्मितः । ष्मिङो ङित्त्वादात्मनेपदम् । षोपदेशत्त्वाच्चाभ्यासेण. परस्य सस्य ष. । चित्रवृत्तितां दर्शयन्नाह । स्थायं स्थायं स्थित्वा स्थित्वा । क्वचित् प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा । क्वचित्प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् । आभीक्ष्ण्ये णमुलि क्त्वाणमुलौ द्विर्वचनं च ॥

**चिरं क्लिशित्वा मर्माविद्रामो विलुभितप्लवम् ।**
**शब्दायमानमव्यात्सीत् भयदं क्षणदाचरम् ॥ ५२ ॥**

**चिरमित्यादि** ॥ रामः क्षणदाचरं मारीचमव्यात्सीत् विद्धवान् । व्यधेर्लुङि हलन्तलक्षणा वृद्धिः । मर्माविद्रामः मर्माणि विध्यतीति क्विप् । नहिवृतीत्यादिना पूर्वपदस्य दीर्घत्वम् । चिरं क्लिशित्वा महान्तं कालमायस्य । अत्यन्तसंयोगे द्वितीया । क्लिशः क्त्वानि-

ष्ठयोरिति विकल्पेनेट् । तत्र ग्लो व्युपधादिति किस्त्वविकल्पे मृडमृदेत्यादिना किस्त्वम् । विलुभितप्लवं व्याकुलितगमनम् । लुभो विमोहन इतीट् । विमोहनं व्याकुलीकरणम् । शब्दायमानं शब्दं कुर्वाणम् । शब्दवैरेति क्यङ् । भयदं निशाचरम् । शब्दविशेषणं वा ॥

**श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी ।**
**मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥**

**श्रुत्वेत्यादि** ॥ विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यम् । टुओस्फूर्जा वज्रनिर्घोषे । ट्वितोऽथुच् । निनादं शब्दम् । नौगदनदेति विकल्पनात् पक्षे घञ् । श्रुत्वा मैथिली कष्टश्रितं कृच्छ्रप्राप्तं रामम । द्वितीयाश्रितेत्यादिना सः । मत्वा बुद्ध्वा । कृच्छ्रप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवनशीला शङ्कमाना । संपृचानुरुधेत्यादिना घिनुण् । सौमित्रिं गन्तुमैजिहत् । ईहां कारितवती । ईहेर्ण्यन्तात् लुङि द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् । अभ्यासकार्यं च ॥

**एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते ।**
**ज्ञातेयं कुरु सौमित्रे भयात्त्रायस्व राघवम् ॥ ५४ ॥**

**एष इत्यादि** ॥ एष ते भ्राता रौति । उतो वृद्धिरित्यौकारः । प्रावृषि जातः प्रावृषिजः । सप्तम्यां जनेर्डः । प्रावृडित्यादिना सप्तम्या अलुक् । स चाम्भोदश्चेति विशेषणमिति सः । तद्वन्नदतीति कर्तर्युपमाने णिनि । तस्मात् सौमित्रे ज्ञातेयं ज्ञातिभावं तत्कर्म वा कुरु । कपिज्ञात्योर्ढक् । तेन भयात्त्रायस्व राघवम् ॥

**रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषोः ।**
**रामस्वनितसङ्काशः स्वान इत्यवदत्स ताम् ॥ ५५ ॥**

**रामेत्यादि** ॥ रामसंघुषितं रामशब्दितमेतन्न भवति । घुषिरविशब्दार्थः । तस्य निष्ठायां रुष्यमत्वरेत्यादिना विकल्पेनेट् । मृगस्य विवञ्चिषोः । छलयितुमिच्छोः । वञ्चुगतौ भौवादिकः । तस्यानेकार्थत्वात् । प्रलम्भन इति चौरादिकस्याण्यन्तस्य वा प्रयोगः । येषामनित्यण्यन्ताश्चुरादय इति दर्शनं तेषां मतेनात्रापि सिध्यति । एष स्वानो ध्वानः । स्वनहसोर्वेति पक्षे घञ् । कीदृशः रामस्वनितसङ्काशः । रामशब्दानुकारीति । तां सीतां एवमवदत् उक्तवान् । स लक्ष्मणः ॥

**आप्यानस्कन्धकठांसं रुषितं सहितुं रणे ।**
**प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु कः क्षमः ॥ ५६ ॥**

**आप्येत्यादि** ॥ प्यैङ्वृद्धौ । अस्मादाङ्पूर्वात् संयोगादेरातो धातोर्यण्वत

इति निष्ठातो नः । ओप्यायीवृद्धावित्यस्य वा रूपम् । ओदितश्चेति निष्ठानत्वम् । पीभावस्तु आङ्पूर्वस्य त्वन्धूधसोरिति वचनात् इह न भवति आप्यानस्कन्ध इति । आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य काकुत्स्थस्य । बाहुशिखरमंसः तस्य पश्चिमो भागः स्कन्धः । तं रुषितं क्रुद्धम् । रणे संग्रामे सहितुं हे भीरु कातरे कः क्षम. शक्तः अपि तु न कोऽपीत्यर्थः । क्षमेः शक्नोत्यर्थत्वात तदुपपदे शकधृषेत्यादिना तुमुन् । तीषसहेत्यादिना वेट् । ककुत्स्थस्यापत्यं काकुत्स्थ । शिवादिभ्योऽण् । कस्मान्न क्षम इत्याह । प्रोर्णुवन्तं दिशो बाणै. । यत. सर्वाः दिशः बाणै. च्छादयन्तम । ऊर्णोते. शतरि उवङ् । क्षमत इति क्षम. । पचाद्यच् ॥

**देहं बिभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन् ।**
**ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥**

**देहमित्यादि** ॥ एष मृगो राममायात् आगतवान् । यातेर्लङि रूपम् । किमर्थं देहं शरीरं अस्त्राग्नौ अस्त्रे अग्नाविव । बिभ्रक्षु· भ्रष्टुमिच्छु· । भ्रस्जे· सनीवन्तर्धेत्यवेड्भावपक्षे स्को. संयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोश्च रूपम् । प्राणैर्दिदेविषन् क्रीडितुमिच्छन् । दिव कर्म चेति चकारात् करणसंज्ञा । सनीवन्तेतीट् पक्षे रूपम् । ज्यया गुणेन घुष्टौ निघृष्टौ अतएव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणाद्यस्य । घुषिरविशब्दन इति निष्ठायामनिट् । मुमूर्षया मर्तुमिच्छया । मृङः सनि उदोष्ठ्यपूर्वस्येत्युत्वम् । अः प्रत्ययात् ॥

**शत्रून् भीषयमाणं तं रामं विस्मापयेत कः ।**
**मास्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिः ॥ ५८ ॥**

**शत्रूनित्यादि** ॥ तं रामं शत्रून् भीषयमाणं भीतान् कुर्वाणम् । भियो हेतुभये षुक् । भीस्म्योर्हेतुभय इति तङ् । विस्मापयेत कः क्षुभितचित्तं कुर्यात् । नैवेत्यर्थ । नित्यं स्मयतेरिति णावात्वम् । अर्तीत्यादिना पुक् । निमन्त्रणे नियोगे वा लिङ् । पूर्ववदात्मनेपदम् । तस्मान्मास्म भैषीः माभूर्भीता । स्मोत्तरे लङ् चेति चकारात् लुङ् । सिचि वृद्धिः । त्वया अद्यैव कृतार्थः पूर्णमनोरथ· पतिर्द्रक्ष्यते । दृशेः कर्मणि लट् ॥

**यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च ।**
**इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥ ५९ ॥**

**याया इत्यादि** ॥ तदन्वेषणाय यायास्त्वमिति कामोऽभिलाष. । कामप्रवेदने कच्चिति इत्यकच्चित्युपपदे लिङ् । न च गन्तुमुत्सहसे । शकधृषेति तुमुन् । तस्मान्नूनं

मां कामयितुमिच्छुः एषणशीलः । समानकर्तृकेषु तुमुन् । विन्दुरिच्छुरिति निपातनात्साधुः । इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥

**मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः ।**
**निरगात् शत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥**

**मृषोद्यमित्यादि** ॥ मां कामयितुमिच्छुरित्येतन्मृषोद्यम् मृषावादम् । राजसूयेत्यादिना भावे क्यप् । यजादित्वात् सम्प्रसारणम् । प्रवदन्ती तां सीताम् । रघूत्तमो लक्ष्मणः । शपन् शत्रुहस्तं त्वं यास्यसीति शापं प्रयच्छन् । भौवादिकोऽत्र शपिर्न दैवादिकः । निरगात् निर्गतः । तस्मादुटजादित्यर्थात् । कथं मृषोद्यमित्याह । वशी वशनं वशः इन्द्रियसंयमनम् । वशिरण्योरुपसंख्यानमित्यप् । स यस्यास्ति स वशी जितेन्द्रियः । अत एव सत्यवद्यः । अवितथवादी । शत्रुहस्तं यास्यसीति सत्यं वदतीति कृत्यल्युटो बहुलमिति कर्तरि यत् । वदः सुपि क्यप्चेति चकाराद्यत् । भावे वा यतं विधायाच् अर्शआदित्वात् ॥

( कुलकम् )

**गते तस्मिन् जलशुचिः शुद्धदन् रावणः शिखी ।**
**जञ्जपूकोऽक्षमालावान् धारयो मृदलाबुनः ॥ ६१ ॥**

**गत इत्यादि** ॥ तस्मिन् लक्ष्मणे गते सति रावणः सीतामूचे इति वक्ष्यमाणेन सम्बन्धः । कीदृशः जलशुचिः स्नात इत्यर्थः । शुद्धदन् निर्मलदशनः । शुद्धा दन्ता यस्य । अग्रान्तेत्यादिना दन्तस्य ददादेशः । शिखा अस्यास्तीति शिखी परिव्राजकः । व्रीह्यादित्वादिनिः । जञ्जपूकः पापाशयत्वात् गर्हितं जपतीति । लुपसदेति यङ् । जपजभेत्यभ्यासस्य नुक् । यजजपदशां यङ इत्यूकः । अक्षमालावान् अक्षसूत्रयुक्तः । संसर्गे मतुप् । धारयतीति धारयः । अनुपसर्गादिति शः । कस्य मृदलाबुनः । नञि लम्बेर्नलोपश्चेत्यौणादिक ऊकारे प्रत्यये अलाबूः । तस्य विकारः फलमिति ओरञ् । तस्य फले लुक् । नपुंसकह्रस्वत्वम् । मृत्पूर्णमलाबु इति मध्यपदलोपी सः । कृत्प्रयोगे कर्मणि षष्ठी । इकोऽचि विभक्ताविति नुम् ॥

**कमण्डलुकपालेन शिरसा च मृजावता ।**
**संवस्त्र्य लाक्षिके वस्त्रे मात्राः संभाण्ड्य दण्डवान् ॥ ६२ ॥**

**कमेत्यादि** ॥ कमण्डलुना कपालेन च जातिरप्राणिनामिति द्वन्द्वैकवद्भावः । मृजावता निर्मलेन शिरसा च उपलक्षित इत्थम्भूते तृतीया । संवस्त्र्य परिधाय । वस्त्रात्समाच्छादन इति मुण्डमिश्रेत्यादिना णिच् । लाक्षिके वस्त्रे । लाक्षया रक्ते । लाक्षारो-

चनेत्यादिना ठक् । मात्राः कमण्डल्वादिकं सम्भाण्ड्य समाचित्य राशीकृत्येत्यर्थः । भाण्डात् समाचयन इति पुच्छभाण्डेत्यादिना-णिङ् । दण्डवान् गृहीतत्रिदण्डः संसर्गे मतुप् ॥

**अधीयन्नात्मविद्विद्यां धारयन्मस्करिव्रतम् ।**
**वदन् बह्वङ्गुलिस्फोटं भ्रूक्षेपं च विलोकयन् ॥ ६३ ॥**

**अधीत्यादि** । मा कुरुत कर्माणि शान्तिर्वः श्रेयसीत्येवं घोषयन्ति ये ते मस्करिणः परिव्राजकाः । तेषां व्रतमकृच्छ्रमसौ धारयन् । मस्करमस्करिणाविति परिव्राजके सुट् । आत्मविदां योगिनाम् । विद्यामुपनिषदमधीयन् जपन् । ईङ्धार्योरिति ईङो धारेश्च अकृच्छ्रवति कर्तरि शतृप्रत्ययः । अन्तरा बहु प्रभूतं वदन् । अङ्गुलिस्फोटं पुनःपुनः स्फोटिकान्दत्वा भ्रूक्षेपं च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् । उभयत्रापि स्वाङ्गे ध्रुव इति णमुल् ॥

**सन्दिदर्शयिषुः साम निजुह्नूषुः क्षपाटताम् ।**
**चंक्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥**

**संदीत्यादि** ॥ इह भयं माभूदिति साम सान्त्वं सन्दिदर्शयिषु सन्दर्शयितुमिच्छुः । वदन् बह्वङ्गुलिस्फोटमिति योज्यम् । दृशेर्ण्यन्तसन्नन्तत्वे रूपम् । क्षपाटतां राक्षसत्वं निजुह्नुषुर्निह्नोतुमिच्छुः । धारयन्मस्करिव्रतमिति योज्यम । ह्नोतेरज्झनगमां सनीति दीर्घः । कुटिलं क्रमणं चंक्रमा । क्रमेर्नित्यं कौटिल्ये गताविति यङ् । नुगत इत्यभ्यासस्य नुक् । अः प्रत्ययादित्यकारः । अतो लोपः । यस्य हलः । टाप् । सा यस्यास्ति चंक्रमावान् । कुटिलगतिमानित्यर्थः । समागत्य ढौकित्वा । सीतामूचे । किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः । यदहं प्रार्थये तत्र प्रतिकूला न भवेति भावः । सुखप्रियादानुलोम्य इति कृभ्वस्तियोगे डाच् ॥

**सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।**
**कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥**

**सायमित्यादि** ॥ का त्वमिति वक्ष्यमाणेन सम्बन्धः । सायं दिनावसानं तत्र भवां कान्तिम् । यदा षोऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा सायंचिरंति ट्युट्युलौ तुट् च मकारान्तत्वं च निपात्यते । यदा सायंशब्दोमकारान्तः तदाप्यव्ययत्वादेव प्रत्ययागमौ स्याताम् । कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः । पञ्चदश कलाः तासां वृद्धिह्रासाभ्यां पञ्चदश तिथीः प्रणयति प्रवर्तयति । सत्सूद्विषेति क्विप् । उपसर्गादसमासेति णत्वम् । एरनेकाच इति यणादेशः । पङ्कजानां च कान्तिं कीदृशीं दिवातनीं दिवाभवाम् ।

कान्त्या त्वदीयया सदातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती । दिवातन्या. सायन्तन्याश्च सदाभवत्वात् । जिह्रेतेरर्तीत्यादिना णौ पुक् । शुचिस्मिता शुभ्रहासा ॥

**का त्वमेकाकिनी भीरु निरन्वयजने वने ।**
**क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथंन वा ॥ ६६ ॥**

**का त्वमित्यादि** ॥ का त्वं देवी मानुषी राक्षसी वेति । एकाकिनी असहाया । एकादाकिनिच्चासहाय इति आकिनिच् । भीरु इत्यामन्त्रणं भयप्रकृतित्वात् स्त्रीणाम् । निरन्वया'निरनुगमा जना यस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भव । क्षुध्यन्तोऽपि बुभुक्षमाणा अपि । दिवादित्वात् श्यन् । व्याला हिंस्रा व्याघ्रादय कथं वा त्वां नाघसन् न भक्षितवन्त' । अदे लुङ्सनोर्घस्लृ । लृदित्वात् च्लेरङ् । क्षुध्यन्तो नाघसन्निति पाठान्तरम् । तत्र कथं न वा अपरिचितानेवाघसन् इति योज्यम् । अपालां सती अविद्यमान पालो यस्या इति । पालरक्षण इति चौरादिक' । पालयतीति पालः । पचाद्यच् । यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्य इति लुक् । तत. पचाद्यच् ॥

**हृदयङ्गममूर्तिस्त्वं सुभगम्भावुकं वनम् ।**
**कुर्वाणा भीममप्येतद्वदाभ्यैः केन हेतुना ॥ ६७ ॥**

**हृदयमित्यादि** ॥ केन हेतुना इदं वनमभ्यै' अभिगतासि वद कथय । अभिपूर्वादिणो लङ् । मध्यमपुरुषैकवचनम् । आडजादीनाम् । आटश्चेति वृद्धिः । हृदयं गच्छति या मूर्त्ति. शरीरमत्यन्तसौन्दर्यात् । गमेश्चेति खच् । सा एवंविधा मूर्तिर्यस्या सा त्वं भीममप्येतद्वनं सुभगम्भावुकं सर्वस्यैवाप्रियं प्रियं कुर्वाणा । असुभगं भूत्वा सुभगं भवतीति कर्तरि भुव इति खुकञ् ॥

**सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ।**
**पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥ ६८ ॥**

**सुकृतमित्यादि** ॥ सुकृतं पुण्यकारिणं शोभनं कृतवानिति सुकर्मपापेत्यादिना क्विप् । कं रहसि विजने त्वमुपतिष्ठसे उपश्लिष्यसि । संगतकरणे तङ् । प्रियकारी अनुकूलवर्तिनी सती । प्रियमनुकूलं करोतीति। क्षेमप्रियमद्रेऽण् चेति अण् । टिड्ढाणञित्यादिना ङीप् । पुण्यकृत् कृतपुण्यः । तस्य पूर्ववत् क्विप् । चाटुकार' प्रियवाक्यकर । न शब्दश्लोकेत्यादिना टे प्रतिषिद्धेऽणेव भवति । ईदृशस्ते किङ्कर दास. । दिवाविभेति ट. । किं यत्तद्बहुषु कृञोऽज्विधानमिति तत्स्त्रीविषये द्रष्टव्यम । सुरतेषु शोभनरतेषु । नपुंसके भावे क्त । अनुदात्तेत्यादिनानुनासिकलोपः । अनेनोभयरुचिराख्याता ॥

**परिपर्युदधेरूपमाद्युलोकाच्च दुर्लभम् ।**
**भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥**

**परीत्यादि** ॥ एतद्रूपं भावत्कं भवत्या इदमिति भवतष्ठक्छसाविति ठक्छसौ । ठक्छसोश्चोपसंख्यानमिति पुंवद्भावः । इसुसुक्तान्तात्कः । दुर्लभं परिपर्युदधेः अपपरीवर्जन इति कर्मप्रवचनीयसंज्ञायां द्वितीयायां प्राप्तायां पञ्चम्यपाङ्परिभिरिति पञ्चमी । अपपरिबहिरञ्चवः पञ्चम्या इति विभाषासमासश्च । असमासपक्षे परेर्वर्जन इति द्विर्वचनम् । उदधिं वर्जयित्वा चतुरुदधिमेखलायां भुवि दुर्लभमाद्युलोकाच्च स्वर्गलोकान्तं च यावत् दुर्लभमत्रापि पूर्ववत्पञ्चमी । तादृशं दृष्टवत्स्वस्मासु अधि सुजीवितमस्मद्विषये आधिक्येन सुजीवितम् । अहो वा सुजीवितमिति अहो शब्दार्थे अधिशब्दो वर्तते ॥

**आपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी ।**
**सत्परिमललक्ष्मीका नापुंस्कासीति मे मतिः ॥ ७० ॥**

**आपीतेत्यादि** ॥ परि सर्वतो मार्जनमिति परिमलः । कलत्रपश्चेत्यधिकृत्य मृजेष्टिलोपश्चेति कलप्रत्यय औणादिकः । इह सुरतोपभोगविमर्दः परिमलोऽभिप्रेतः । तस्य लक्ष्मीः तत्कृतत्वात् । सती विद्यमाना परिमलशोभा यस्याः । उरःप्रभृतिभ्यः कप् । सा त्वमपुंस्का अविद्यमानभर्तृका नासीति मे मतिः । पूर्ववत्कप् । किमिव सुदिवेवारविन्दिनी पद्मिनी । शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः । सुप्रातत्यादिना अच् । आपीतमधुका भृङ्गैः आपीतं मधु यस्याः । शेषाद्विभाषेति कप् । यथेयं सत्परिमललक्ष्मीका तथा त्वमपीति ॥

**मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः ।**
**साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥**

**मिथ्यैवेत्यादि** ॥ श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य । विभाषा कृञीत्यनुवर्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा । गतिसमासे ल्यबादेशः । अहमभिमन्ये किं मिथ्या श्रीः श्रियंमन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु त्वमेवेति । आत्ममाने खश् । दिवादित्वात् श्यन् । इच एकाचोऽम्प्रत्ययवच्चेत्यम्भावः । तस्यामः प्रत्ययत्वान्मलोपाभावः । न विभक्तौ तुस्मा इति वचनात् । अचीतीयङादेशः । क्विबन्ता धातुत्वं न जहतीति क्विब्वचीत्यादिना अयतेरौणादिकः क्विप् । हरिश्चात्मानं श्रीमन्तं मन्यमानो मृषा न श्रीमानित्यहमभिमन्ये ॥

**नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत्स्मरः ।**
**खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥ ७२ ॥**

**नोदेत्यादि** ॥ स्मरभार्या रति. सापि रूपेण निकृष्टेति दर्शयति । चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थं नोदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत् । ईक्षदर्शने इति कठिशोक इति भौवादिकात् क्रियातिपत्तौ लृङ् । नापि रति स्वभार्यां सजू कृत्य सहायीकृत्य वसेत् अपितु परित्यजेत् । अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः । नापि रति सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतु-पदमभ्यूह्य हेतुमद्भावदर्शनात् । ऊर्यादिषु सजू.सहार्थं इति वचनात् गतिसंज्ञा । खेलाय-न् अनिशं क्रीडन् सर्वदा । खेलाशब्दात् कण्ड्वादित्वात् यक् ॥

**वल्गुयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का ।**
**कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥ ७३ ॥**

**वल्गित्यादि** ॥ त्वां वल्गुयन्ती शोभमानां विलोक्य न मन्तूयति स्त्रीह का । इह जगति का स्त्री न मन्तूयेत् न कुप्येत् । सर्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणाम् । असम्भावने लिङ् । वल्गुमन्तुशब्दाभ्यां कण्ड्वादित्वाद्यक् । को वा को नाम स्थाणुसमोऽपि काष्टतुल्योऽपि गुणदोषानभिज्ञत्वात्ते तव कान्ति विलोक्य नाभिमनायेत पूर्वमदृष्टत्वा-दनभिमनाः सन् अभिमना सचेता भवेत् । पूर्ववल्लिङ् । अभिमनसो भृशादित्वात्क्य-ङ् सलोपश्च । महादेवतुल्यो वा आस्तामन्यः सोऽपि तावदभिमनायेत ॥

**दुःखायते जनः सर्वः स एवैकः सुखायते ।**
**यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥**

**दुःखेत्यादि** ॥ स एवैको जनः सुखायते सुखं वेदयते । यस्यान्तिके समीपे न त्वं प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि । उत्सुकायमाना उत्कायमाना सती । यस्य पुनरन्तिके उत्सुकायमाना प्रतीपायसे स सर्वो जनः दुःखायते दुःखं वेदयते । सुखदुःखश-ब्दाभ्यां सुखादिभ्यः कर्तृवेदनायामिति क्यङ् । उत्सुकप्रतीपशब्दाभ्यां भृशादित्वात् ॥

**कः पण्डितायमानस्त्वामादायामिषसन्निभाम् ।**
**त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनम् ॥ ७५ ॥**

**क इत्यादि** ॥ पण्डितायमानः अपण्डितः कथमपि पण्डितो भवन् । भृ-शादित्वात् क्यङ् । त्वामामिषसन्निभां सर्वजनप्रार्थनीयत्वात् । आदाय गृहीत्वा कः शू-न्यं वनमन्ववसत् । शून्ये वने अवसदित्यर्थः । उपान्वध्याङ् वस इति कर्मसंज्ञा । की-

दृश· त्रस्यन् बिभ्यत् । वैरायमाणेभ्यः । वैरं कुर्वाणेभ्य. । शब्दवैरेत्यादिना क्यङ् । भीत्रार्थानामित्यपादानसंज्ञा ॥

**ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा ।**
**उवाच दशमूर्धानं सादरा गद्गदं वचः ॥ ७६ ॥**

**ओजेत्यादि** ॥ एवमुक्तवति रावणे जनकसुता दशमूर्धानमुवाच । दश मूर्धान. शिरांसि यस्य तस्यार्घ्यं प्रणीय दत्त्वा अतिथिरयमिति । सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी । ओजायमाना ओज इवाचरन्ती । कर्तु क्यङ् सलोपश्च । ओजसोऽप्सरसो नित्यमिति वचनात् । मां माभिभूदित्यतितेजस्विनी भवन्तीत्यर्थ । किमुवाच वचो वक्ष्यमाणम् । सादरा सती । परिव्राजक इति । गद्गदमनभिव्यक्तमसंस्कृतत्वात् ॥

**महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।**
**पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम् ॥ ७७ ॥**

**महेत्यादि** ॥ यदुक्तं तेन कं रहस्युपतिष्ठस इति अस्य प्रतिवचनं मम भर्ता महाकुलीन महाकुलस्यापत्यमिति । महाकुलादञ्खञाविति खञ् । किमादित्यवंशसम्भव· कि सोमवंशसम्भवो वा महाकुलस्यापत्यमित्याह । ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाक. । दाण्डिनायनेत्यादिना टिलोपनिपातनम् । अन्ये तत्र सन्तीत्याह दाशरथि· दशरथस्यापत्यं य. स मम भर्ता । महाकुलीन· कीदृश· पितु प्रियङ्करः अनुकूलकारी । तपस्विनां च क्षेमकारः । क्षेमप्रियमद्रेऽण् चेति चकारात् खच् ॥

**निहन्ता वैरकाराणां सतां वहुकरः सदा ।**
**पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥ ७८ ॥**

**निहन्तेत्यादि** ॥ वैरकाराणा शत्रूणाम । वैरपूर्वात् कृञो नशब्दश्लोकेत्यादिना टे प्रतिषिद्धे अणेव भवति । निहन्तेति तृजन्तस्य प्रयोग । तत्र कर्मणि षष्ठी । सतां धर्मे स्थितानां बहुकर. बहुकार्यं करोतीति । दिवाविभेति ट. । स्त्रीविवक्षायां तु कियत्तद्बहुष्विति करोतेरच् । आङ्परयो· खनिशृभ्यां डिच्चेत्यौणादिक. कु· परशुशब्द । तत्पर्याय एवाव्युत्पन्नः परश्वधशब्द. । स प्रहरणं यस्य । परश्वधाट्ठञ्च । तस्य परशुरामस्य सम्बन्धिन्या· शक्ते· सामर्थ्यस्यान्तकरो विनाशयिता। अन्तं करोतीति पूर्ववट्टः । रणे सङ्ग्रामे तत्र भवः ॥

**अध्वरेष्विष्टिनां पाता पूर्ती कर्मसु सर्वदा ।**
**पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम् ॥ ७९ ॥**

अध्वरेष्वित्यादि ॥ इष्टमेभिरिति इष्टिनो यज्वानः। इष्टादिभ्यश्चेतीनिः। किमिष्टवत.। अध्वरान् कर्माणि तत्र क्तस्येन्विषयस्येति कर्मणि सप्तमी। अध्वरेष्विष्टिनामिति कर्मणि षष्ठी कृद्योगे। पाता रक्षिता। पूर्ती कर्मसु सर्वदा। पृणोतेर्निष्ठायामुदोष्ठ्यपूर्वस्येत्युत्वम्। न ध्याख्येत्यादिना निष्ठानत्वप्रतिषेध.। पूर्तमनेनेति पूर्ववदिनिः। किं पूर्तमिति सर्वदा श्राद्धादिकर्मणि। पूर्ववत्सप्तमी। स राजत्वं राज्यम्। हित्वा त्यक्त्वा। वनमभ्यागमत्। आभिमुख्येन आगतवान्। लुङ्। च्लेरङि रूपम्। पितुर्नियोगात्। नायोग्यत्वात्। स मे भर्तेति योज्यम् ॥

**पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने।**
**यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥**

पतत्रीत्यादि ॥ यस्य बाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घनिद्रया शेरते स मम भर्तेति योज्यम्। शेरत इति शीङो रुट्। कीदृशानि अश्रेणयः श्रेणयो भूतानि। ऊर्यादिच्विडाचश्चेति च्व्यन्तानां कुगतिप्रादय इति सः। च्वौ चेति दीर्घः। च्व्यर्थानां तु श्रेण्यादय. कृतादिभिरित्ययं विषयः। पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिवृतानि ॥

**दीव्यमानं शितान् बाणानस्यमानं महागदाः।**
**निघ्नानं शात्रवान् रामं कथं त्वं नावगच्छसि ॥ ८१ ॥**

दीव्येत्यादि ॥ शितांस्तीक्ष्णान् बाणान्। दीव्यमानं क्षेप्तुं शक्तं तच्छीलं वा। अनेकार्थत्वाद्धातूनां दिवेस्ताच्छील्यवयोवचनेत्यादिना शानच्। दिवादिभ्यः श्यन्। महागदा अस्यमानं क्षेप्तुं शक्तं तच्छीलं वा। पूर्ववच्छानच्। शात्रवान् शत्रून्। प्रज्ञादित्वादण्। निघ्नानं हन्तुं शक्तं तच्छीलं वा। पूर्ववत् प्रत्ययः। हन्तेर्गमहनेत्युपधालोपः। हो हन्तेर्ञ्णिन्नेष्विति कुत्वम्। एवंविधं रामं कथं नावगच्छसि तेन कर्मणा सर्वलोकविदितत्वादिति भाव.॥

**भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ।**
**एषितुं प्रेषितो यातो मया तस्यानुजो वनम् ॥ ८२ ॥**

भ्रातरीत्यादि ॥ यद्येवं क्वासावित्याह। असौ रामो मां भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः। मृगेः स्वार्थिको णिच्। अदन्तत्वाच्च गुणो न भवति। तदन्तात्कृञः श चेति अधिकृत्य परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानमिति भावे शप्रत्यय। यक्। अल्लोपाभावश्च। टाप्। मृगान्विध्यतीति मृगावित्। क्वासौ भ्रातेति चेदाह। तस्यानुजः कनिष्ठो मया प्रेषितः सन् यातो वनम्। अनु पश्चाज्जायत

इति । अन्येभ्योऽपि दृश्यत इति डः । अनौ कर्मण्युक्तमकर्मण्यपि भवति । किमर्थं एषितुम् । तमेव ज्ञातुम् । इषुगताविल्यस्य रूपम् । ज्ञानार्थत्वात् । प्रेषित इति तस्यैव रूपम् ॥

**अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्बणः ।**
**सन्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥**

**अथेत्यादि** ॥ अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्तवान् । आयस्यन् क्रोधाविष्टत्वात् शरीरं खेदयन् । यसुप्रयत्न इति दैवादिकः परस्मैपदी । क्रोधादेव कषायाक्षः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । स्यन्नैः स्रुतैः स्वेदकणैरुल्बण उद्भटः व्याप्त इत्यर्थः । स्यन्देर्निष्ठायां रूपम् । संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन स एवंविधः ॥

**कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।**
**को नग्नमुषितप्रख्यं बहु मन्येत राघवम् ॥ ८४ ॥**

**कृत इत्यादि** ॥ कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्यो ढक् । कल्याण्यादीनामिनङ् । तयो कल्याण्यादिषु पठितत्वात् । कनिष्ठासुतस्य भरतस्य कृते निमित्ते । ज्येष्ठायाः सुतः निरुपयोगितया विवासित. विसर्जितः । विपूर्वस्य वसतेर्हेतुमण्यन्तस्य निष्ठायां रूपम् । तं नग्नमुषितप्रख्यं यथा कश्चिन्मुषितो नग्नो भवति तद्वद्भूतम् । पूर्वकालेति स । तयो पूर्वापरकालत्वात् । राजदन्तादित्वात्परनिपातः । ईदृशं राघवं को बहु मन्येत श्लाघेत नैवेत्यर्थ. ॥

**राक्षसान् बटुयज्ञेषु पिण्डीशूरान्निरस्तवान् ।**
**यद्यसौ कूपमाण्डूकि तवैतावति कः स्मयः ॥ ८५ ॥**

**राक्षसानित्यादि** ॥ अध्वरेष्विष्टिनामित्यस्योत्तरमाह । यद्यसौ राक्षसान् पिण्डीशूरान् पिण्ड्यामेव शूरान् भोजने एव शूरान् । पात्रेसमितादयश्चेति स । बटुयज्ञेषु कुब्राह्मणयज्ञेषु । निरस्तवान् तिरस्कृतवान् हे कूपमाण्डूकि कूपे माण्डूकीव पूर्ववत् स । ढक् च मण्डूकादिति चकारादण् वापत्ये । एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव युज्यते ॥

मत्पराक्रमे तु युक्तः तत्रापि मम न युक्तं वक्तुमित्याह ॥

**मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः ।**
**युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः ॥ ८६ ॥**

**मत्परेत्यादि** ॥ राज्यभोगादयः परिच्छदो हस्त्यश्वादिः स मत्पराक्रमेण संक्षिप्तो-ऽपहृतो यस्य हरेरिन्द्रस्य स यथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् । दरिद्रातेरादादिकत्वाच्छपो लुक् ॥

**निर्लङ्को विमदः स्वामी धनानां हृतपुष्पकः ।**
**अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम् ॥ ८७ ॥**

**निर्लङ्क इत्यादि** ॥ यस्मात्कारणात् धनानां स्वामी धनदः । अन्तर्गिरमध्यास्ते अध्यासितवान् । गिरेः कैलासस्यान्तर्मध्ये । विभक्त्यर्थेऽव्ययीभावः । गिरेश्च सेनकस्येति टच् । आधशीङ्स्थासामिति कर्मसंज्ञा । तेन तृतीयासप्तम्योर्बहुलमित्यम्भावो न भवति । नाव्ययीभावादित्यमेव भवति । तत्कारणं मम पराक्रमं मां वा को नावैति न जानाति । कीदृश निर्लङ्कः । लङ्कातो निष्क्रान्तः । निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः । एकविभक्ति चेत्युपसर्जनसंज्ञायां ह्रस्वत्वम । हृतपुष्पकः । हृतं आच्छिन्नं पुष्पकाख्यं विमानं यस्य । अतएव विमदोऽपेतदर्पः । लङ्का पुष्पकं च धनदस्यासीत् तदाच्छित्त्वा अनेन गृहीतमिति ॥

**भिन्ननौक इव ध्यायन् मत्तो बिभ्यद्यमः स्वयम् ।**
**कृष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥ ८८ ॥**

**भिन्नेत्यादि** ॥ स्वयं साक्षान्मत्तो बिभ्यत् त्रस्यन् यमो वैलक्षण्यात् मुखेन कृष्णिमानं कृष्णवर्णत्वम् । वर्णदृढादिभ्यश्चेति चकारादिमनिच् । दधानेन धारयता । इत्थम्भूते तृतीया । निरुद्यतिः निरुद्यमः आस्ते । उत्पूर्वाद्यमेः स्त्रियां क्तिन् । अनुनासिकलोप. । कीदृशः । ध्यायन् चिन्तयन् । किं ममापतितं यदहमनेन हृतसर्वस्व इति । भिन्ननौक इव । विपन्नपोतवणिगिव । उरःप्रभृतिभ्य कप् ॥

• एवं स्वपौरुषं प्रदर्श्य स्वीकर्तुमाह ॥

**समुद्रोपत्यका हैमी पर्वताधित्यका पुरी ।**
**रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥**

**समुद्रेत्यादि** ॥ हे मैथिलि लङ्केति नाम्ना मम पुरी । कीदृशी समुद्र एवोपत्यका आसन्ना यस्याः सा समुद्रोपत्यका । समुद्रस्य पर्वतोपत्यकात्वात् । समुद्रोपत्यकेति समासे सा पुंवत्वं न भवति यतः संज्ञाधिकारात् पर्वतस्यासन्ने अधिरूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् । प्रतिषेधे त्यकन उपसंख्यानमिति प्रत्ययस्थादितीकारो न भवति । हैमी हेमविकारा । प्राणिरजतादिभ्योऽञ् । पर्वताधि-

त्यका। त्रिकूटपर्वतस्योपरि स्थिता। रत्नपारायणं यत्र रत्नानां पारमवसानमयन्ते बुध्यन्ते तत्परीक्षकाः सर्वरत्नस्थानमित्यर्थः ॥

दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात्समृद्धतां कथयन् प्रलोभयति ॥

**आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता ।**
**अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥ ९० ॥**

**आवास इत्यादि** ॥ तस्या पुर्या आवासे गृहे। आवसत्यस्मिन्निति अधिकरणे घञ्। मया सह त्वं वस। प्रार्थनाया लोट्। सिक्तसम्मृष्टे पूर्वं सिक्ते पश्चात्सम्मृष्टे। गन्धैर्लिप्तवासिता सती पूर्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता। सम्मृष्टादिभिः पूर्वकालेत्यादिना सः। अर्पिता न्यस्ता उर्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वम् ॥

किमिति त्वया सह वसामीति चेदाह ॥

**सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे ।**
**राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनम् ॥ ९१ ॥**

**सङ्गच्छेत्यादि** ॥ हे पौंस्नि पुमांसमर्हति तद्धिता वा। अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यां नञ्स्नञौ। स्त्रीप्रत्यये नञ्स्नञीकक्तरुणतलुनानामुपसंख्यानमिति। मां युवानं तरुणं सङ्गच्छ अङ्गीकुरु। गमेः प्रार्थनायां लोट्। इषुगमीत्यादिना छत्वम्। समो गम्यृच्छीत्यादिना तङ् न भवति सकर्मकत्वात्। विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा। पूर्ववत्प्रत्ययः। तरुणी युवती सती शुभे कल्याणि। शोभत इति इगुपधलक्षणः कः। ममापि तादृशो भर्तास्तीति चेदाह राघवः प्रोष्यपापीयानिति। पापशब्दाद्विन्मतोर्लुगिति ईयसुन् लुक्च मतुपः। प्रोष्यपापीयानिति मयूरव्यंसकादित्वात् सः। देशान्तरं यात्वा पापवत्तरः। तमकिञ्चनं दरिद्रम्। न विद्यते किञ्चन यस्येति। सर्वनामाव्ययसंज्ञाया उपसर्जनप्रतिषेध इति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोपः। जहीहि त्यज। ईत्वञ्च जहातेश्चेति वा वचनाद्विकल्पः ॥

**अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि ।**
**वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ९२ ॥**

**अश्नीतेत्यादि** ॥ अश्नीतपिबतेति मयूरव्यंसकादित्वात् सः। तत्र ह्याख्यातमाख्यातेन क्रियासातत्य इति पठ्यते। सततमश्नीत पिबतेत्येवं भृत्यजनानादेष्टुमिच्छतीति सुप आत्मनः क्यच्। अश्नीतपिबतीयन्ती। प्रसिता स्मरकर्मणि आधिक्येन प्रवृत्ता कामव्यापारे। प्रसितोत्सुकाभ्यां तृतीया चेति चकारात् सप्तमी। वशीकृत्यानुवर्तिनं

दशग्रीवं कृत्वा । साक्षात् प्रभृतित्वाद्गतिसंज्ञा । मोदस्व हर्षं जनय वरमन्दिरे श्रेष्ठगृहे स्थिता ॥

**मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव ।**
**उद्भासिनी च भूत्वा मे वक्षःसम्मर्दिनी भव ॥ ९३ ॥**

**मास्मेत्यादि** ॥ हे भीरु मास्म भूर्ग्राहिणी प्रतिकूला माभूः । न यास्यामीत्यमुमर्थं गृह्णामीति कृत्वा । स्मोत्तरे लङ् चेति चकारात् लुङ् । गन्तुमुत्साहिनी उद्युक्ता भव । शकधृषेत्यादिना तुमुन् । उत्साहिनीति सहोपपदत्वात् । ततश्चालङ्कृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वक्ष सम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव । ग्रहोत्साहोद्भाससम्मर्दानां ग्रहादिषु पठितत्वात् कर्तरि णिनिः । ऋन्नेभ्यो ङीप् ॥

**तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः ।**
**बाहूपपीडमाश्लिष्य जगाहे द्यां निशाचरः ॥ ९४ ॥**

**तामित्यादि** ॥ यदैवमभिधीयमाना न प्रतिपन्ना तदा तां प्रातिकूलिकीं प्रतिकूलवर्तिनीं मत्वा ज्ञात्वा । ओजःसहोम्भसा वर्तत इत्यधिकृत्य प्रतिकूलं वर्तत इत्यस्मिन्नर्थे तत्प्रत्यनुपूर्वेत्यादिना ठक् । जिहीर्षुः हर्तुमिच्छुः । भीमविग्रहः भीषणशरीरः । दृष्टराक्षसशरीररूपः । सुखेन ह्रियत इति बाहूपपीडमाश्लिष्य बाहुभिरुपपीड्य । सप्तम्यां चोपपीड इति चकारात् तृतीयान्त उपपदे णमुल् । जगाहे रथेनोत्पत्य द्यामाकाशं निशाचरो गाहतेस्म । दिवशब्दसमानार्थो द्योशब्द औणादिकः । गमेर्डो इत्यत्र द्युतेश्चेति वचनान । औतोऽम्शसोरित्यात्वम् । कालापिनस्तु दिव्शब्दादेव व्युत्पादयितुं सूत्रमधीयते वाम्येति । दिवः अमि विकल्पेनाकारादेश इति ॥

**त्रस्यन्तीं तां समादाय यातो रात्रिञ्चरालयम् ।**
**तूष्णीम्भूय भयादासाञ्चक्रिरे मृगपक्षिणः ॥ ९५ ॥**

**त्रस्यन्तीमित्यादि** ॥ त्रस्यन्ती च तां तद्रूपदर्शनात् समादाय गृहीत्वा यातो गच्छतो रावणात् । याते. शतरि पञ्चम्या रूपम् । कि यातो रात्रिञ्चरालयं लङ्काम् । रात्रौ चरतीति चरेष्टः । रात्रेः कृति विभाषेति मुम् । तस्माद्रावणाद्यद्भयं ततो भयात् तूष्णीम्भूय । तूष्णीमिति भुव इति क्त्वा चेति समासे ल्यबादेशः । आसाञ्चक्रिरे आसिताः । दयायासश्चेत्याम् । मृगपक्षिणः मृगाश्च पक्षिणश्च । समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति ॥

**उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ ।**
**जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥**

**उच्चैरित्यादि** ॥ तां सीतां जटायुः पक्षीन्द्रः । रावणं परुषं निष्ठुरं वदन् प्राप प्राप्तवान् । कीदृशी उच्चैरारस्यमानाम् । हा राम हा लक्ष्मणेति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुन पुना रसन्तीमित्यर्थ. । रसे· शब्दकर्मकत्वात् । क्रियासमभिहारे यङ् । कृपणां दीनाम् ॥ ॥ इति प्रकीर्णकाण्ड प्रथम· समाप्त. ॥

## ॥ इति प्रकीर्णकाण्डम् ॥

## ॥ अतः परमधिकारकाण्डम् ॥

## तत्रप्रथमं टाधिकारः ।

इतः परमधिकारकाण्डमुच्यते । यत्र प्राधान्येनैकैकमधिकृत्य लक्षणं प्रदर्शितम् तदधिकारकाण्डम् । शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् । एवं च कृत्वा अन्तरान्तरा तत्सूचनार्थं प्रकीर्णकश्लोकाभिधानम् । अत्र च काण्डे निर्दिष्टसंज्ञकाश्चत्वार परिच्छेदाः । तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते । सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसन्धायाह ॥

**द्विषन् वनेचराग्र्याणां त्वमादायचरो वने ।**
**अग्रेसरो जघन्यानां माभूः पूर्वसरो मम ॥ ९७ ॥**

**द्विषन्नित्यादि** ॥ एवञ्च कृत्वा मिश्रक उच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् । परुषं वदन् कीदृशं हे द्विषन् माभूः पूर्वसरो ममेति । ममाग्रतो भूत्वा मागा इत्यर्थः । पर्वं सरतीति पूर्वे कर्तरीति ट. । यतस्त्वमग्रेसरो जघन्यानाम् । अग्रेसरतीति पुरोऽग्रत इत्यादिना ट । जघन्य इति शाखादिभ्यो य इतीवार्थे य । पापानां प्रथमस्त्वम् । कुतः आदायचरो वने । आदाय चरतीति भिक्षासेनेत्यादिना । वने चरन्तीति वनेचराः । अधिकरणे चरेष्टः । तेषामग्र्याः प्रधाना ऋषय । तानादाय चरसि भक्षयसि । कर्मणि षष्ठी ॥

**यशस्करसमाचारं ख्यातं भुवि दयाकरम् ।**
**पितुर्वाक्यकरं रामं धिक्त्वां दुन्वन्तमत्रपम् ॥ ९८ ॥**

**यशस्करेत्यादि** ॥ रामं दुन्वन्तमुपतापयन्तमत्रपं निर्लज्जं धिक् त्वाम् । गर्हा । टुदु उपतापे इत्यस्य सौवादिकस्य शतरि हुश्नुवोः सार्वधातुक इति यणादेशे रूपम् । कीदृशं रामं यशस्करसमाचारम् । समाचरणं समाचारः चरितं भावे घञ् । यशस्करोतीति यशस्करः । कृञो हेत्वित्यादिना ट. । विसर्जनीयस्य स. । यशस्करणहेतुभूतः समाचारो यस्य । ख्यातं भुवि प्रसिद्धं दयाकरं करुणाकरणशीलम् । ताच्छील्ये ट. । पितुर्वाक्यकरं पितुर्वचनानुष्ठाने अनुकूलम् । आनुलोम्ये टः ॥

**अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः ।**
**तव राक्षस रामस्य नेयः कर्मकरोपमः ॥ ९९ ॥**

**अहमित्यादि** ॥ हे राक्षस अहं तव नूनमवश्यमन्तकरः । विनाशयिता । कीदृशः । रामस्य नेयो वश्य॰ । अचोयत् । कर्मकरोपमः भृतकतुल्यः । कर्मणि भृताविति टः ।॰ध्वान्तस्येव दिवाकरः । यथान्धकारस्यान्तकरो दिवाकरः सूर्यः तथा । अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ । एवमुक्त्वा खं पपातेति सम्बन्धः ॥

**सतामरुष्करं पक्षी वैरकारं नराशिनम् ।**
**हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् ॥ १०० ॥**

**सतामित्यादि** ॥ एवमुक्त्वा असौ जटायु पक्षी खमाकाशं पपात पतितः । किमर्थं नराशिनं राक्षसं हन्तुं हनिष्यामीति । कीदृशं राक्षसं सतामरुष्करम् । धर्मे स्थितानां पीडाकरम् । अरु.शब्द॰ पीडोपलक्षणपरः । दिवाबिभेति टः । वैरकारं वैरकरणशीलम् ।कलहकारः पक्षी कलहयितुमनुकूलः । अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भवति । कर्मण्यण॰ प्राप्तिरस्तीति टाधिकार उदाहृतः । कियत्खं पपात यावति दूरे शब्दपातस्तावत्खमिति ॥ ॥ टाधिकारः समाप्तः ॥

## अतः परं प्रकीर्णकाः ।

इतः प्रकीर्णकश्लोकानाह ॥

**धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ ।**
**मांसशोणितसन्दर्शं तुण्डघातमयुध्यत ॥ १०१ ॥**

**धुन्वन्नित्यादि** ॥ असौ पक्षी अयुध्यत युध्यते स्म । युधेर्दैवादिकस्य लङि रूपम् ।तुण्डघातमिति क्रियाविशेषणम्। तुण्डेन चञ्चवा घातोहननं यस्मिन् युद्ध इति । करणे हन इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातं भूमिं हन्तीति । हिंसार्थानां च समानकर्मकाणामित्यनेनापि न भवति समानकर्मकताभावात् । अकर्मकत्वाद्युधे॰ । तेन भावे घञ् । धुन्वन् कम्पयन् । खे आकाशे पक्षयोर्वितानम् । सर्वपथीनं सर्वं॰ पन्था इति पूर्वकालेत्यादिना सः । ऋक्पूरिति समासान्तोऽकारः । सर्वपथान् व्याप्नोतीति तत्सर्वादेरित्यादिना खः । मांसशोणितसन्दर्शं कार्त्स्न्येन मांसं शोणितं च दृष्ट्वा । कर्मणि दृशिविदोः साकल्य इति णमुल्। अमैवाव्ययेनेति सः ॥

**न बिभाय न जिह्राय न चक्राम न विव्यथे ।**
**आघ्नानो विध्यमानो वा रणान्निववृते न च ॥ १०२ ॥**

**नेत्यादि** ॥ आघ्नानः पक्षी प्रहरन् । आङो यमहन इति तङ् । न विभाय न भीतः । तस्मान्न जिह्राय न लज्जितः । सम्यङ् मया न हत इति नचक्राम न क्रान्तः । न विव्यथे । व्यथो लिटीति सम्प्रसारणम् । जितश्रमत्वात् । विध्यमानो वा । वाशब्दश्चार्थे । परेण हन्यमानश्च न विव्यथे न पीडां भेजे । सत्त्वाधिकत्वात् रणाच्च न निववृते न निवृत्तः । अभग्नोत्साहत्वात् ॥

**पिशाचमुखधौरेयं सच्छत्रकवचं रथम् ।**
**युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ १०३ ॥**

**पिशाचेत्यादि** ॥ युधि संग्रामे पक्षी रथं बभञ्ज भग्नवान् । तस्य पुष्पकादन्यत्वात् । तथा हि कद्रथवत् कुत्सितरथमिव । रथवदयोश्चेति कदादेशः । धुरं वहन्ति धौरेया अश्वाः । धुरो यड्ढकौ । पिशाचस्येव मुखं येषान्ते धौरेया यत्र रथे तं पिशाचमुखधौरेयम् । सच्छोभनं छत्रं कवचं च यस्मिन् । तं भीमं भयानकं तथा धुर्यत्वात् । ध्वजशालिनं ध्वजवन्तम् । शालिन् शब्दः किन्प्रत्ययान्तस्तद्वन्तमाह । अन्यस्त्वाह ध्वजेन शालितुं श्लाघयितुं शीलमस्येति णिनिः । अनेकार्थत्वाद्धातूनामिति ॥ एते प्रकीर्णकाः ॥

## अतः परं आमधिकारः ।

इतः प्रभृत्याममधिकृत्याह ॥

**संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः ।**
**स त्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥ १०४ ॥**

**सन्त्रासयामित्यादि** ॥ अथैतस्मिन् युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् । गत्यादिषु त्यजेरसंग्रहात् तृतीयैव भवति । कस्मात्त्याजितवानित्याह । सन्त्रासयाञ्चकारारिं यस्मादरिं रावणं त्रासितवान् । अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्मत्वम् । आभ्यां हेतुमण्ण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् । आमोऽमित्वमदन्तत्वात् । आम इति लुक् । अयामन्तेत्यादिना अयादेशः । आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनम् । तस्याव्ययादिति लुक् । स्वरादिषु अम् आमिति पठितत्वादव्ययत्वम् । आमन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यत इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः । कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति । सुरांश्च पश्यतो युद्धं जटायुः पिप्राय प्रीणितवान् । शत्रुत्रासनं सीतात्याजनं च देवानां प्रीतेः कारणम् ॥

**असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः ।**
**भूयस्तं बेभिदाञ्चक्रे नखतुण्डायुधः खगः ॥ १०५ ॥**

**असीत इत्यादि** ॥ असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् । एह्येहीति विहगाधिपेति । कासृशब्दकुत्सायामित्यनुदात्तेत् । कासित्यादिना आम् । शस्त्रैः इत्थम्भूते तृतीया । निराकुलः पूर्वं बाहुभिः सीताग्रहणे व्याकुलत्वात् । भूयः पुनरपि । खगः पक्षी । डप्रकरणे अन्येष्वपि दृश्यत इति वचनात् गमेर्डः । तं निशाचरं बेभिदाञ्चक्रे । अत्यर्थं भिन्नवान् । बेभिद्यतेर्यङन्तादाम् । नखतुण्डान्येवायुधानि यस्य ॥

**हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।**
**न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥ १०६ ॥**

**हन्तुमित्यादि** ॥ तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते चेष्टां कृतवन्तौ । इजादेरित्यादिना आम् । विः पक्षी । जनिघसिभ्यामित्यधिकृत्य वेञोडिच्चेत्यौणादिक इक् । नवा नैव । वाशब्द एवार्थे । पलायाञ्चक्रे पलायितः । उपसर्गस्यायताविति लत्वम् । राक्षसश्च न दयाञ्चक्रे न दयते स्म । पक्षिणं खल्वहं कथं व्यापादयामीति । उभयत्रापि दयायासश्चेत्याम् ॥

**उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः ।**
**छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्रिणः ॥ १०७ ॥**

**उपेत्यादि** ॥ देवगन्धर्वकिन्नरा द्रष्टुं युद्धं द्रक्ष्याम इति उपासाञ्चक्रिरे उपगताः । पूर्ववदाम् । क्रव्यात् रावणः । क्रव्यं मांसमत्तीति क्रव्यात् । अदोऽनन्न इति विट् । पतत्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् । यङ्प्रत्ययान्तत्वादाम् । छलेन मायया प्रसह्य जेतुं न शक्यत इति । भल्लेनेति पाठान्तरम् ॥

**प्रलुठितमवनौ विलोक्य कृत्तम्**
**दशवदनः खचरोत्तमं प्रहृष्यन् ।**
**रथवरमधिरुह्य भीमधुर्यं**
**स्वपुरमगात् परिगृह्य रामकान्ताम् ॥ १०८ ॥**

**इति भट्टिकाव्ये पञ्चमः सर्गः ॥ ५ ॥**

**प्रलुठितमित्यादि** ॥ खचरा पक्षिणः । खे चरन्तीति अधिकरणे चरेष्टः । तेषामुत्तमं जटायुं कृत्तं छिन्नं लूनपक्षत्वात् । अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तो विघ्नकारीति दशाननो रथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां सीताहरणंनाम मिश्रकः पञ्चमः सर्गः ॥५॥

---

# षष्ठः सर्गः ।

अत्राधिकारस्यापरिसमाप्तत्वात्तमेवाममधिकृत्याह ॥

**ओषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशम् ।**
**विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकाम् ॥ १ ॥**

**ओषाञ्चकारेत्यादि** ॥ अथशब्दो वक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः । अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषाञ्चकार ददाह । उषदाहे । उषविदेत्याम् । अहर्निशं अहश्च निशा च । सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया । अह्नो नकारस्य रोऽसुपीति रत्वम् । कस्माद्ददाह इत्याह । रावणो वैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्वत्र निरभिलाषां विदाञ्चकार । अगुणत्वं विदेस्तथेति विदेरगुणत्वान् गुणाभावः ॥

**प्रजागराञ्चकारारेरीहास्वनिशमादरात् ।**
**प्रबिभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः ॥ २ ॥**

**प्रजागराञ्चकारेत्यादि** ॥ अरेरामस्य ईहासु चेष्टासु । गुरोश्च इत्यकारः । आदरादादरेण प्रजागराञ्चकार जागरितवान् । शत्रुचिकीर्षितज्ञानपरो बभूवेत्यर्थः । पूर्ववदाम् । अनिशम् अविच्छेदेन । ( अनिशमिति निशाक्रियाविच्छेदो नास्ति यस्मिन् प्रजागरण इति । निशेति क्रियाविच्छेदोपलक्षणम् । प्रायेण हि निशायां क्रियाणामप्रवर्तनम् ) किमिति जागरितवानित्याह । काकुत्स्थादसौ प्रबिभयाञ्चकार प्रभीनवान् । भीह्रीत्यादिनाम् । श्लुवत् कार्ये धातोर्गुणायादेशौ । अभिशङ्कितः किमयं करिष्यतीति ॥

**न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जितः ।**
**नाप्यूर्जां बिभरामास वैदेह्यां प्रसितो भृशम् ॥ ३ ॥**

**न जिह्रयाञ्चकारेत्यादि** ॥ सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः । तर्जितः भर्त्सितोऽपि तयैवेत्यर्थात् । नाप्यूर्जां बलं बिभरामास धारितवान् । कृञ्चिति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः । ह्रीधातोर्गुणायादेशौ । डुभृञ् धारणपोषणयोः । उभयत्रापि पूर्ववदाम् श्लुवच्च । कथं न धारितवान् इत्याह । वैदेह्यां प्रसितः प्रसक्तः । भृशमत्यर्थम् ॥

**विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत् स्वकान् ।**
**रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान् ॥ ४ ॥**

**विदाङ्कुर्वन्त्वित्यादि** ॥ स्वकानात्मीयान् शुकसारणादीन् अवददुक्तवान् । किमित्याह । रामस्य वृत्तमनुष्ठितं किन्तस्येहागन्तुमुद्यमोऽस्ति न वेति विदाङ्कुर्वन्तु । विदाङ्कुर्वन्त्वित्यन्यतरस्यामिति निपातितम् । सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् । शासेः सर्तीत्यङ् । शास इदङ्हलोरिति शासेरुपधाया इत्वं शासिवसीति षत्वम् । प्रयत्नवान् प्रयत्नपरः । आमधिकारो गत. ॥

## अथ प्रकीर्णकाः ।

अथ प्रकीर्णश्लोकानाह ॥

**रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः ।**
**क्रोष्टून् समश्रृणोत् क्रूरान्रसतोऽशुभशंसिनः ॥ ५ ॥**

**राम इत्यादि** ॥ हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् । वलादिलक्षण इटि प्राप्ते न वृद्भ्य इतीण्निषेधः । क्रोष्टून् शृगालान् । रसतः शब्दायमानान् । अशृणोत् संश्रुतवान् । सकर्मकत्वात्समोगमीत्यात्मनेपदं न भवति । लङि रूपम् । क्रूरान् भीषणान् । यतः खरनादिनः खरवन्नदन्ति । कर्तरीति णिनिः । अशुभशंसिनः अनिष्टसूचनशीलान् ।

**आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।**
**स शत्रुघ्नस्य सोदर्यं दूरादायान्तमैक्षत ॥ ६ ॥**

**आशङ्कमान इत्यादि** ॥ तथाविधाशुभश्रवणादाशङ्कमानो वितर्कयन् वैदेहीं किं खादितां निशाचरादिना । ततः निहतां त्यक्तप्राणाम् । अहो स्वयमेवायु.क्षयान्मृतां वा । स रामः शत्रुघ्नस्य सोदर्यं भ्रातरम् । सोदराद्यः । आयान्तमागच्छन्तमारादैक्षत दृष्टवान् । ईक्षेर्लङि रूपम् ॥

**सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकिकाम् ।**
**विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभम् ॥ ७ ॥**

**सीतामित्यादि** ॥ सौमित्रेरेकाकिनो दृष्टत्वान्नियतमनेन त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थो रामः । क्षये गृहे । क्षीयतेऽस्मिन्निति अधिकरणेऽच् । क्षेमं कल्याणम् । सुदुर्लभं सुदु.खेन लभ्यत इति । ईषदित्यादिना खल् । अमंस्त ज्ञातवान् । कथं क्षये क्षेमं सुदुर्लभमिति आह । सध्रीचीं सहचारिणीं न क्वचिदेकाकिनी तिष्ठन्तीम् । सहाञ्चतीति ऋत्विगादिना क्विन् । सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्र्यादेशः । अञ्चतेश्चोपसंख्यानमिति ङीप् । अच इत्यकारलोपः । चाविति दीर्घः । कुतः त्रस्नुं त्रसनशीलाम् । क्रियाशब्दत्वादूङ् न भवति । एकिकां लक्ष्मणेन त्यक्तत्वात् । एकादाकिनिच्चासहाये इति चकारात्कन् । प्रत्ययस्थादितीत्वम् ॥ ॥ एते प्रकीर्णकाः ॥

## अतः परं दुहादिः।

इतो द्विकर्माधिकारः ॥

**सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।**
**रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विह्वलः ॥ ८ ॥**

**सोऽपृच्छदित्यादि** ॥ अकथितं चेत्यत्र दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः। तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म लक्ष्मणमित्यकथितं कर्म। याचमानः प्रार्थयमानः। शिवं कल्याणम्। अर्थात् सीतायाः शिवं प्रधानं कर्म सुरान् देवान् इत्यकथितं कर्म। भ्राता लक्ष्मणः सर्वं यथावत् स्थितं ब्रूते स्म उक्तवान्। सर्वमिति प्रधानं कर्म राममित्यकथिनम ॥

**संदृश्य शरणं शून्यं भिक्षमाणो वनं प्रियाम्।**
**प्राणान् दुहन्निवात्मानं शोकं चित्तमवारुधत् ॥ ९ ॥**

**संदृश्येत्यादि** ॥ रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा। शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत्। कीदृशः प्रियां जानकीं वनं भिक्षमाणः। प्राणान् दुहन्निव त्यजन्निव। प्राणानिति प्रधानं कर्म आत्मानमित्यकथितम्। आत्मनः प्राणान् त्यजन्निव ॥

**गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्।**
**आ यत्र तापसान् धर्मं सुतीक्ष्णः शास्ति तत्र सा ॥ १० ॥**

**गतेत्यादि** ॥ यत्र यस्मिन्तपोवने सुतीक्ष्णो नाम ऋषिः धर्मं शास्ति शिक्षयति। धर्ममितिप्रधानं कर्म। तापसानित्यकथितं तत्र तपोवने गता स्यात्। सम्भावने लिङ्। आकारो निपातः स्मरणे। किं कुर्वती कुसुमान्यवचिन्वाना। कुसुमानीति प्रधानं कर्म आश्रमद्रुमानित्यकथितम्। अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ्। दुह्यादिदण्डको गतः ॥

इति दुहादिर्द्विकर्मकः।

## अतः परं प्रकीर्णकाः।

प्रकीर्णकानाह ॥

**आः कष्टं बत ही चित्रं हूं मातर्दैवतानि धिक्।**
**हा पितः! क्वासि हे सुभ्रु! बह्वेवं विललाप सः ॥ ११ ॥**

**आः कष्टमित्यादि** ॥ शोकेनाक्रान्तमना विलपन्नाह। आः पीडायाम्। पितृवियोगपीडितः आः इत्याह। अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायः। कष्टमित्याह।

कष्टं कृच्छ्रम् । भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह बत इति । बतशब्दः खेदे । सौमित्रिरपि तया सीतया अन्यादृशः सम्भावित इति विस्मितो हीत्याह । हीशब्दो विस्मये । यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्त इत्यभिप्रायेणाह चित्रमिति । चित्रमाश्चर्ये । यदेवंविधोऽपि स्खलतीति । सर्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हुं मातरित्याह । हुं शब्द. क्रोधे । अथवा सर्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति । धिक् कुत्सायाम् । प्राणांस्त्यक्तवन्तमपि पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह । हापित क्व द्रष्टव्यो-ऽसीति । हा शोके । हे सीते क्व गतासीति । भ्रूशब्दादप्राणिजातेरित्यादिनोङ् । उवर्णान्तमात्रस्य विधानाद्बहुव्रीहिः । उपसर्जनत्वं च । पुन· स्त्रियामूङ् । अन्तादिवच्चेति पूर्वप्रत्यन्तवत्त्वात् प्रातिपदिकत्वम् । अत· सम्बुद्धौ ह्रस्वत्वम् । विललाप स एवं कृत्वा बह्वनेकप्रकारं विलापं कृतवान् ॥

**इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत् ।**
**अग्लासीत् संस्मरन्नित्थं मैथिल्या भरताग्रजः ॥ १२ ॥**

**इहेत्यादि** ॥ इह प्रदेशे आसिष्ट उपविष्टा । इदमो हः । इदम इश् इह । अशयिष्ट शयितवती । आसेः शीङश्च लुङ् । सखेलं सलीलम् । इतः प्रदेशादगमत् गतवती । इत्थमेवंप्रकारम् । मैथिल्या. स्मरन् । अधीगर्थेति कर्मणि षष्ठी । भरताग्रजो रामोऽग्लासीत् ग्लानिं गत. । ग्लायतेर्लुङ् । यमरमेति सगिटौ ॥

**इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम् ।**
**शुचेवोद्बध्य शाखायां प्रग्लायति तया विना ॥ १३ ॥**

**इदमित्यादि** ॥ नक्तन्तनं निशाभवं इदं दाम पुष्पमाला पुनर्दिवातनं दिवसभवम् । सायमित्यादिना ट्युट्युलौ तुट् च । पौष्पं पुष्पाणामिति तस्येदमित्यण् । शुचेव शोकेनेव । सम्पदादित्वात्क्विप् । शाखायामुद्बध्य । आत्मानमित्यर्थात् । प्रग्लायति ग्लानि गच्छति । ग्लायतेः शित्यायादेश. । शाखायां प्रलम्बमानं ग्लानि गच्छन्तं वीक्ष्येदमुत्प्रेक्षितम् । कुतः शोकात्तया विना सीताविच्छेदेन ॥

**ऐक्षिष्महि मुहुः सुप्तां यां मृताशङ्कया वयम् ।**
**अकाले दुर्मरमहो यज्जीवामस्तया विना ॥ १४ ॥**

**ऐक्षिष्महीत्यादि** ॥ यां वयमैक्षिष्महि ईक्षितवन्त । ईक्षेः सेटो लुङ् । मुहुः सुप्तां अविच्छिन्ननिद्रत्वात् । मृताशङ्कयेति अनिष्टशंसित्वात् प्रियजनहृदयस्य । इदानी

तया विना अहो वयं यज्जीवामस्तदकाले दुर्मरमिति विललाप । जीवितस्यापूर्णकाले । दुःखेन मरणमिति भावे खल् ॥

**अक्षेमः परिहासोऽयं परीक्षां मा कृथा मम ।**
**मत्तो मान्तर्धिथाः सीते मा रंस्था जीवितेन नः ॥ १५ ॥**

**अक्षेम इत्यादि ॥** परिहसनं परिहास क्रीडा । अयमक्षेमो न कल्याणकरः । मम परीक्षां किं मामपश्यन् दुखित आस्ते नवेति मा कृथाः माकार्षीः । अपितु दर्शयात्मानम् मा निलीयस्व । उश्चेति किस्वाद्गुणाभावः । ह्रस्वादंगादिति सिचो लोपः । तस्माद्धेतोः सीते मान्तर्धिथाः । अन्तर्हिता मा भूः । अन्तर्धाविलपादानसंज्ञायां पञ्चम्यास्तसिः । प्रत्ययोत्तरपदयोश्चेति मदादेशः । लुङि स्थाध्वोरिच्चेति सिच किस्वमित्वं च । ह्रस्वादिति सिचो लोपः । नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां मा कार्षीः । रमेरात्मनेपदित्वात्तङ् । ॥ एतेप्रकीर्णका ॥

## अतःपरं सिजधिकारः ।

सिचं सापवादमधिकृत्याह ॥

**अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमम् ।**
**मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ॥ १६ ॥**

**अहमित्यादि ॥** यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि । हन्तेर्लुङि चेति वधादेश । अदन्तत्वाद्वृद्ध्यभावः । तस्मान्मा घुक्ष न गोपय पत्युरात्मानम । अन्तर्धाविलपादानत्वम । व्यत्यासपरस्मैपदत्वम । गुहे शल इगुपधादनिटः क्सः । हो ढ । भष्भावकत्वषत्वानि । सिपश्च विसर्जनीय । मा न श्लिक्ष मा न परिरब्धाः अपितु श्लिष्य प्रियं माम । हे प्रिये । श्लिष आलिङ्गने क्स ॥

**मास्म द्राक्षीर्मृषा दोषं भक्तं मां मातिचिक्लिशः ।**
**शैलं न्वशिश्रियद्वामा नदीं नु प्रत्यदुद्रुवत् ॥ १७ ॥**

**मास्मेत्यादि ॥** मृषा दोषं व्यलीकं दोषं मा द्राक्षी । मयीत्यर्थान् । स्मोत्तरे लङ् चेति चकारालुङ् । शल इगुपधेति क्सस्य न दृश इति निषेधः । इगितो वेत्यङभावे सिच् । सृजिदृशोरित्यम् । हलन्तलक्षणा वृद्धि । व्रश्चेत्यादिना षत्वम । यतोऽहं भक्तस्ततो मां भक्तं मातिचिक्लिशः नातिक्लेशय । क्लिशेर्ण्यन्तात् सिपि णिश्रीत्यादिना चङ् । णिलोपह्रस्वद्विर्वचनानि । पुनर्विकल्पयन्नाह । मयि दोषदर्शनाद्वामा मत्प्रतिकूलवर्तिनी सती शैलं नु पर्वतं कमप्यशिश्रियदाश्रिता उत नदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः । नुशब्दो वितर्के । पूर्ववच्चङ् ॥

**ऐ वाचं देहि धैर्यं नस्तव हेतोरसुस्रुवत् ।**
**त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः ॥ १८ ॥**

**ऐ वाचमित्यादि ॥** ऐशब्दो निपातोऽभिमुखीकरणे वर्तते । वाचं देहि । प्रार्थनाया लोट् । ध्वसोरेद्धावित्येत्वम् । किमिति चेदाह । धैर्य नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितम् । नष्टा अदर्शनं गता सती त्वं नोऽस्माकं मति बुद्धिमधासीरिव पीतवतीव । बुद्धेरपगमात् । विभाषा धेट्श्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ । प्राणानदधः पीतवती । कायस्याचेष्टत्वात् । चङि रूपम् । आतो लोप. ॥

**रुदतोऽशिश्वियच्चक्षुरास्यं हेतोस्तवाश्वयीत् ।**
**म्रियेऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितम् ॥ १९ ॥**

**रुदत इत्यादि ॥** तवार्थे त्वां पश्यामीति रुदतो मम चक्षुरशिश्वियत् उच्छूनम् । आस्यं मुखं चाश्वयीत् । विभाषा धेट्श्व्योरिति चङ्सिचौ । चङीयङ् । ह्म्यन्तेति न वृद्धि. । इट ईटीति सिचो लोपः । गुणायादेशौ । मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा म्रियेऽहम् । म्रियतेर्लुङ्लिङोश्चेति चकाराच्छित्यात्मनेपदम् । रिङ्शयगिति रिङ् । अतो यत्त्वया चिकीर्षितं कर्तुमिष्टं तन्मा नावोचः मा नाभाषिष्ठाः अपितु ब्रूहि । अस्यतिवक्तीत्यङ् । वच उम् ॥

**लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणम् ।**
**दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥**

**लक्ष्मणेत्यादि ॥** हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्यदुक्तवती । इदन्तेनाप्रियमाचरितम् । पूर्ववदङ् । तदाचक्ष्व कथय । अज्ञाते दोषे अनिर्धारिते प्रतिसमाधानं कथं क्रियतां अनुष्ठीयतां नैवेति भावः । कर्मणि लोट् । रिङित्यादिना रिङ् ॥

**इह सा व्यलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः ।**
**इहाहं द्रष्टुमाह्वं तां स्मरन्नेवं मुमोह सः ॥ २१ ॥**

**इहेत्यादि ॥** इह प्रदेशे सा सीता गन्धैर्व्यलिपत् समालिप्तवती । मामात्मानं चेत्यर्थात् । इह स्नान्ती क्रीडापूर्वकमभ्यषिचत् । हस्तयन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थ. । प्राक्सितादिति षत्वम् । इह द्रष्टुं तामाह्वं आहूतवान् । लिपिसिचि ह्वश्चेति च्लेरङ् । एवं स्मरन् मुमोह मोहं गतवान् ॥

**तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन् ।**
**अलिप्तेवानिलः शीतो वने तं न त्वजिह्लदत् ॥ २२ ॥**

**तस्येत्यादि** ॥ तस्य रामस्य स्वान्तं मनः । क्षुब्धस्वान्तेत्यादिना निपातितम् । शोकाग्नि शोकोऽग्निरिव । अलिपत दीपितवान् । परस्मैपदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पेनाङ् । स्वरितञित इति क्रियाफलविवक्षायामात्मनेपदम् । काष्ठमिव स्वान्तं ज्वलन् अभिवर्धमानः । अनिलो वायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव । अडभावपक्षे झलो झलीति सिचो लोपः । नतु नैवाजिह्लदत् ह्लादितवान् । शोकाग्निरुद्धद्धत्वात् । ह्लादेर्ण्यन्ताण्णिश्रीति चङ् ॥

**स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना ।**
**तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्छितः ॥ २३ ॥**

**स्नानित्यादि** ॥ असौ रामो दयितया विना । शोकमूर्छित शोकेन मोहं नीतः । स्नातुमारब्धः । मूर्छेर्हेतुमण्ण्यन्तस्य रूपम् । ष्णा शौचे । शतृप्रत्ययः । रुदन् अश्रुविमुञ्चन् । अम्भः सलिलं अभ्यषिचत क्षिप्तवान् । शिरस्यञ्जलिना । तथा स्नातः पितृभ्यो वारीणि अभ्यषिक्त दत्तवान् । सिचेः पूर्ववद्विभाषाऽङ् । सिचिरत्रोत्सर्गे वर्तते । ततश्चार्थान्तरवृत्तित्वाज्जलस्य कर्मत्वम् । अभ्युक्षणे तु करणत्वं यथा जलेन सिञ्चतीति ॥

**तथार्तोऽपि क्रियां धर्म्यां स कालेनामुचत् क्वचित् ।**
**महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥ २४ ॥**

**तथेत्यादि** ॥ स रामस्तेन प्रकारेणार्तोऽपि । क्वचिदपि धर्म्यां क्रियां काले नामुचत् न त्यक्तवान् । यतो महतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति नापयाति । आङ्पूर्वादर्तेर्ऋणोतेर्वा निष्ठायां ऋतिधातौ वृद्धिः । मुचे ऌदनुबन्धत्वादङ् । कृत्यः श च । रिङियङौ ॥

**आह्वास्त स मुहुः शूरान् मुहुराह्वत राक्षसान् ।**
**एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवम् ॥ २५ ॥**

**आह्वास्तेत्यादि** ॥ पुनः पुनरभिभवितुं शूरानाह्वास्त आहूतवान् । तथा राक्षसानाह्वत । पूर्ववद्विकल्पः । स्पर्धायामाङ इत्यात्मनेपदम् । कथमाहूतवानित्याह हे सीताद्रुहः सीताहिंसकाः शूरा राक्षसा वा एत आगच्छत । आङ्पूर्वादिणो लोट् । संख्ये संग्रामे । राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत । प्रत्यर्थिन् शब्दात्तत्करोतीत्यर्थे णिच् । तदन्ताल्लोटः परस्मैपदम् । अर्थयाच्ञायामित्यस्य तु स्वार्थिकण्यन्तस्य सर्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति स्यात् ॥

**स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः ।**
**अद्युतच्चेन्दुना सार्धं तां प्रब्रूत गता यतः ॥ २६ ॥**

**स्वपोषमित्यादि** ॥ हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् स्वपोषमपुषत् पुष्टवती । स्वे पुष इति णमुल् । यथाविध्यनुप्रयोगश्च । पुषादित्वादङ् । तां प्रब्रूत कथयत । यतो यत्र । आद्यादित्वात्तसिः । गता सत्यद्युतत् द्योतते स्म । पूर्ववदङ् । इन्दुनासार्धम् । चन्द्रमसा तुल्यकान्तित्वात् ॥

**गिरिमन्वसृपद्रामो लिप्सुर्जनकसम्भवाम् ।**
**तस्मिन्नायोधनं वृत्तं लक्ष्मणायाशिषन्महत् ॥ २७ ॥**

**गिरिमित्यादि** ॥ गिरिमन्वसृपत् लक्षीकृत्य गत. । लृदित्वादङ् । किमर्थं लब्धुमिच्छु' । सनिमीमेत्यादिना इस् । अत्र लोप इत्यभ्यासलोपः । खरि चेति चर्त्वम् । जनकसम्भवाम् । सम्भवत्यस्मादिति सम्भवः । ऋदोरप् । जनकः सम्भवो यस्यास्तस्माद्वा संभवो यस्यास्तां सीताम् । तस्मिन् गिरौ आयोधनं युद्धं महदतिशयत्वात् वृत्तं लक्ष्मणायाशिषत्कथितवान् । क्रियायोगे चतुर्थी । सर्तीत्यादिनाऽङ् । शास इदङ्हलोरितीत्वम् । शासिवसीति षत्वम् ॥

कथमकथयदित्याह ॥

**सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवम् ।**
**इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत्तयोः ॥ २८ ॥**

**सीतामित्यादि** ॥ (इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते) हे सौमित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतामागताविति ध्रुवं निश्चितम् । अर्तेराङ्पूर्वात्पूर्ववदङ् । ऋदृशोऽङीति गुणः । कीदृशौ सीतां जिघांसू हन्तुमिच्छू । हन्तेः सनि अज्झनगमां सनीति दीर्घ. । अभ्यासाच्चेति कुत्वम् । तथाहि । तयो' सीताद्वेषानुनयाभ्यां संप्रहारे युद्धे इदं शोणितम् अच्युतत् गलितम् । च्युतिर् क्षरणे । अकर्मकोऽत्र । इरितो वेत्यङ् । अभ्यग्रं प्रत्यग्रम् ॥

**इदं कवचमच्योतीत् साश्वोऽयं चूर्णितो रथः ।**
**एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतम् ॥ २९ ॥**

**इदमित्यादि** ॥ इदं कवचमच्योतीत् भ्रष्टम् । अङभावे सिजेव भवति । अयं रथ साश्वश्चूर्णित आस्ते । यतश्चैवं तस्मादेहि आगच्छ द्रुतम् । किं पश्चाद्विलम्बसे । अमुं गिरिमवगाहावहे विलोडयावः । किमर्थं अन्वेष्टुम् । सीतामित्यर्थात् । एतत्सर्वं पर्वतसमीपे कथ्यते ॥

**मन्युर्मन्ये ममास्तम्भीद्विषादोऽस्तभदुद्यतिम् ।**
**अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत् ॥ ३० ॥**

**मन्युरित्यादि** ॥ मन्युः शोकः। मन्ये धमन्यौ । (क्रन्दतः उच्छूने)। अस्तम्भीत् स्तब्धवान् । विषाद उद्यतिमस्तभन । अत्र पक्षे अनुनासिकलोप । प्रज्ञा-च तत्त्वविवेकिनी बुद्धि अजारीत् विवेकवैकल्यान जीर्णेव । तथाशब्द समुच्चये । बलं शोकादजरत् जीर्णम् । स्वकार्याकरणात् । ऋदृशो ङीति गुणः। जॄस्तम्भिम्रुचुम्लुचुग्लुचुग्लुञ्चुश्विभ्यश्चेत्यादिना सिजङौ ॥

**गृध्रस्येहाश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण ।**
**जिघत्सोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ ३१ ॥**

**गृध्रस्येत्यादि** ॥ हे लक्ष्मण । इह प्रदेशे गृध्रस्य पक्षौ कृत्तौ च्छिन्नौ । अश्वतां शूनौ । पूर्ववदङि श्वयतेर इति । वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य । अदेर्लुङ्सनोर्घस्लृ । निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्न । कर्तरि लुङ् । चिण् ते पद इति च्लेश्चिणादेश. । तशब्दस्य चिणो लुक् ॥

**क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात् ।**
**अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥ ३२ ॥**

**क्रुद्ध इत्यादि** ॥ तदेवं रघुव्याघ्रो राम क्रुद्धोऽदीपि दीप्तवान् । क्षणाच्च रक्तनेत्रोऽजनि जात । जनिवध्योश्चेति न वृद्धि । त्रैलोक्यं निहन्मि यस्मिन् हन्यमाने सीताद्रुहोऽपि नश्यन्ति इत्यभिप्रायेण दुःस्थमबोधि बुध्यते स्म । किंवा रामस्य दारा ह्रियन्ते तदान्येषु का कथा इति दुःस्थं त्रैलोक्यमबोधि । दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्धते स्म । भानुवदादित्यवत् । दीप्तैरिति भावे निष्ठा । सर्वत्र कर्तरि लुङ् । दीपजनेत्यादिना चिण् ॥

**अतायि यस्योत्तमं सत्वमप्यायि कृतकृत्यवत् ।**
**उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत् ॥ ३३ ॥**

**अतायीत्यादि** ॥ अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्यसनयोरविकारित्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्म । अप्यायि बृंहितम् । कृतकृत्यवत् समाप्तक्रियवत् । हस्ततलस्थं शत्रुवधं मन्यमानस्य। उभयत्रापि पूर्ववच्चिण् । तस्य रामस्य संरम्भिणः शत्रुविषये क्षुभितचित्तस्य सामर्थ्यं बलंमहदुपाचायिष्ट स्वयमेवोपचीयते स्म । चिनोतेरचः कर्म कर्तरीति वा चिण् । पक्षे चिण्वदिट् ॥

**अदोहीव विषादोऽस्य समरुद्धेव विक्रमः ।**
**समभावि च कोपेन न्यश्वसीच्चायतं मुहुः ॥ ३४ ॥**

**अदोहीत्यादि** ॥ अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं क्षरित इव । अथवा अदोहीव प्रपूर्यते स्मेव । दुहश्चेति चिण् । विक्रमः पुरुषकारः समरुद्धेव स्वयं संरुध्यते स्म इव । कर्मवदित्यादिना कर्मवद्भावेन प्राप्तस्य चिणो नरुध इति निषेधः । तेन सिजेव भवति । झलो झलीति सिचो लोपः । झषस्तथोर्धोधः । झलां जश् झशीति धत्वजश्त्वे । कोपेन च समभावि सम्भूतम् । चिण् भावकर्मणोरिति भावे चिण् । त्रैलोक्यदौःस्थ्यावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् । ह्मयन्तेति वृद्धिर्न भवति । मुहुरिति सर्वत्र योज्यम् ॥ ॥ इति सिजधिकारः ॥

इतः प्रभृति श्नम्प्रकरणमधिकृत्याह ॥

**श्नम्प्रकरणं कथ्यते ।**

**अथालम्ब्य धनू रामो जगर्ज गजविक्रमः ।**
**रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्वतान् ॥ ३५ ॥**

**अथेत्यादि** ॥ अथानन्तरं रामो धनुरालम्ब्य गृहीत्वा जगर्ज विस्फूर्जितवान् । धनू राम इति ढ्रलोप इति दीर्घः । गर्ज गर्जने । किं जगर्ज । सवितुः सूर्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि । शरैरित्यर्थात् । रुधादिभ्यः श्नम् । तथा भिनद्मि विदारयामि कुलपर्वतान् ॥

**रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान् ।**
**क्षुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥ ३६ ॥**

**रिणच्मीत्यादि** ॥ जलधेस्तोयं रिणच्मि रिक्तीकरोमि । रिचिर् विरेचने । दिवः स्वर्गात् सुरान् विविनच्मि पृथक्करोमि । विचिर् पृथग्भावे । क्षुणद्मि चूर्णयामि सर्पान् पाताले । क्षुदिर् पेषणे । अट् कुप्वाडिति णत्वम् । छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि । च्छिदिर् द्वैधीकरणे ॥

**यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलम् ।**
**शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्वतेजसा ॥ ३७ ॥**

**यमामित्यादि** ॥ यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि । अस्त्रकौशलं समिन्धानः संवर्धयन् । ञिइन्धी दीप्तौ । आत्मनेपदिनो लटः शानच् । श्नान्नलोपः ।

असोरल्लोपः । उर्वीं शुष्कां कृत्वा चूर्णयामि । पिष्लृ संचूर्णने । शुष्कचूर्णरूक्षेषु पिष इति णमुल् । अखिन्दानः स्वतेजसा दैन्यमभजन् अपरिश्राम्यन् । खिद दैन्ये पूर्ववल्लोपः॥

**भूतिं तृणह्मि यक्षाणां हिनस्मीन्द्रस्य विक्रमम् ।**
**भनज्मि सर्वमर्यादास्तनच्मि व्योम विस्तृतम् ॥ ३८ ॥**

**भूतिमित्यादि** ॥ यक्षाणां भूतिं सम्पदं तृणह्मि उत्सादयामि । ऊतृदिर् हिंसानादरयोः । इन्द्रस्य विक्रमं हिनस्मि अपनयामि । हिसि हिंसायाम् । इदितो नुम् । तस्य श्नान्नलोपः । सर्वमर्यादाश्च व्यवस्था सर्वेषां भनज्मि मर्दयामि । भञ्जो आमर्दने । श्नान्नलोपः । तनच्मि व्योम विस्तृतं सङ्कोचयामि । स्तृञ् आच्छादने सौवादिकस्य रूपं नस्तृञ्आच्छादने इति क्रैयादिकस्य । तञ्चू सङ्कोचे । श्नान्नलोपः ॥

कस्मादेवं प्रवृत्तस्त्वमिति चेदाह ॥

**न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमम् ।**
**एवं वदन् दाशरथिरपृणग्धनुषा शरम् ॥ ३९ ॥**

**न तृणेह्मीत्यादि** ॥ न तृणेह्मि न मारयामि इति कृत्वा । तृहहिसि हिंसायाम् । श्नम् । तृणह इम् । अयं लोको मां निष्पराक्रमं निर्वीर्यं विन्ते विचारयति । विदविचारण इत्यस्मादात्मनेपदिनः श्नम् । अल्लोपः । एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषः शरम् अपृणक् पृणक्ति स्म । पृची संपर्के । लङि श्नम् । हल्ङ्यादिलोपः । कुत्वम् ॥ इति श्नम् विकरणनिदर्शनम् ॥

इतः प्रकीर्णकश्लोकानाह ॥

**न्यवर्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्क्षयम् ।**
**ऐक्षेतामाश्रमादाराद्गिरिकल्पं पतत्रिणम् ॥ ४० ॥**

**न्यवर्तयदित्यादि** ॥ तं रामं जगत्क्षयं चिकीर्षुं कर्तुमिच्छुम् । सुमित्राभूर्लक्ष्मणो न्यवर्तयत् निवर्तितवान् । भ्रातः अलं कोपेन त्वया सार्धं कः संग्रामे युद्धं दातुं समर्थः । यदत्र युक्तं तत्प्रतिविधीयतामिति । भवनं भूः । सम्पदादित्वात् क्विप् । सुमित्रायां भूर्यस्य । ऐक्षेतां रामलक्ष्मणौ दृष्टवन्तौ । लङि रूपम् । पक्षिणं गिरिकल्पं महाप्रमाणत्वात् । आश्रमादारात् समीपे । दूरान्तिकार्थैरिति पञ्चमी ॥

**तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ।**
**मा वधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥**

**तमित्यादि** ॥ तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यभ्यधावत । धावुगतिशुद्ध्योरित्यस्माल्लङि स्वरितेत्त्वादात्मनेपदम् । तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्ठा इति । हे राम मां जटायुं मा वधिष्ठाः मा वधीः । वध बन्धने इत्यस्मादनेकार्थत्वादात्मनेपदिन सेटो लुङि रूपं न हन्तेः तस्य परस्मैपदित्वात् । सत्यप्याङि आङो यमहन इत्यात्मनेपदं न भवति तत्राकर्मकादित्यनुवृत्तेः । स्वनामपरिकीर्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिपि दृष्टवानहम् । लुङुत्तमैकवचने रूपम् । अतो मां मा वधिष्ठा ॥

**उपास्थितैवमुक्ते तं सखायं राघवः पितुः ।**
**पप्रच्छ जानकीवार्तां संग्रामं च पतत्रिणम् ।**
**ततो रावणमाख्याय द्विषन्तं पततां वरः ॥ ४२ ॥**

**उपास्थित इत्यादि** । पक्षिणैवमुक्ते सति राघवस्तं व्रणभङ्गाद्यनुष्ठानेन उपास्थित परिचरितवान् । सङ्गतकरण आत्मनेपदम् । स्थाघ्वोरिच्चेतीत्वम । ह्रस्वादङ्गादिति सिचो लोपः । पितुः सखायमिति सखिशब्दस्यद्वितीयैकवचने रूपम् । सख्युरसम्बुद्धाविति णित्वाद्वृद्धिरायादेशः । पप्रच्छ पृष्टवान् । तं पक्षिणं जटायुम् । किं जानकीवार्तां संग्रामं च ॥ तत उपस्थानानन्तरं रावणं द्विषन्तम् द्विषोऽमित्र इति शतृप्रत्ययः । आख्याय सीता रावणेन हृतेति कथयित्वा । पततां पक्षिणा वरो जटायुर्ममारेति परेणान्वयः ॥

**व्रणवेदनया ग्लायन्ममार गिरिकन्दरे ।**
**तस्याग्न्यम्बुक्रियां कृत्वा प्रतस्थाते पुनर्वनम् ॥ ४३ ॥**

**व्रणेत्यादि** । व्रणकृता वेदना पीडा मध्यपदलोपी समासः । तथा ग्लायन् ग्लानिं गच्छन् । शतर्यायादेशः । ममार मृतः । क्व गिरिकन्दरे यं गिरिमन्वसृपत् तस्य निम्नप्रदेशे । कन्दं रातीति (कं दारयति) व्युत्पत्तिमात्रम । तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानं च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ । समवप्रविभ्य इत्यात्मनेपदम् ॥

**सत्वानजस्रं घोरेण बलापकर्षमश्नता ।**
**क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना ॥ ४४ ॥**

**सत्वानित्यादि** । तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते गृहीतौ । कर्मणि लिट् । किं नाम्ना दीर्घबाहुना । अन्वर्था चेयं संज्ञा । एक एकेन बाहुना द्वितीयोद्वितीयेनेति । क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन । सत्वान् अजस्रं सदा । नञ्पूर्वाज्जसो

नमिकम्पीति रः । अश्नता भुञ्जानेन । किं कृत्वा बलापकर्षं बलादाकृष्येव पाकादिक-मनपेक्ष्य । अपादाने परीप्सायामिति णमुल् ॥

**भुजौ चकृततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ ।**
**स छिन्नबाहुरपतद्विह्वलो ह्वलयन् भुवम् ॥ ४५ ॥**

**इति प्रकीर्णकाः ।**

**भुजावित्यादि** ॥ रघूत्तमौ रामलक्ष्मणौ तस्य योजनवाहो बाहू यथा स्थानमागतौ चकृततुः चिच्छिन्नवन्तौ । कृतीच्छेदने इत्यस्य रूपम् । काभ्यां निस्त्रिंशाभ्यां खड्गाभ्याम् । निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डज्विधिः । निरादय इति समास । टिलोप । स छिन्नबाहुः कृत्तभुजः सन् अपतत् पतितः । पतेर्लुङि रूपम । ऌदित्वादङ् । विह्वलो व्याकुलः । भुवं भूमि ह्वलयन् । ह्वल चलने । घटादित्वे ह्रस्वत्वम् ॥ इति प्रकीर्णका. ॥

**अथ कृत्याधिकारः ।**

इतः परं कृत्याधिकार ॥

**प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत् ।**
**आत्मानं वनवासं च जेयं चारिं रघूत्तमः ॥ ४६ ॥**

**प्रष्टव्यमित्यादि** ॥ स योजनवाहु निहतो रामं पप्रच्छ को भवान् कस्य पुत्र कथं तव वनवासः कस्माचोद्विग्नः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य । तव्यत्तव्यानीयर इतितव्यत् । व्रश्चेति षत्वम् । ष्टुत्वं च । रघूत्तमस्तदानीं कथनीयं कथनार्हं प्रश्नानुरूपम् । तेनैवानीयर् । अवीवचद्व्यक्तिस्म । वच भाषणे चौरादिकः । स्वार्थिको णिच् लुङ् चङ् । णिलोपः ह्रस्वः । द्विर्वचनसन्वद्भावेत्वदीर्घत्वानि । कितदित्याह । आत्मानं अहं रामो दाशरथिरिति । वनवासं पितुरादेशात् वनवासः । जेयं चारिं जेतव्यं यः कनकमृगच्छलेन रावण सीतामपहृतवानिति ॥

**लभ्या कथं नु वैदेही शक्यो द्रष्टुं कथं रिपुः ।**
**सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम ॥ ४७ ॥**

**लभ्येत्यादि** ॥ कथं केन प्रकारेण उपायेन लभ्या वैदेही प्राप्या । पोरदुपधादिति यत् । शत्रुः केन प्रकारेण द्रष्टुं शक्यः । शकधृषेत्यादिना तुमुन् । वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सोढव्यः । शकिसहोश्चेति यत् । गद्यमेतत् कथनीयमेतत् । गदमदेत्यादिना यत् । ममेति शेषविवक्षायां षष्ठी ॥

त्वं पुनः कः इति पृष्ट आह ॥

**अहं राम श्रियः पुत्रो मद्यपीत इव भ्रमन्।**
**पापचर्यो मुनेः शापाज्जात इत्यवदत्स तम् ॥ ४८ ॥**

**अहमित्यादि** ॥ हे राम अहं श्रियः पुत्रः मद्यपीत इव । वाहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः । कार्याकार्यविवेकाभावात्पापचर्यो राक्षसः । मुनेः स्थूलशिरसः शापाज्जात उत्पन्नः । माद्यत्यनेनेति मद्यं चरितव्यं चर्यमेतौ पूर्ववद्यत्प्रत्ययान्तौ । पापं चर्यं यस्येत्यवदत् स योजनबाहुस्तं रामम् । वाक्यार्थोऽत्र कर्म ॥

**प्रयातस्तव यम्यत्वं शस्त्रपूतो ब्रवीमि ते ।**
**रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥**

**प्रयात इत्यादि** ॥ इदानीं तव यम्यत्वं वश्यत्वं प्रयातः । यमेः पूर्ववत् यत् । शस्त्रपूतस्तव शस्त्रेण पावितः सन् ब्रवीमि ते तुभ्यं कथयामि । युष्मदश्चतुर्थ्येकवचनस्य तेमयावेकवचन इति ते आदेशः । क्रियायोगे चतुर्थी । कथनीयमाह । रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥

वैदेही प्राप्या कथमिति यमुपायं पृष्टवान् तं कथयन्नाह ॥

**ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः ।**
**सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः ॥ ५० ॥**

**ऋष्यमूक इत्यादि** ॥ ऋष्यमूकपर्वते सुग्रीवो नाम कपिः चारुविक्रमो महापराक्रमोऽस्ति । असौ भवता वर्यो वरणीयः प्रार्थनीयः । वर ईप्सायामिति चौरादिकात्स्वार्थिकण्यन्तादचोयत् । यद्वा अवद्यपण्येत्यत्र वृडो वर्येति स्त्रियामनिरोधे अप्रतिबन्धे निपातितत्वात् । सततप्रवर्तिनी अनिरोध्या वर्या प्रीतिर्यस्येत्यर्श आद्यच् । सच भवता सह वर्यः प्रीतिमान् समानव्यसनत्वात् । यतः पण्यभ्रातृवधः सः पण्यो विक्रेतव्यो भ्रातुर्वालिनो वधो येन । यद्येवं तदा कथं मया पापीयान् वर्य इत्यत आह । अनवद्यः अगर्हणीयः । दारापहारित्वेन आततायिनो भ्रातुर्वधेन निर्दोषत्वादिति भावः ॥

**तेन वह्येन हन्तासि त्वमर्यं पुरुषाशिनाम् ।**
**राक्षसं क्रूरकर्माणं शक्रारिं दूरवासिनम् ॥ ५१ ॥**

**तेनेत्यादि** ॥ तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि । वह्येन वहत्यभिप्रेतमनेनेति वह्यं करणमिति यत् । कीदृशमर्यं स्वामिनम् । पुरुषाशिनां राक्षसानाम् । अर्यः स्वामिवैश्ययोरिति यन्निपात्यते । क्रूरकर्माणं पापाचारं शक्रारिं रावणम् । यद्येव-

महमेव हन्तुं समर्थ इत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यत इति भाव. ॥

यद्यनवद्यस्तदा कथमस्य पण्यो भ्रातृवध इत्याह ॥

**आस्ते स्मरन् स कान्ताया हृताया वालिना कपिः ।**
**वृषो यथोपसर्याया गोष्ठे गोर्दण्डताडितः ॥ ५२ ॥**

**आस्ते इत्यादि** ॥ वालिना हृताया. कान्ताया स्मरन्नास्ते । कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते । अधीगिनि कर्मणि षष्ठी । कस्येव वृषो यथा उपसर्याया आसन्नगर्भकालाया. गो स्मरन गोष्ठे आस्ते । उपसर्या काल्या प्रजन इति निपातितम् । दण्डताडित. सन् दण्डस्थानीयोऽत्र वाली ॥

**तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतम् ।**
**लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५३ ॥**

**तेनेत्यादि** ॥ हे राम तेन वानरेण संगतं सख्यं अजर्यं अनपायम् । न जीर्यत इत्यस्मिन् वाक्ये अजर्यं संगतमिति निपातितम् । आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्यं कुरु द्रुतं यावत्तस्यानेन युष्मद्विधेन संगतं न भवति । आर्येण सदाचारेण । ऋहलोर्ण्यत् । ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यसि ॥

ननु यावत्कार्यं न सिद्ध्यति तावत्संगतं गच्छति कृतकृत्यस्तु नैवेत्यत आह ॥

**अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम् ।**
**मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥**

**अनृतोद्यमित्यादि** ॥ सत्यमुद्यत इति कर्मणि यत् । अहं सत्यं वचो ब्रवीमीत्यर्थ । अनृतोद्यं तत्र सुग्रीवे नास्ति । अनृतमसत्यं उद्यं वचनं अनृतोद्यम् । भावे क्यप् । यजादित्वात्संप्रसारणम । उभयत्रापि वद सुपि क्यप् चेति चकाराद्यत् । यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गत । भुवो भावे क्यप । रिपुहत्यां करिष्यसि । हनस्त चेति क्यप् तकारश्चान्तादेशः ॥

**आदृत्यस्तेन वृत्येन स्तुत्यो जुष्येण सङ्गतः ।**
**इत्यः शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥**

**आदृत्य इत्यादि** ॥ तेन संगत सन् गृध्यमभिलषणीयमवाप्स्यसि । ऋदुपधादिति क्यप् । कीदृशः कीदृशेनेत्याह । आदृत्य. आदरणीय. । वृत्येन वरणीयेन । स्तुत्य. स्तवार्हः । जुष्येण सेव्येन हनूमत्प्रभृतीनाम । क इव शिष्येण गुरुरिव यथोपा-

ध्यायः शिष्येण शासनीयेन इत्य. अनुगम्यस्तद्वदिति । एति स्तुशास्वित्यादिना क्यप् । ह्रस्वस्य तुक् ॥

**नाखेयः सागरोऽप्यन्यस्तस्य सद्भृत्यशालिनः ।**
**मन्युस्तस्य त्वया मार्ग्यो मृज्यः शोकश्च तेन ते ॥ ५६ ॥**

**नाखेय इत्यादि** तस्य सुग्रीवस्य सद्भृत्यशालिन· हनूमदादिभृत्ययुक्तस्य । भृञोऽसंज्ञायामिति क्यप् । अन्यो द्वितीयः सागरोऽपि नाखेयो न खननीयः अपितु खननीयएव । अपिशब्द· सम्भावनायाम् । तस्य कारणं सद्भृत्यशालित्वम् । ई च खन इति क्यबीकारौ । तस्य मन्युस्त्वया मार्ग्योऽपनेय. । ते तव तेन च शोको मृज्यः । मृजेर्विभाषेति यद्विकल्पे ण्यत् ॥

**स राजसूययाजीव तेजसा सूर्यसन्निभः ।**
**अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ ५७ ॥**

**स इत्यादि** ॥ स निशाचरो द्यामाकाशं जगाहे गतः । राजसूययाजीव । राज्ञा सूयते राजा वा अनेन सूत इति राजसूय· क्रतुः । तेनेष्टवान् स राजसूययाजी । करणे यज इति णिनि. । तद्वदित्यर्थः । रुच्य· प्रियो जातो रामस्येत्यर्थात् । राजसूय इत्यादिना क्यबन्ता राजसूयादय. ॥

**अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः ।**
**रत्नान्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८ ॥**

**अकृष्टपच्या इत्यादि** ॥ ततो निशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ । कीदृशौ नष्टा संस्मृति. ययोः । केषां संस्मृतिः रत्नान्नपानकुप्यानाम् । रत्नान्नपानानि प्रसिद्धानि । कुप्यं स्वर्णरजताभ्यामन्यत् वस्तु तत् । संज्ञायां क्यप् । गुपेरादेः गकारस्य ककार· । कर्मणि षष्ठी । लता. पश्यन्तौ । कृष्टे पच्यंते इति कृष्टपच्याः । पूर्ववत् क्यप् । पश्चान्नञ्समास. । स्वयमेव पच्यन्ते यास्ता इत्यर्थः ॥

**समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान् ।**
**सिध्यतारामिव ख्यातां शबरीमापतुर्वने ॥ ५९ ॥**

**समुत्तरन्तावित्यादि** ॥ तौ तस्मिन् वने शबरीमापतु. प्राप्तवन्तौ । अव्यथ्यौ न व्यथेते इति पूर्ववत् क्यप् । परिश्रमवर्जितावित्यर्थः । नदान् समुत्तरन्तौ । कीदृशान् भिद्योद्ध्यसन्निभान् । भिद्योद्ध्यौ नदविशेषौ । भिद्योद्ध्याविति पूर्ववत् निपातितम । भि-

न्ति कूलमिति भिद्यः । उज्झत्युदकमिति उद्ध्यः । उज्झ उत्सर्गे । दकारात्परस्य धकारो निपात्यते । तत्सदृशान् नदान् । सिध्यतारामिव ख्याताम् । सिध्यन्त्यस्मिन्निति सिध्यः । पुष्यसिध्यौ नक्षत्रे इति निपातनात् । पुष्याख्यां तारामिव ख्यातां शबरीम् ॥

**वसानां वल्कले शुद्धे विपूयैः कृतमेखलाम् ।**
**क्षामामञ्जनपिण्डाभां दण्डिनीमजिनास्तराम् ॥ ६० ॥**

**वसानामित्यादि** ॥ वसानां परिदधानां वल्कले त्वचौ । विपूयैर्मुञ्जैः कृतमेखलां कृतकटिसूत्राम् । यद्यपि विपूर्वस्य पवतेर्विपूय इत्यादिना मुञ्जे निपातितं तथापि मुञ्जानाममुपहतत्वं ज्ञापयितुं विपूयैरिति विशेषणं पवित्रैरित्यर्थः । मुञ्जशब्दस्तदानीं सामान्यमाह । विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमुच्यते । वसानां वल्कले शुद्धे विपूयैरिति । क्षामां कृशाम् । क्षायो म इति निष्ठामत्वम् । अञ्जनपिण्डस्येवाभा यस्या अस्तीति ता कृष्णाम् । दण्डिनी गृहीतदण्डाम् । आस्तीर्यत इति आस्तरः । ऋदोरप् । अजिनमास्तर उत्तरासङ्गो यस्यास्तामजिनास्तराम् ॥

**प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियाम् ।**
**अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दिताम् ॥ ६१ ॥**

**प्रगृह्येत्यादि** ॥ अविक्रियामजातविकारां अतएव स्पष्टरूपाम् । एवं च साध्वीं साधुचरिताम् । किमिव प्रगृह्यपदवत् । यस्य पदस्य प्रगृह्यसंज्ञा तत् पदं प्रगृह्यम् । प्रत्यपिभ्यां ग्रहेरित्यनुवृत्तौ पदास्वैरीत्यादिना प्रपूर्वाद्ग्रहेः पदेऽभिधेये क्यप् । यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च । प्लुतप्रगृह्या अचीति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः । कथमजातविक्रियेति चेदाह । अगृह्यां ग्रहेरस्वैरविषये क्यप् । गृह्या अस्वैरिणी अस्वतन्त्रा न भवतीत्यगृह्या । कस्मात् वीतकामत्वात् । वीतरागा हि स्वतन्त्रा भवन्ति । देवगृह्याममरपक्षाम् । पक्षविषये क्यप् । एवं चानिन्दितामगर्हिताम् ॥

**धर्मकृत्यरतां नित्यमवृष्यफलभोजनाम् ।**
**दृष्ट्वाताममुचद्रामो युग्यायात इव श्रमम् ॥ ६२ ॥**

**धर्मकृत्यरतामित्यादि** ॥ पुण्यकर्मरतां नित्यम् । अवृष्यफलभोजनाम् । अवृष्याणीन्द्रियाविकारनिमित्तानि फलानि भोजनं यस्याः विभाषाकृवृषोरिति क्यप् । दृष्ट्वा तां तथाविधाम् । श्रमममुचत् मुक्तवान् । तद्दर्शनाह्लादित त्वात् । युग्यायात इव । वाहनं प्राप्त इव । क्यप् युग्यं च पत्र इति निपातितम् ॥

**स तामूचेऽथ कच्चित्वममावास्यासमन्वये।**
**पितॄणां कुरुषे कार्यमपाक्यैः स्वादुभिः फलैः॥ ६३॥**

**स इत्यादि॥** अथानन्तरं त्यक्तश्रमः स रामः तां शबरीमूचे उक्तवान्। कच्चित्त्वं किं त्वं पितॄणां कुरुषे कार्यम्। क्यबभावपक्षे ऋहलोर्ण्यत्। कदा अमावास्यासमन्वये ऽमावास्यायाः सम्प्राप्तौ अमावास्यायामित्यर्थः। अमावस्यदन्यतरस्यामिति निपातनम्। तत्र हि अमाशब्दे उपपदे वसेर्धातोरमा सह वसतो यस्मिन्काले सूर्याचन्द्रमसौ इति कालेऽधिकरणे ण्यत्। तस्मिन्नन्यतरस्यां वृद्ध्यभावः। कैः फलैः। स्वादुभिः मिष्टैः। अपचनीयैः अनुपहतत्वात्॥ ऋहलोर्ण्यत्॥

**अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः।**
**आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि॥ ६४॥**

**अवश्यपाव्यमित्यादि॥** देवभाक् देवान् भजत इति भजो ण्विः। तद्धविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना। झयो होऽन्यतरस्यामिति हकारस्य पूर्वसवर्णः। पूञ्पवन इति भौवादिकः। कीदृशमवश्यपाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः। ओरावश्यके ण्यत्। मयूरव्यंसकादित्वात्समासः। लुम्पेदवश्यमः कृत्ये तुं काममनसोरपीति मकारलोपः। सोममौषधिविशेषम्। आसाव्यमभिषवार्हं आङ्पूर्वात्सुनोतेरासुयुवपीत्यादिना ण्यत्। अध्वरे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि नमस्करोषि॥

**आचाम्यं सन्ध्ययोः कच्चित् सम्यक्ते न प्रहीयते।**
**कच्चिदग्निमिवानाय्यं काले सम्मन्यसेऽतिथिम्॥ ६५॥**

**आचाम्यमित्यादि॥** प्रभातेऽपराह्णे च सन्ध्ययोर्यदाचाम्यमुपस्पर्शनम्। पूर्ववत् ण्यत्। कच्चित्सम्यक् यथावत्तव तत्र न प्रहीयते न तस्य हतिर्भवति। काले आतिथ्योचिते काले कच्चित् अतिथिं संमन्यसे पूजयसि। अग्निमिवानाय्यम् यथा अग्नि आनाय्यम् दक्षिणाग्नि मन्यसे तद्वत्। आनाय्यो नित्य इति नयतेराङ्पूर्वस्य ण्यदायादेशौ निपात्येते॥

**न प्रणाय्यो जनः कच्चिन्निकाय्यं तेऽधितिष्ठति।**
**देवकार्यविघाताय धर्मद्रोही महोदये॥ ६६॥**

**न प्रणाय्य इत्यादि॥** महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये देवकार्यविघाताय देवकार्य विहनिष्यामीति। भाववचनाच्चेति भविष्यति घञ्। तुमर्थाच्च भाववचनादिति चतुर्थी। प्रणाय्योऽसंमतो जनः। प्रणाय्योऽसंमताविति निपातितम्।

कच्चित् निकाय्यं गृहं ते तव नाधितिष्ठति नाधिवसति । पाय्येत्यादिना निवासे चिनोतेर्निपूर्वात् ण्यदायादेशौ आदेः कुत्वं च । अधिशीङ् स्थासां कर्मेति कर्मसंज्ञा । धर्मद्रोही धर्मद्रोहशील ॥

**कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा ।**
**कथाभी रमसे नित्यमुपचाय्यवतां शुभे ॥ ६७ ॥**

**कुण्डपाय्यवतामित्यादि ॥** कुण्डेन पीयतेऽत्र क्रतौ कुण्डपाय्यः क्रतुः । क्रतौ कुण्डपाय्यसञ्चाय्याविति निपातितम । कच्चित्कथाभीरमसे । ढ्रलोप इति दीर्घः । तथाग्निचित्यावतां आहिताग्निकानां कथाभी रमसे । चित्याग्निचित्येचेति निपात्यते । अग्निचयनमग्निचित्या । भावे क्यप् । तुक् । तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्योऽग्निः । अग्नौ परिचाय्येति निपातितः । उपपूर्वाच्चिनोतेर्ण्यदायादेशौ । तद्वतां कथाभी रमसे शुभे कल्याणि ॥ ॥ इति कृत्याधिकारः ॥

## अथ प्रकीर्णकाः ।

अतःपरं प्रकीर्णका

**वर्धते ते तपो भीरु व्यजेष्ठा विघ्ननायकान् ।**
**अजैषीः कामसंमोहौ संप्राप्था विनयेन वा ॥ ६८ ॥**

**वर्धत इत्यादि ॥** कातरचित्ते तव तपो वर्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् व्यजेष्ठाः जितवत्यसि । लुङि विपराभ्यां जेरित्यात्मनेपदम । कामसंमोहौ कच्चिदजैषीः जितवत्यसि । सिचि वृद्धिः । विनयेन वा संप्राप्थाः संप्राप्तासि । कर्मणि लुङ् । झलो झलीति सिचो लोपः । अत्रानुक्तमपि कच्चिदिति पदमर्थाद्योज्यम ॥

**नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुपः ।**
**यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुपः ॥६९ ॥**

**नायस्यसीत्यादि ॥** तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे । तपश्चरणशीलीभूतेत्यर्थः । कर्मणो रोमन्थेति क्यङ् । तपसः परस्मैपदं च । गुरून आचार्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुपः तोषितवत्यसि । तुपेर्ण्यन्तस्य लुङि रूपम । चङि णिलोपादि । यमान्मृत्योर्नोदविजिष्ठाः नाभैषीः । पुण्यकृतां न मृत्युभयमित्यर्थः । ओविजेरात्मनेपदम । लुङि सिच इट् । विज इट् इति सिचो ङित्त्वे न गुणः । निजायात्मीयाय तपसे । अतुषः तुष्टवत्यसि पुषादित्वादङ् ॥

**अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ ।**
**अर्चयित्वा फलैरर्च्यौ सर्वत्राख्यदनामयम् ॥ ७० ॥**

**अथेत्यादि** ॥ अथानन्तरमसौ शबरी अर्घ्यमर्घार्थम् । पादार्घाभ्यां चेति यत् । मधुपर्काद्यम् । दधिमधुमिश्रमुदकं मधुपर्कः तदाद्यं आदौ भवमाद्यं तदुपनीयादरात् फलैरर्चयित्वा । अर्च्यौ अर्चनार्हौ ण्यत् । रामलक्ष्मणौ सर्वत्रोक्तेषु अनामयं कल्याणं आख्यत्कथितवती । अस्यतीत्यङ् ॥

इति प्रकीर्णकाः

## अतःपरं कृदधिकारः ।

अथ कृदधिकारमाह । कृत्यानां कृदन्तर्भावेऽपि भावकर्मणोः कृत्या इति विशेषप्रतिपादनार्थः पृथगधिकारः । शेषास्तुकृतः कर्तरि भवन्ति तत्रोपपदं सप्तमीस्थमित्येतदधिकृतम् । यत्रैतन्नावतिष्ठते तान् कृतो दर्शयन्नाह ॥

**सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः ।**
**द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७१ ॥**

**सख्यस्येत्यादि** ॥ सा शबरी तिरोऽभवदन्तर्भूता । एवमुक्त्वा किं तदित्याह तव सख्यस्य सखित्वस्य । सख्युर्य. । कर्मषष्ठी । कारकः सुग्रीवः । ण्वुल् तृचाविति ण्वुल् । त्वया सह मैत्रीं करिष्यति । कपिनन्दनः कपीना नन्दयिता । नन्द्यादिभ्यो ल्युः । कृद्योगे षष्ठी । ततो द्रुतं द्रष्टासि मैथिल्याः । पूर्ववत्कर्तरि तृच् कर्मणि षष्ठी । असीति वर्तमाने लट् ॥

**नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम् ।**
**वनानि भेजतुर्वीरौ ततः पाम्पानि राघवौ ॥ ७२ ॥**

**नन्दनानीत्यादि** ॥ तत उक्तादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ । एत्वाभ्यासलोपौ तृफलेत्यादिना । पाम्पानीति पम्पाया अदूरम् । अदूरभवश्चेत्यण् । मुनीन्द्राणां नन्दनानि प्रमोदकारीणि । वनौकसां वनेचराणाम् । उच् समवाये अस्मादौणादिकोऽसुम् । पृषोदरादित्वाद्वर्णविपर्ययः । वनमोको येषां तेषां रमणानि. रतिजनकानि । नन्द्यादित्वात् ल्युः । कर्मणि षष्ठी ॥

**भृङ्गालीकोकिलक्रुङ्भिर्वाशनैः पश्य लक्ष्मण ।**
**रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥ ७३ ॥**

**भृङ्गालीत्यादि** ॥ हे लक्ष्मण पम्पां पश्य । अस्माकं हृदयाविधम् । चेतःपीड-

यन्तीं हृदयं विध्यतीति क्विप् । ग्रहिज्यादिना संप्रसारणम् । नहिवृतीति पूर्वपदस्य दीर्घः । भूषितां काभिः भृङ्गालीभिः भ्रमरपंक्तिभिः । कोकिलैः कुड्भिः क्रौंचैः । वाशनैः कूजद्भिः । रोचनैः शोभनैः । क्रुङ् इति ऋत्विगादिना क्विन् । निपातनसामर्थ्यादनुनासिकलोपाभावः । संयोगान्तस्य लोपः । क्विन्प्रत्ययस्येति कुत्वम् ॥

**परिभावीणि ताराणां पश्य मन्थीनि चेतसाम् ।**
**उद्भासीनि जलेजानि दुन्वन्त्यदयितं जनम् ७४ ॥**

**परिभावीणीत्यादि** ॥ जलेजानि पद्मानि पश्य । तत्पुरुषे कृतीत्यादिनाऽलुक् सप्तम्याः । उद्भासीनि भासमानानि । अतएव ताराणां परिभावीणि तिरस्कर्तॄणि । ततश्चेतसां मन्थीनि पीडाकाराणि । अतो जनमदयितं प्रियारहितं दुन्वन्ति । टुदु उपतापे सौवादिकः । मन्थोद्भासपरिभूभ्यो ग्रहादित्वाणिणिनिः ॥

**सर्वत्र दयिताधीनं सुव्यक्तं रामणीयकम् ।**
**येन जातं प्रियापाये कद्वदं हंसकोकिलम् ॥ ७५ ॥**

**सर्वत्रेत्यादि** ॥ हे लक्ष्मण सर्वत्र यत्किञ्चिद्रामणीयकं रमणीयस्य भावः । योपधाद्वुञ् । तत्सर्वं दयिताधीनं दयितायत्तम् । अषडक्षेत्यादिनाध्युत्तरपदात्खः । सुव्यक्तं स्पष्टम् । कुतः येन प्रियाया अभावे सति हंसकोकिलं हंसाश्च कोकिलाश्चेति शकुनित्वात् द्वन्द्वैकत्वम् । कद्वदं कुत्सितप्रलपितं वदतीति पचाद्यच् । कुत्सितं वदतीति रथवदयोश्चेति कोः कदादेशः । दयितायां सत्या मधुरप्रलापमासीदित्यर्थः ॥

**पक्षिभिर्वितृदैर्यूनां शाखिभिः कुसुमोत्किरैः ।**
**अज्ञो यो यस्य वा नास्ति प्रियो प्रग्लो भवेन्न सः ॥ ७६॥**

**पक्षिभिरित्यादि** ॥ उतृदिर्हिंसानादरयोरित्यस्मादिगुपधलक्षणः कः । यूनां वितृदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च । व्रीह्यादित्वादिनिः । कुसुमोत्किरैः । उत्किरन्ति उत्क्षिपन्तीत्युत्किराः । पूर्ववत्कः । कुसुमानामुत्किराः । कृद्योगलक्षणा षष्ठीं विधाय समासः । तैर्हेतुभूतैः करणभूतैर्वा । स प्रग्लो न भवेत् । प्रकर्षेण ग्लायते प्रग्लः । आतश्चोपसर्गे कः । योऽज्ञः गुणदोषानभिज्ञः । जानातीति ज्ञः पूर्ववत्कः । यस्य वा प्रियो जनो नास्ति तस्य प्रयोजनाभावः सर्वत्र विवेकित्वात् । प्रीणातीति प्रियः । पूर्ववत् कः ॥

**ध्वनीनामुद्धमैरेभिर्मधूनामुद्धयैर्भृशम् ।**
**आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम् ॥ ७७ ॥**

**ध्वनीनामित्यादि** ॥ पतङ्गैर्भ्रमरैर्ग्लपिताः पीडिता वयम् । ग्लास्नावनुवमां चेति मित्त्वात् ह्रस्वः । पतेरङ्गच् पक्षिणीत्यौणादिकः । कीदृशैः ध्वनीनामुद्धमैः ध्वनीन् कुर्वद्भिः । पाघ्राध्मेति धमादेशः । मधूनामुद्धयैः मधूनि पुनः पुनः पिबद्भिः । धेट् पान इत्यस्यायादेशः । आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् जिघ्रद्भिः । पूर्ववज्जिघ्रादेशः । सर्वत्र पाघ्राध्माधेट्दृशः श इति शः । कृद्योगलक्षणा षष्ठी ॥

**धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान् ।**
**शाखिभिर्हा हता भूयो हृदयानामुदेजयैः ॥ ७८ ॥**

**धारयैरित्यादि** ॥ हा कष्टं शाखिभिर्द्रुमैर्भूयोऽत्यर्थं वयं हताः । कीदृशैः हृदयानामुदेजयैः चेतसामुत्कम्पकैः । धारयैःकुसुमोर्मीणां कुसुमनिचयान् धारयद्भिः । जनान् मद्विधान् बाधितुं पीडयितुं पारयद्भिः समर्थैः । धृञ् धारणे पॄ पालनपूरणयोः एजृ कम्पने च एभ्यो णिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादिना शः ॥

**ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।**
**लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥ ७९ ॥**

**ददैरित्यादि** ॥ वातैर्ददैः दुःखस्य दुःखं ददद्भिः । केभ्यो मादृग्भ्यः । अस्मादृशेभ्यो विरहिभ्यः । त्यदादिषु दृशोऽनालोचने कञ्चेति क्विन् । दृग्दृशवतुष्वित्याकारः । धायैरामोदमुत्तमं आमोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्यो दत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः । उत्तममिति क्रियाविशेषणं उत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् कृत्प्रयोगे कर्मषष्ठ्यभावः । लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव । वातैर्हेतुभिः । कोनाम विरहाग्निना यश्चेतयमानः ज्वलन्नग्निरिव न स्यात् किन्तु भवेदेवेति भावः । ददैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे शे प्राप्ते ददातिदधात्योरिति शाणौ भवतः । शे आतो लोपः । णे चातो युक् । लिम्पश्चेतय इति अनुपसर्गादिति शः । ज्वल इति ज्वलितिकसन्तेभ्यो ण इति णस्य विकल्पनात्पचाद्यच् ॥

**अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः ।**
**कुर्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः ॥ ८० ॥**

**अवश्यायेत्यादि** ॥ अवश्यायत इत्यवश्यायः । तस्य कणा बिन्दवः । आस्रवन्तीत्यास्रावाः क्षरन्तः । श्याद्व्यधेति णः कर्तरि । तयोर्विशेषणसमासे राजदन्तादित्वात्परनिपातः । ते कुर्वन्ति चित्तसंस्रावम् । संस्रवतीति संस्रावः । पूर्ववत् णः । चित्तं संस्रावं चलत्कुर्वन्ति इत्यर्थः । पूर्ववत् समासपरनिपातौ । कीदृशाश्चलत्पर्णाग्रसंभृताः सं-

गलिताः । अत एव चारुमुक्ताफलत्विषः दर्शनीयमुक्ताफलानुकारिणः । गीताहारस्थ-मुक्ताफलानि स्मारयन्तीत्यर्थः ॥

**अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम् ।**
**न जीवस्यावहारो मां करोति सुखिनं यमः ॥ ८१ ॥**

**अवसाय इत्यादि** ॥ कदा नु काले अहं दुःखस्यानुभूयमानस्य अवसायोऽन्त-करो भविष्यामि येन जीवस्यावहारोऽवहर्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः । अवस्यति इति अवसायः । षोऽन्तकर्मणि । अवहरतीत्यवहारः । श्याद्व्यधेति स-र्वत्र णः । युक ॥

**दह्येऽहं मधुनो लेहैर्दावैरुग्रैर्यथा गिरिः ।**
**नायः कोऽत्र स येन स्यां बताहं विगतज्वरः ॥ ८२ ॥**

**दह्य इत्यादि** ॥ मधुनो लेहैर्भृङ्गैः अहं दह्ये । श्याद्व्यधेति णः । दावैर्वनाग्निभि-रुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् । अत्र को नाय नयतीति नायः उपायः ईप्सित-प्रापकः । उभयत्र दुन्योर्गिति णः । येन नायेन विगतज्वरः विगतपीडः स्यामिति । आशंसायां लिङ् । बत खेदे ॥

**समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे ।**
**दृष्ट्वा गृहान् स्मरस्येव वनान्तान् मम मानसम् ॥ ८३ ॥**

**समाविष्टमित्यादि** ॥ वनान्तान् वनपर्यन्तान् । स्मरस्य कामस्य गृहमिव । उन्मादकत्वात् । गेहे क इति ग्रहेः कः । अर्धर्चादिपाठात पुल्लिङ्गता । दृष्ट्वा मम स्थि-तस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्तृकत्वम् । मानसं चेतः ग्रहेणांगारकादिना । समाविष्टमिव विगृहीतमिव । विभाषा ग्रह इति णप्रत्यय । अचोऽपवादः । तत्र व्यव-स्थितविभाषाविज्ञानात् जलचरे ग्राहः ज्योतिषि ग्रह इति जलचरे वाच्येऽचोपवादो णः-प्रत्ययः ज्योतिषि वाच्येऽच् प्रत्ययः । ग्राहेणेवात्तमर्णवे । अर्णः पानीयं यत्रास्तीति । के-शाद्वोऽन्यतरस्यामित्यत्रार्णसोलोपश्चेति भूम्नि नित्ययोगेऽतिशायने वा वः सलोपश्च । अर्णवे समुद्रे वर्तमानेन ग्राहेण नक्रादिना आत्तं गृहीतम् । आङ् पूर्वस्य दात्वोऽच उपसर्गात्तः ॥

**वाताहतिचलच्छाखा नर्तका इव शाखिनः ।**
**दुःसहा ही परिक्षिप्ताः क्वणद्भिरलिगाथकैः ॥ ८४ ॥**

**वातेत्यादि** ॥ ही कष्टं एते शाखिनः नर्तका इव । शिल्पिनि ष्वुन् । दुःसहा दुःखेन सह्यन्त इति । ईषदित्यादिना खल् । नर्तकैः साधर्म्यमाह । वाताहतिचलच्छा-

खा वाताहतिभिः चलन्त्यः शाखा बाहुलता इव येषां ते। अलयो भ्रमराः क्वणन्तः। गाथका गायना इव। गस्थकन् तैश्च परिक्षिप्ताः परिवेष्टिता इति ॥

**एकहायनसारङ्गगती रघुकुलोत्तमौ।**
**लवकौ शत्रुशक्तीनामृष्यमूकमगच्छताम् ॥ ८५ ॥**

**एकहायनेत्यादि** ॥ रघुकुलोत्तमौ रामलक्ष्मणौ। ऋष्यमूकमगच्छतां गतवन्तौ। लङि रूपम्। हायनः संवत्सरः स एको यस्य सारङ्गस्य मृगस्य तस्येव गतिर्ययोः शीघ्रगामित्वात्। हश्च व्रीहिकालयोरिति हा धातोर्ण्युट्। आतो युक्। तौ शत्रुशक्तीनां लवकौ अपनेतारौ। प्रुसृल्वः समभिहार इति वुन्। तत्रसमभिहारग्रहणं साधुकारित्वोपलक्षणार्थम् ॥

**तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत् कपिः।**
**बन्धुना विगृहीतोऽहं भूयासं जीवकः कथम् ॥ ८६ ॥**

**तावित्यादि** ॥ तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयन् चिन्तितवान्। प्रणिधीयते नियुज्यते कार्येषु प्रणिधिः। उपसर्गे घोः किः। बन्धुना भ्रात्रा विगृहीतो विरोधितः सन् कथं जीवको भूयासमिति आशंसायां लिङ्। जीवेराशिषि चेति वुन् ॥

इति निरुपपदकृदधिकारः।

इत. प्रभृति तत्रोपपदं सप्तमीस्थमिति अस्योपस्थापनेन कृतो दर्शयन्नाह ॥

**स शत्रुलावौ मन्वानो राघवौ मलयं गिरिम्।**
**जगाम सपरीवारो व्योममायमिवोत्थितम् ॥ ८७ ॥**

**स इत्यादि** ॥ स सुग्रीवः सपरीवारः सपरिकरः। उपसर्गस्य घञीति दीर्घः। कपीनाममनुष्यत्वात्। मलयं गिरिं जगाम। राघवौ शत्रुलावौ शत्रून् लुनातीति कर्मण्यण्। शत्रूणामुन्मूलकाविति मन्वानोऽवगच्छन्। मनु अवबोधन इत्यस्मादात्मनेपदिनस्तनादिभ्य उः। व्योममायमिवोत्थितं व्योम आकाशं मिमीत इति ह्वावामश्चेत्यण्। नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति ॥

**शर्मदं मारुतिं दूतं विषमस्थः कपिद्विपम्।**
**शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः ॥ ८८ ॥**

**शर्मदमित्यादि** ॥ कपिकुञ्जरः सुग्रीवः हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान्। वृन्दारकनागकुञ्जरैरित्यादिना कर्मधारयः सः। वृत्तान्तं ज्ञातुमित्यर्थात्। प्रायुङ्क्त इति

प्रोपाभ्यां युजेरित्यात्मनेपदम् । रुधादित्वात् श्नम् । कपिकुञ्जरः किम्भूतः विषमे दुर्गे-पर्वते तिष्ठतीति विषमस्थः । सुपिस्थ इति कः । मारुतिं कीदृशं शर्म कल्याणं ददातीति शर्मदः । आतोऽनुपसर्गे क इति कः । श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठम् । द्वाभ्यां पिबतीति द्विपः । कपिरयं द्विप इव । उपमितं व्याघ्रेत्यादिना कर्मधारयः । पुनः कीदृशं शोकापनुदं शोकमपनुदति । तुन्दशोकयोरिरिति कः । अव्यग्रं सुचित्तमित्यर्थः ॥

**विश्वासप्रदवेषोऽसौ पथिप्रज्ञः समाहितः ।**
**चित्तसंख्यो जिगीषूणामुत्पपात नभस्तलम् ॥ ८९ ॥**

**विश्वासेत्यादि** ॥ असौ मारुतिर्नभस्तलमुत्पपात । विश्वासं प्रददातीति विश्वासप्रदः । प्रे दाज्ञ इति कः । विश्वासप्रदो वेषो यस्य भिक्षुवेष इत्यर्थः । वेष्यते आत्मानेनेति अकर्तरि च कारके घञ् । विष्लृ व्याप्तावित्यस्य रूपम् । पन्थानं प्रजानातीति पथिप्रज्ञः । समाहितः अभ्रान्तचित्तः इदमादिष्टं इदं च मया तत्र वक्तव्यमिति । जिगीषूणां जेतुमिच्छताम् । चित्तसंख्यः चित्तं संख्याति परिच्छिनत्तीति समिख्य इति कः ॥

**सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः ।**
**ऋष्यमूकमगाद्भृङ्गैः प्रगीतं सामगैरिव ॥ ९० ॥**

**सुरापैरित्यादि** ॥ मारुतिर्ऋष्यमूकमगात् । शाखिभिरुपलक्षितम् । घूर्णद्भिः कम्पमानैः पवनाहतत्वात् । अतएव सुरापैरिव मत्तैरिव । गापोष्टगित्यत्र पिबतेः सुराशीध्वोरिति टक् । प्रगीतं प्रगीयतेऽत्रेति अधिकरणे क्तः । कैर्भृङ्गैः सामगैरिव सामवेदपाठकैरिव । साम गायन्तीति गापोष्टक् ॥

**तं मनोहरमागत्य गिरिं वर्महरौ कपिः ।**
**वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः ॥ ९१ ॥**

**तमित्यादि** ॥ ऋष्यमूकं गिरिमागत्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान् । कीदृशं मनोहरं रम्यत्वात् । मनोहरतीति हरतेरनुद्यमनेऽच् । वर्महरौ कवचं हर्तुं क्षमौ । संभाव्यमानवयसावित्यर्थः । वयसि चेत्यच् । सुखाहरः सुखाहरणशीलः । आङि ताच्छील्य इत्यच् । भिक्षुः परिव्राड्वेषः न कपिरूपः यतो विश्वासप्रदवेष इत्युक्तम् । भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः । भिक्षामर्हतीत्यच् ॥

किमवोचदित्याह ॥

**बलिनावमुमद्रीन्द्रं युवां स्तम्बेरमाविव ।**
**आचक्षाथामिथः कस्माच्छङ्करेणापि दुर्गमम् ॥ ९२ ॥**

**बलिनावित्यादि** ॥ युवां अमुं अद्रीन्द्रम् । कस्मात् कारणादिथः प्राप्तौ । इण् गतावित्यस्माद्वर्तमानसामीप्ये वर्तमानवद्वेति थसि रूपम् । भूते लट् थस् । एतदाचक्षाथां कथयतम् । लोटि रूपम् । बलिनौ बलवन्तौ । यतः शङ्करेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते । काविव स्तम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् । स्तम्बकर्णयोरित्यच् । कर्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् । शङ्कर इति शमि धातोरित्यच् ॥

दुर्गमत्वदर्शनायाह ॥

**व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः ।**
**तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरम् ॥ ९३ ॥**

**व्याप्तमित्यादि** ॥ कीदृशमद्रीन्द्रं क्रव्यमपक्कमांसं भक्षयद्भिः । क्रव्योपपदाददेः क्रव्ये चेति विट् । क्रूरैः हिंसकैः सिंहादिभिः सनिशाचरैः राक्षससहितै र्व्याप्तम् । गुहाशयैः गुहाया शेरते इति शीङोऽधिकरणे शेतेरित्यच् । तुङ्गाः उच्चाः शैलाः शिलायां भवा ये तरवस्तैश्छन्नं व्याप्तम् । अतएव मानुषाणामगोचरं अगम्यम् । गोचरसञ्चरेत्यादिना निपातितः ॥

प्रागुक्तष्टाधिकारः । इत ऊर्ध्वंखशादि प्रत्ययानाह ॥

**सत्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ ।**
**कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ९४ ॥**

**सत्वमित्यादि** ॥ युवामिमान् मार्गानागतौ । सत्वमेजयसिंहाढ्यान् । सत्वमेजयन्ति ये सिंहाः । एजेः खश् । अरुर्द्विषेति मुम् । तैराढ्यान् व्याप्तान् । सिंहग्रहणं तद्वद्धिंस्रोपलक्षणार्थम् । हिनस्तीति सिंहः । पृषोदरादित्वाद्वर्णविपर्ययः । नाडिन्धमानिति उच्चनीचाधिरोहणात् मुहुर्मुहुर्निःश्वासैर्नाडिन्धमन्तीति नाडीमुष्टयोश्चेति खश् । खित्यनव्ययस्येति ह्रस्वः । विषमोपलान् उन्नतपाषाणयुक्तान् । स्तनन्धयसमत्विषौ बालवत्सुकुमारौ । सामर्थ्यं पुनर्युवयोरचिन्त्यम् । स्तनं धयतः पिबतः । नासिकास्तनयोरिति खश् । अरुर्द्विषदिति मुम् ॥

**उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः ।**
**आसादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः ॥ ९५ ॥**

**उत्तीर्णावित्यादि** ॥ कथं वा केनोपायेन युवां सरितो नदीरुत्तीर्णौ । भीमास्त्रासकरीः । यतः कूलमुद्वहाः कूलमापूर्य वहन्त्यः । उदि कूल इति खश् । गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासादितौ न व्यापादितौ इति ब्रूतं कथयतम् ॥

**रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिम् ।**
**ऐव विद्वन् पितुः कामात् पान्तावल्पम्पचान् मुनीन् ॥९६॥**

**राम इत्यादि** ॥ हनुर्वदनैकदेशः सनिंदितोऽस्यास्तीति निन्दायां मतुप् । अन्येषामपि दृश्यत इति दीर्घः । हनूमान् हनुमानपीति विश्वदर्शनात् । तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुद्वयं भग्नमिति श्रूयते । तं रामोऽवोचत् उक्तवान् । तत् किमित्याह हे विद्वन् यदमुं गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात् । आङ् पूर्वादिणो लङि रूपम् । अभ्रंलिहमुच्चैस्तरम् । अभ्रं लेढीति वहाभ्रे लिह इति खश् । किं कुर्वाणौ पान्तौ रक्षन्तौ । मुनीन् अल्पम्पचान् अल्पसन्तुष्टान् । अल्पं पचन्तीति मितनखे चेति मितेत्यर्थग्रहणात् खश् । चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ॥

कः पुनः पिता यदादेशादागताविल्यत आह ॥

**अमितम्पचमीशानं सर्वभोगीणमुत्तमम् ।**
**आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥**

**अमितम्पचमित्यादि** ॥ आवयो पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि । हुझल्भ्यो हेर्धिः । अमितम्पचं महासत्रिणं पूर्ववत् खश् मुम् च । ततो नञ्समासः । ईशानमीशनशीलं स्वामिनमित्यर्थः । ताच्छील्येत्यादिना चानश् । सर्वभोगीणं सर्वसत्वभोगाय हितम् । आत्मन् विश्वजनेति खः । भोगशब्दोऽत्र शरीरवाची । अटकुप्वाङित्यादिना णत्वम् ॥

यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह ॥

**छलेन दयितारण्याद्रक्षसारुन्तुदेन नः ।**
**असूर्यम्पश्यया मूर्त्या हृता तां मृगयावहे ॥ ९८ ॥**

**छलेनेत्यादि** ॥ नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता । कीदृशेन अरुन्तुदेन मर्मस्पृशा । विध्वरुषोस्तुद इति खश् । मुम् । असूर्यम्पश्यया आदित्यगोप्यया मूर्त्या शरीरेणोपलक्षिता । असूर्यललाटयोर्दृशि खश् । तां हृतां मृगयावहे गवेषयावः । मृग अन्वेषणे स्वार्थिकण्यन्तः । युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह छलेन छद्मना ॥

त्वं पुनः कस्य वेत्यत आह ॥

**प्रत्यूचे मारुती राममस्ति वालीति वानरः ।**
**शमयेदपि संग्रामे यो ललाटन्तपं रविम् ॥ ९९ ॥**

**प्रत्यूच इत्यादि** ॥ रामं मारुतिः प्रत्यूचे प्रत्युक्तवान् । अस्ति वालीति नाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्वेषामुपरि वर्तमानं रविं पूर्ववत् खश् । शमयेत् पराजयेदिति सम्भावने लिङ् । वालिशब्दो नान्तः इदन्तश्च तथा च वाली वालिश्च कथ्यते इति शब्दभेदः ॥

**उग्रम्पश्येन सुग्रीवस्तेन भ्रात्रा निराकृतः ।**
**तस्य मित्रीयतो दूतः संप्राप्तोऽस्मि वशंवदः ॥ १०० ॥**

**उग्रम्पश्येनेत्यादि** ॥ तेन भ्रात्रा उग्रम्पश्यता पापं विजानता । उग्रम्पश्ये-त्यादिना निपातितम् । यश्च सुग्रीवो निराकृतोऽभिभूतस्तस्य हि दूतः प्राप्तोऽस्मि । वशंवदः । वशमनुकूलं वदतीति वशंवदः । प्रियवशे वदः खच् । कीदृशस्य मित्रीयतो मित्रमिच्छतः । सुप आत्मनः क्यच् ॥

किन्तेन सख्येति चेदाह ॥

**प्रियंवदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप ।**
**सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपम् ॥ १०१ ॥**

**प्रियंवद इत्यादि** ॥ प्रियंवदतया लोको मिथ्या वदति अहं प्रियंवदोऽपि नैव-मिथ्या ब्रुवे वदामि । पूर्ववत् खच् । परन्तप शत्रूणामुपतापयितः । द्विषत्परयोरिति खच् । तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि । हन्तेर्लुटि रूपम् । कीदृशं द्विषन्तपं शत्रूणामुपतापयितारम् । पूर्ववत् खच् ॥

**वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते ।**
**एहि सर्वसहं मित्रं सुग्रीवं कुरु वानरम् ॥ १०२ ॥**

**वाचंयम इत्यादि** ॥ वाचंयमपुरन्दरौ चेतिमुमागमो निपात्यते । तस्मात् स-त्यमेतत् पूर्वोक्तम् । ब्रवीमि ते तुभ्यम् । तादर्थ्ये चतुर्थी । यत एवं तस्मादेहि आगच्छ । सुग्रीवं वानरं मित्रं कुरु । कीदृशं सर्वसहं सर्वं सहत इति पूःसर्वयोरिति खच् ॥

**सर्वङ्कषयशःशाखं रामकल्पतरुं कपिः ।**
**आदायाभ्रङ्कषं प्रायान्मलयं फलशालिनम् ॥ १०३ ॥**

**सर्वङ्कषेत्यादि** ॥ रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः । कीदृशं रामं सर्वङ्कषयशःशाखं सर्वं कषन्ति व्याप्नुवन्ति यानि यशांसि । सर्वकूले-त्यादिना खच् । तान्येव शाखा यस्य । फलशालिनमभिमतफलसम्पादनात् । अभ्रङ्क-षमुच्चैस्तरं मलयम् । पूर्ववत् खच् ॥

**मेघङ्करमिवायान्तमृतुं रामं क्लमान्वितः ।**
**दृष्ट्वा मेने न सुग्रीवो वालिभानुं भयङ्करम् ॥ १०४ ॥**

**मेघङ्करमित्यादि** ॥ राममायान्तं दृष्ट्वा सुग्रीवो वालिनं भानुमिव भयङ्करं भीति-जनकं न मेने न बुद्धवान् । मेघर्तीत्यादिना खच् । क्लमान्वितो ग्लानो वालिभानुना

गीडितत्वात् । [illegible] रामं मेघङ्करं ऋतुमिव प्रावृट्कालमिव । पूर्ववत् खच् ॥

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ ।
क्षेमङ्कराणि कार्याणि पर्यालोचयतां ततः ॥ १०५ ॥

**उपाग्नीत्यादि** ॥ उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरुतां इत प्रभृत्या-वयोः सख्यमिति । अन्योन्यस्य प्रियङ्करौ । क्षेमप्रियमद्रेऽण्चेति चकारात् खच् । ततः सख्यकरणानन्तरं क्षेमङ्कराणि हितजनकानि यथास्वं कार्याणि प्रत्यालोचयतां नि-रूपितवन्तावित्यर्थः । पटपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि रूपम ॥

आशितम्भवमुत्क्रुष्टं वल्गितं शयितं स्थितम् ।
बह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ॥ १०६ ॥

**आशितम्भवमित्यादि** ॥ आशितम्भवमशनम । आशिते भुव करणभावयो-रिति खच् । उत्क्रुष्टं किलकिलायितम । वल्गितं धावनम । तथा शयितं स्थितं च । कपीनां स्वेच्छया कृतं एतत्काकुत्स्थो बह्वमन्यत श्लाघितवान । पुण्यभाज इमे यदेषां स्वेच्छाविहा-रिणां चेष्टितं अस्माकं तु शोकसन्तप्तानां न किञ्चिदस्तीति । सर्वत्र भावे निष्ठा ॥

ततो बलिन्दमप्रख्यं कपिर्विश्वम्भराधिपम् ।
सुग्रीवः प्राब्रवीद्रामं वालिनो युधि विक्रमम् ॥ १०७ ॥

**तत इत्यादि** ॥ ततः कार्यालोचनानन्तरं सुग्रीवोऽब्रवीत् । लङि ब्रुव ईट् । कि-मुक्तवान् वालिनो युधि विक्रमं शौर्यमिति प्रधानं कर्म राममित्यकथितम । कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यम । बलिं दमयतीति संज्ञायां भृतॄवृजीत्यादिना खच् । अमन्तस्य मित्वह्रस्वत्वे । तथा विश्वं बिभर्तीति विश्वम्भरा तस्या अधिपं अधिपातीत्य-धिपः । आतश्चोपसर्गे इति क ॥

वसुन्धरायां कृत्स्नायां नास्ति वालिसमो बली ।
हृदयङ्गममेतत्त्वा ब्रवीमि न पराभवम् ॥ १०८ ॥

**वसुन्धरायामित्यादि** ॥ वसुन्धरायां पूर्ववत् खच् । वालिना समोऽन्यो बली बलयुक्तो नास्तीति हृदयङ्गमं मम । स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच् । न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥

इति खजधिकारः ।

एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह ॥

दूरगैरन्तगैर्बाणैर्भवानत्यन्तगः श्रियः ।
अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः ॥ १०९ ॥

**दूरगैरित्यादि** ॥ यतो भवान् क्रुद्धः सन् संक्रन्दनस्यापि शक्रस्यापि । नन्द्यादिभ्यो ल्युः । बाणैः करणभूतैः । दूरगैः दूरं गच्छन्तीति । अन्तगैः कार्यसमापकैः । अन्तात्यन्तेत्यादिना डः । श्रियो लक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् । अत्यन्तं पर्यवसानं गच्छतीति । किं पुनर्वालिनो लक्ष्म्या अत्यन्तगो भवान्विनाशयितेति ॥

**वरेण तु मुनेर्वाली सञ्जातो दस्युहो रणे ।**
**अवार्यप्रसरः प्रातरुद्यन्निव तमोऽपहः ॥ ११० ॥**

**वरेणेत्यादि** ॥ मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् वध्यादिति । आशिषि हन इति डः । अतो रणे अवार्यप्रसरोऽनभिभवनीयगतिः सञ्जातः । क इव तमोऽपह इव । तमोऽपहः आदित्यः । तमोऽपहन्तीति । अपे क्लेशतमसोरिति डः । प्रातः प्रभाते उद्यन् उद्गच्छन् । उत्पूर्वादिणः शतरि इणो यण् । अवार्यप्रसरस्तद्वदसावपि । सर्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्यप्रसर एवेति तेन सर्वकाले अस्यावार्यप्रसरत्वं सिद्धं न तु प्रातरेवोद्यन्नवार्यप्रसर इति ॥

**अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते ।**
**चेतो वालिवधं राम क्लेशापहमुपस्थितम् ॥ १११ ॥**

**अतीत्यादि** ॥ हे राम मदीयं चेतो वालिवधं कर्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति । यस्मात् कातरं व्याकुलम् । वालिनोऽतिबलयुक्तत्वात् । कीदृशं वधं क्लेशापहम् । दुःखस्योन्मूलकम् । पूर्ववड्डः । अतिप्रियत्वाद्वालिवधस्य । यस्य हि यत्प्रियं तत्सिद्धमपि असौ न प्रत्येति ॥

इति डाधिकारः ।

उपस्थितोऽस्य वध इति कथं ज्ञायत इत्याह ॥

**शीर्षघातिनमायातमरीणां त्वां विलोकयन् ।**
**पतिघ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियम् ॥ ११२ ॥**

**शीर्षेत्यादि** ॥ अरीणां शीर्षघातिनम् । कुमारशीर्षयोर्णिनिः । निपातनात् शिरसः शीर्षभावः । आयातं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये । पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः । अमनुष्यकर्तृके चेति टक् । गमहनेत्युपधालोपः । हो हन्तेरिति कुत्वम् ॥

**शत्रुघ्नान् युधि हस्तिघ्नो गिरीन् क्षिप्यन्नकृत्रिमान् ।**
**शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान् ॥ ११३ ॥**

**शत्रुघ्नानित्यादि** ॥ किञ्च युधि संग्रामे वाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा तां च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः। क्षय्यजय्यौ शक्यार्थ इत्ययादेशनिपातनम्। कीदृश अभ्युपायवान् युद्धोपाययुक्तः। किं कुर्वन् क्रुद्धः क्षिप्यन् गिरीन्। दिवादित्वाच्छ्यन्। अकृत्रिमान् देवनिर्मितान्। शत्रुघ्नान् शत्रून् घ्नन्तीति अमनुष्येति टक्। हस्तिघ्न इव हस्तिघ्नः। हन्तुं शक्तः। शक्तौ हस्तिकपाटयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात्। वाली चामनुष्यः। शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन्। सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया। पाणिघैः पाणिवादकैः। तेहि हस्तियुद्धेऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिप्यन्ति। पाणिघताडघौ शिल्पिनीति कर्तरि निपातनम् ॥

**आढ्यङ्करणविक्रान्तो महिषस्य सुरद्विषः।**
**प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधम् ॥ ११४ ॥**

**आढ्यमित्यादि** ॥ अनाढ्यमाढ्यं करोत्यनेनेति। आढ्यसुभगेत्यादिना करणे ख्युन्। आढ्यङ्करणं विक्रान्तं यस्य वालिनः। अनाढ्यः सन् विक्रान्तेनाढ्यो भूत इत्यर्थः। महिषस्य सुरद्विषो दुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कृच्छ्रसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरम्। अप्रियं प्रियङ्करोत्यनेनेति पूर्ववत् ख्युन् ॥

**प्रियम्भावुकतां यातस्तं क्षिपन् योजनं मृतम्।**
**स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्रोऽप्यबाधयन् ॥ ११५ ॥**

**प्रियमित्यादि** ॥ तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं क्षिपन् प्रेरयन्। क्षिपेस्तौदादिकस्योभयपदिनो रूपम्। प्रियम्भावुकता यातस्तथा स्वर्गे प्रियम्भविष्णुश्चासीत्। कर्तरि भुव इत्यनेनाढ्यादिषूपपदेषु खिष्णुच्खुकञौ। शक्रोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात्। अबाधयन् अपीडयन्। बध संयम इति चौरादिकः तस्य शतरि रूपम् ॥ स ईदृशस्त्वया शक्यो जेतुं यदि त्वदस्त्राणां सामर्थ्यं दृष्टमित्यभिप्रायेणाब्रवीत् सुग्रीवः ॥

रामोऽपि तदभिप्रायं विदन् यत् कृतवान् तदाह ॥

**जिज्ञासोः शक्तिमस्त्राणां रामो न्यूनधियः कपेः।**
**अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११६ ॥**

**जिज्ञासोरित्यादि** ॥ अस्त्राणां शराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः। यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छ-

तीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः। स्पृशोऽनुदके क्विन् ॥

**ततो वालिपशौ वध्ये रामर्त्विग्जितसाध्वसः।**
**अभ्यभून्निलयं भ्रातुः सुग्रीवो निनदन् दधृक् ॥ ११७ ॥**

**तत इत्यादि** ॥ ततस्तरुभेदादनन्तरं सुग्रीवो भ्रातुर्निलयमभ्यभूत् अभिभूतवान्। कीदृशः दधृक् धृष्टः। ऋत्विगित्यादिना निपातितम। धृषे क्विन्। द्विर्वचनम्। क्विन् प्रत्ययस्य कुरिति कुत्वं खकारः चर्त्वे ककारः। यस्माद्वालिनि पशाविव वध्ये वधार्हे। रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः। तस्माद्दधृक्। ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋतुपूर्वाद्यजेः क्विन्। यजादित्वात् सम्प्रसारणम्। इदमृत्विक्शब्दनिर्वचनम्। रूढितस्तु याजयितृषु ब्राह्मणेषु। क्विन् प्रत्ययस्य कुः। निनदन् किलकिलाशब्दं कुर्वन् ॥

**गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन्।**
**भ्रातरं युङ् भियः संख्ये घोषेणापूरयन्दिशः ॥ ११८ ॥**

**गुहाया इत्यादि** ॥ तस्य शब्दमाकर्ण्य गुहाया निरगाद्वाली निर्गतः। इणो गा लुङि। गातिस्थेति सिचो लुक्। भ्रातरं द्युवन् अभिगच्छन्। द्यु अभिगमने अस्यादादिकस्य वर्तमानसामीप्ये लटः शतरि उवङादेशे रूपम। संख्ये युद्धे। भियो युङ् भीतेर्योक्ता कर्मणि षष्ठी। भीति युञ्जन्नित्यर्थः। युजेः पूर्ववत् क्विन्। युजेरसमास इति नुम्। संयोगान्तलोपः। क्विन् प्रत्ययस्य कुः। ङकारः। कः कमिव। सिंहो मृगमिव द्युवन्। घोषेण दिशः आपूरयन्। दिशन्ति ता इति दिशः पूर्ववत् क्विन् ॥

**व्यायच्छमानयोर्मूढो भेदे सदृशयोस्तयोः।**
**बाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः ॥ ११९ ॥**

**व्यायच्छेत्यादि** ॥ तयोर्वालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढो भ्रान्तः सन् इक्ष्वाकुकुलनन्दनो रामो बाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान्। समुदाङ्भ्यो यमो ग्रन्थ इति तङ् न भवति। अकर्त्रभिप्रायत्वात्। तत्र कर्त्रभिप्राय इति वर्तते। आङो यमहन इत्यनेनापि न स्यात्। सकर्मकत्वात् तत्राकर्मकादिति वर्तते। समानपूर्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ्। दृग्दृशवतुष्विति समानस्य सभावः ॥

**ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृग् द्रुतम्।**
**किष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥ १२० ॥**

**ऋष्यमूकमित्यादि** ॥ कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना किं किं दधातीति किष्किन्धा गुहा । आतोऽनुपसर्गे कः । पारस्करादिदर्शनात् पूर्वस्य सुडागमो मलोपः षत्वं च निपात्यते । तदुपलक्षितोऽद्रिः किष्किन्धाद्रिः । तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् । तेनात्यर्थं निष्पिष्टः पीडितः । निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं मृगसदृक् द्रुतमगात् । समानोपपदात् दृशेः पूर्ववत् क्विन् । कोष्णमीषदुष्णमुच्छ्वसन् । कवं चोष्ण इति चकारात् कोः कादेशः ॥

**कृत्वा वालिद्रुहं रामो मालया सविशेषणम् ।**
**अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे ॥ १२१ ॥**

**कृत्वेत्यादि** ॥ वालिद्रुहं सुग्रीवम् । वालिनं द्रुह्यतीति सत्स्वित्यादिना क्विप् । मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनम् । अङ्गदं सूत इति पूर्ववत् क्विन् । ओः सुपीति यणादेशः । तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् । ह्वयतेर्हेतुमण्णिचि शाच्छेत्यादिना युक् ॥

**तयोर्वानरसेनान्योः संप्रहारे तनुच्छिदम् ।**
**वालिनो दूरभाग्रामो बाणं प्राणादमत्यजत् ॥ १२२ ॥**

**तयोरित्यादि** ॥ वानरसेनान्योः वानरस्वामिनोः । एरनेकाचः इति यण् । संप्रहारे युद्धे प्रवृत्ते रामो बाणमत्यजत् । वालिनस्तनुच्छिदं तनुं शरीरं छिनत्तीति पूर्ववत् क्विप् । छे चेति तुक् । प्राणादं प्राणापहारिणम् । प्राणानत्तीति प्राणादम् । अदोऽनन्न इति विट् । दूरभाक् दूरमवस्थितो रामो दूरं भजत इति भजो ण्वि ॥

**वालिनं पतितं दृष्ट्वा वानरा रिपुघातिनम् ।**
**बान्धवाक्रोशिनो भेजुरनाथाः ककुभो दश ॥ १२३ ॥**

**वालिनमित्यादि** ॥ रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्यजातौ णिनिः । तं वालिनं पतितं दृष्ट्वा वानरा दश ककुभो दश दिशो भेजुः । अनाथाः सन्तः स्वामिनो हतत्वात् । बान्धवक्रोशिनो बान्धवा इव क्रोशन्तीति कर्तर्युपमान इति णिनिः ॥

**धिग्दाशरथिमित्यूचुर्मुनयो वनवर्तिनः ।**
**उपेयुर्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२४ ॥**

**धिगित्यादि** ॥ येषां सत्यन्यस्थाने वृत्तौ च वन एव वर्तितुं शास्त्रतो नियमः ते वनवर्तिनो मुनयः । व्रत इति णिनिः । धिगिमं दाशरथिमित्यूचुः उक्तवन्तः । येनानपराधेऽपि वालिनीदृशं कृतमिति । कपिस्त्रियश्च वालिनमुपेयुः मधुपा-

यिन्यः आभीक्ष्ण्येन मधु पिबन्त्यः । बहुलमाभीक्ष्ण्ये इति णिनिः । क्रोशन्त्यो हा नाथेति रुदन्त्यः ॥

**राममुच्चैरुपालब्ध शूरमानी कपिप्रभुः ।**
**व्रणवेदनया ग्लायन् साधुंमन्यमसाधुवत् ॥ १२५ ॥**

**राममित्यादि** ॥ कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालब्ध उपालब्धवान् । लभिरात्मनेपद्यनिट् । तस्य लुङि झलो झलीति सिचो लोपः । झषस्तथोर्धोऽधः । झलाञ्जश् झशि । शूरमानी शूरमात्मानं मन्यमानः । आत्ममाने खश्चेति चकाराण्णिनिः । व्रणवेदनया ग्लायन् । ग्लानिमुपगच्छन् । साधुम्मन्यं साधुमात्मानं मन्यमानं रामम् । तेनैव खश् । तस्मिन् सार्वधातुके परतो दिवादित्वात् श्यन् । पूर्वपदस्य मुम् । असाधुवदसाधुमिव । असाधुना तुल्यं वर्तते इति वतिः ॥

**मृषासि त्वं हविर्याजी राघव छद्मतापसः ।**
**अन्यव्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः ॥ १२६ ॥**

**मृषेत्यादि** ॥ हे राघव त्वं छद्मना तापसः स त्वं मृषैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न लोकप्राप्तय इत्यभिप्रायः । करणे यज इति भूते णिनिः। **इतः प्रभृति भूत इत्यधिक्रियते** । यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हतवन्त इति ब्रह्मेत्यादिना क्विप् । तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् । कर्मणि हन इति णिनिः । तत्र कुत्सितग्रहणं कर्तव्यमित्युक्तम् । यदि सुग्रीवेण मम विरोधः किं तवायातमिति कुत्सितहननम् ॥

तदेव दर्शयन्नाह ॥

**पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।**
**मामपापं दुराचार किं निहत्याभिधास्यसि ॥ १२७ ॥**

**पापकृदित्यादि** ॥ हे दुराचार । मामपापं निहत्य पापकृत् कृतकिल्बिषः राज्ञो दशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि । किं क्षेपे । न किञ्चिदभिधातव्यमस्तीति भावः । सर्वत्र सुकर्मपापेत्यादिना क्विप् ॥

**अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु ।**
**अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता ॥ १२८ ॥**

**अग्निचिदित्यादि** ॥ कस्मात्त्वया पिता नापेक्षितः नानुवृत्तः । येनैवं कृतवानसीति । कीदृशः अग्निचित् आहिताग्निः । अग्निं चितवानिति अग्नौ चेरिति क्विप् ।

सोमसुत् सोमं सुतवान् सोमयाजी । सोमे सुञ इति क्विप् । अनलेषु अग्निषु इ-ष्टवान् । रथचक्रचिदादिषु रथचक्रवच्चीयत इति कर्मण्यग्न्याख्यायामिति क्विप् । आदिशब्दाच्छ्येनचिदादिग्रहणम् । अग्न्यर्थो हि तदाकार इष्टकाचय इत्युच्यते तद्द्वारे-णाग्निरपि ॥

**मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम् ।**
**मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १२९ ॥**

**मांसेत्यादि** ॥ मांसविक्रयिणः कुत्सितकर्मकारिणो व्याधस्यापि विगर्हितं निन्दितम् । कर्मणीनिविक्रिय इति इनि । तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तम् । निकृष्टकर्मकरणे-नेति यद्भवता पापदृश्वना पापं दृष्टवना । दृशेः क्वनिप् । न संयोगाद्वमन्तादिति अ-ल्लोपप्रतिषेधः । कर्म अकारि कृतम् । कर्मणि लुङ् । निःशङ्कं शङ्कां त्यक्त्वा । किं कुर्वता मां घ्नता मारयता । हन्तेः शतरि गमहनेत्युपधालोपः । हो हन्तेरिति कुत्वम् ॥

**बुद्धिपूर्वं ध्रुवन्न त्वा राजकृत्वा पिता खलम् ।**
**सह युध्वानमन्येन योऽहिनो मामनागसम् ॥ १३० ॥**

**बुद्धिपूर्वमित्यादि** ॥ खलपिता त्वा खलं असाधुचरितं ध्रुवन गच्छन ध्रु गतिस्थै-र्ययोरिति तुदादौ पठ्यते । तस्य गतौ ज्ञानार्थे वर्तमानस्य शतरि विकरणलोपे उवङादेशे रूपम् । यत्र राजकृत्वा । कस्य तवेत्यर्थात् । राजनि युधि कृञ इति क्वनिप् । तत्तस्य बुद्धिपूर्वम् ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्मणि षष्ठ्या भवितव्यम् । यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तम् । सहे चेति क्वनिप् । अहिन हिंसितवान् । हिंसेर्लङि मध्यमपुरुषैकवचने श्नमि श्नान्नलोपे हल्-ङ्याब्भ्यादिलोपे रुत्वे च रूपम् ॥

मांसार्थं हत इति चेदाह ॥

**पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः ।**
**कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः ॥ १३१ ॥**

**पञ्चपञ्चेत्यादि** ॥ हे कौशल्याज कौशल्याजात । सप्तम्यां जनेर्डः । ये पञ्च प-ञ्चनखाः । शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चम इति । कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः । द्विजैर्द्विजातैः । अन्येष्वपि दृश्यत इति डः । सप्तम्यामित्युपलक्षणम् असप्तम्यामपि दृश्यते । भक्ष्याः भक्षणीया प्रोक्ताः । तेषामहमेकोऽपि न भविता अहं कपिः । तत्किमिति हतोऽहं त्वयेति ॥

**कथं दुष्टुः स्वयं धर्मे प्रजास्त्वं पालयिष्यसि ।**
**आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथंन वा ॥ १३२ ॥**

**कथमित्यादि** ॥ स्वयमात्मना धर्मे दुष्टुः दुःस्थः सन् । अपदुःसुषुस्थ इत्यौणादिकः कुप्रत्ययः । कथं प्रजाः पालयिष्यसि नैवेति भावः । उपसर्गे च संज्ञायामिति जनेर्डः । कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः । आत्मानमनुजात इत्यनौ कर्मणि इति डः । न जिह्रेषि न लज्जसे ॥

**मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे ।**
**लक्ष्मणाधिज दुर्वृत्त प्रयुक्तमनुजेन नः ॥ १३३ ॥**

**मन्य इत्यादि** ॥ किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये । पञ्चम्यामजाताविति डः । घ्नन्तं मारयन्तम् । अक्षत्रियजे रणे क्षत्रियादजाते । हे लक्ष्मणाधिज लक्ष्मणाग्रज दुर्वृत्त नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तम् प्रेरितम् । तत्र पंचम्या मजाताविल्युक्तं जातावपि दृश्यते अक्षत्रियज इति । उपसर्गे च संज्ञायामित्युक्तं असंज्ञायामपि दृश्यते । लक्ष्मणाधिज इति अनौ कर्मणीत्युक्तं अकर्मण्यपि दृश्यते । अनुज इति सर्वत्रान्येष्वपि दृश्यत इति डः ॥ इत्युपपदाधिकारः ॥

**प्रत्यूचे वालिनं रामो नाकृतं कृतवानहम् ।**
**यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर ॥ १३४ ॥**

**प्रत्यूच इत्यादि** ॥ रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् । किमित्याह । हे कपीश्वर पूर्वैर्जरद्भिर्वृद्धैः । जीर्यतेरतृन् । यज्वभिः याज्ञिकैः । सुत्वभिः सोमयाजिभिः । सुयजोर्ङ्वनिप् । नाकृतं कृतवानहं अपि तु कृतमेव कृतवानहम् । निष्ठेति भूते क्तक्तवतू ॥

**ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम् ।**
**ऊषुषां परदारैश्च सार्धं निधनमैषिषुः ॥ १३५ ॥**

**त इत्यादि** ॥ यस्मात्ते पूर्ववृद्धाः जालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणाम् । तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् । आमि अच इत्यल्लोपः । तेषां निधनं विनाशमैषिषुः इष्टवन्तः । इषेर्लुङि रूपम् । कीदृशाम् । उपसेदुषां समीपमुपगतवतां तेषां समीपवर्तिनामुपद्रवकारित्वात् । भाषायामिति क्वसुः । परदारैश्च सार्धमूषुषां उषितवताम् । पूर्ववत्क्वसुः । वसेर्यजादित्वात्संप्रसारणम् ॥

**अहं तु शुश्रुवान् भ्राता स्त्रियं भुक्तां कनीयसा ।**
**उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ॥ १३६ ॥**

**अहमित्यादि** ॥ हे लतामृग हे शाखामृग । अहं पुनः शुश्रुवान् श्रुतवान् । पूर्ववत्क्वसुः । यदुत भ्रात्रा कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततो मे नैव दोषः । उपेयिवाननूचान इति उपेयिवानित्यादिना निपातितौ ॥

**अन्वनैषीत्ततो वाली त्रपावानिव राघवम् ।**
**न्यक्षिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियम् ॥ १३७ ॥**

**अन्वित्यादि** ॥ ततो रामवचनादनन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् । देव क्षम्यतां यदजानता मयोक्तमिति । नयतेर्लुङित्यनेन भूतसामान्ये लुङ् । त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत् । अङ्गदं च प्रियं तनयं काकुत्स्थे रामे न्यक्षिपत् न्यस्तवान् । यत्नादादरात् । क्षिपेरनद्यतने लङ् । लकारप्रत्ययस्यातिङीति प्रतिषेधान्न कृत्संज्ञा ॥

**म्रियमाणः स सुग्रीवं प्रोचे सद्भावमागतः ।**
**सम्भविष्याव एकस्यामभिजानासि मातरि ॥ १३८ ॥**

**म्रियमाण इत्यादि** ॥ स वाली म्रियमाणः सन् सद्भावं शोभनभावमागतः सन् सुग्रीवं प्रोचे । किमित्याह । अभिजानासि स्मरसि । एकस्यां मातरि सम्भविष्यावः । समभवाव इत्यस्मिन्नर्थे अभिज्ञावचने लृडित्यनद्यतने लृट् । अभिजानासीत्यभिज्ञावचनस्योपपदत्वात् ॥

**अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च ।**
**अभिजानीहि तत्सर्वं बन्धूनां समयो ह्ययम् ॥ १३६ ॥**

**अवसावेत्यादि** ॥ अभिजानीहि स्मर । यन्नगेन्द्रेषु अवसाव उषितवन्तौ । अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात् नयदीत्यनेन लृटि प्रतिषिद्धे लङेव भवति । अत्र वासमात्रं स्मर्यते । मधूनि च यत्पास्यावः तत्र पीतवन्तौ । तत्सर्वमभिजानीहि । अत्र विभाषा साकांक्ष इति पक्षे लृट् । साकांक्षता च प्रयोक्तुर्लक्ष्यलक्षणयोः सम्बन्धे । तत्र वासो लक्षणं पानं च लक्ष्यमिति । यस्माद्बन्धूनामयमेष समयः कालः ॥

**दैवं न विदधे नूनं युगपत्सुखमावयोः ।**
**शश्वद्बभूव तद्दुःस्थं यतो न इति हाकरोत् ॥ १४० ॥**

**दैवमित्यादि** ॥ नूनमवश्यं दैवमावयोः सुखं युगपदेककालं न विदधे न हि विहितवत् । परोक्षे लिट् । ञित्वात्तङ् । आतो लोपः । यतो यस्मात्तत् दैवं शश्वत् नित्यं

दुःस्थमननुकूलं नोऽस्माकं बभूव तस्मादितिह एवमकरोत् । इइत्येवं कृतवान् । यद्युगपदावयोः सुखविधानं तद्दुःस्थं शश्वद्बभूव । हाकरोदिति भूतानद्यतनपरोक्षे लिटि प्राप्ते हशश्वतोर्लङ् चेति लङ् । चकरात् लिट् । तत्र शश्वच्छब्दे उपपदे लिडेवोदाहृतः न लङ् । हशब्दे लङेव न लिडपीति ॥

**ददौ स दयितां भ्रात्रे मालाञ्चाग्र्यां हिरण्मयीम् ।**

**राज्यं सन्दिश्य भोगांश्च ममार व्रणपीडितः ॥ १४१ ॥**

**ददावित्यादि** ॥ स वाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय ददौ मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटिताम । राज्यं सामात्यादिद्रव्यप्रकृतिम् । सन्दिश्य दत्त्वा । भोगांश्च राज्याङ्गानि । ममार व्रणपीडित॰ । तत्रापि परोक्षे लिट् ॥

**तस्य निर्वर्त्य कर्तव्यं सुग्रीवो राघवाज्ञया ।**

**किष्किन्धाद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम् ॥ १४२ ॥**

**तस्येत्यादि** ॥ तस्य मृतस्य कर्तव्यं पिण्डोदकादिकरणीयं कृत्वा सुग्रीवो राघवाज्ञया 'गच्छ वर्षासमयमतीत्य शरदागमिष्यसीति' आज्ञया किष्किन्धाद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् । अत्रापि परोक्षे लिट् ॥

**नामग्राहं कपिभिरशनैः स्तूयमानः समन्ता-**

**दन्वग्भावं रघुवृषभयोर्वानरेन्द्रो विराजन् ॥**

**अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं**

**किष्किन्धाद्रिं न्यविशत मधुक्षीबगुञ्जद्विरेफम् ॥ १४३॥**

**इति भट्टिकाव्ये वालिवधो नामाधिकारकाण्डे षष्ठः सर्गः ॥ ६॥**

**नामेत्यादि** ॥ वानरेन्द्रः सुग्रीवः किष्किन्धाद्रिं न्यविशत निविष्टवान् । नेर्विश इति तङ् । अशनै॰ सुष्ठु । कपिभिः स्तूयमानः । वर्तमाने लट् । तस्य कर्मणि विहितत्वात् । लक्षणहेत्वोः क्रियाया इति शानच् । नामग्राहं नाम गृहीत्वा । नाम्न्या दिशिग्रहोरिति णमुल् । समन्तात्सर्वतः । विराजन् शोभमानः । अत्र परस्मैपदसंज्ञकः शतृप्रत्ययः । किं कृत्वा रघुवृषभयोरन्वग्भावं अनुकूलो भूत्वा । अन्वक्पूर्वाद्भवतेरन्वच्यानुलोम्य इति णमुल् । तदनुकूलवर्तित्वाद्विराजन् । कदा न्यविशत । अभ्यर्णे निकटे । अम्भःपतनसमये प्रावृषीत्यर्थः । पर्णलीभूतसानुं पर्णानि सन्ति येषामिति सिध्मादिपाठाल्लच् । तदन्तादभूततद्भावे च्विः । पर्णलीभूताः सानव एकदेशा यस्याद्रेः । मधुक्षीबा मधुमत्ता गुञ्जन्तो द्विरेफा यत्र । क्षीब इत्यत्रानुपसर्गात् फुल्लक्षीबकृशोल्लाघा इति निपातितः ।

क्षीबृ मद इत्यस्मात् क्तप्रत्ययस्य लोप· इडभावश्च निपात्यते । गुञ्जेर्लट् । क्वचित् प्रथमासमानाधिकरणेऽपि शतृप्रत्ययः ॥ इति सोपपदकृतः ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे प्रथम· परिच्छेद. ॥
काव्यस्य सुग्रीवाभिषेको नाम षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।



इतस्ताच्छीलिकं कृतमधिकृत्योच्यते । ताच्छीलिकमित्युपलक्षणम् । तद्धर्मतत्साधुकारिष्वपि द्रष्टव्यम् । यत आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्विति तत्राधिक्रियते ॥

**ततः कर्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः ॥**
**नभः पूरयितारश्च समुन्नेमुः पयोधराः ॥ १ ॥**

**तत इत्यादि** ॥ तत प्रवेशानन्तरं वर्षाप्रभञ्जनः प्रावृड्वातो ववौ वातिस्म । वागतिगन्धनयोरिति । कर्ता वनाकम्पं साधु कुर्वन । तृन्निति तृन् । न लोकेति षष्ठीप्रतिषेध । पयोधरा मेघाश्च समुन्नेमुः समुन्नताः । कीदृशा नभः पूरयितारः । तृन् ॥

**तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः ॥**
**रोचिष्णवः सविस्फूर्जा मुमुचुर्भिन्नवद्धनाः ॥ २ ॥**

**तर्पणमित्यादि** ॥ घना अमलं पयो मुमुचुः । भिन्नवत् भिन्ना इव । कीदृशं पयः । तर्पणं शस्यानां तर्पणं तर्पयतीति कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । प्रजनिष्णूनां साधु प्रादुर्भवताम् । रोचिष्णव. साधु दीप्यमानाः । सविस्फूर्जाः सवज्रनिस्वानाः । अलंकृञित्यादिना इष्णुच् ॥

**निराकरिष्णवो भानुं दिवं वर्तिष्णवोऽभितः ॥**
**अलङ्करिष्णवो भान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥**

**निरेत्यादि** ॥ भानुं निराकरिष्णवो निराकरणशीला घनाः पयो मुमुचुरिति योज्यम् । दिवमभितो वर्तिष्णव आकाशमभितो वर्तनस्वभावाः । पूर्वपश्चिमयोर्वर्तनहेतुत्वात् । पर्यभिभ्यां सर्वोभयार्थे तसिः । अभितः परित इति द्वितीया । तडित्वन्तः सविद्यतः । अतएव भान्तो दीप्यमानाः । एवं च कृत्वा अलङ्करिष्णवोऽलङ्करणशीला इव । दिशश्चरिष्णवः इतस्ततो गमनशीलाः । पूर्ववदिष्णुच् ॥

**तान् विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत् ।**
**वसन् माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत् ॥ ४॥**

**तानित्यादि** ॥ तान् घनान्विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति पर्वते वसन्विललाप । उन्मदिष्णुवत् उन्मदनशीलः उन्मत्तस्तद्वत् । पूर्ववदिष्णुच् । ग्लास्नुः ग्लानशीलः । जिष्णुर्जयशीलः । अधृष्णुवदप्रगल्भ इव । शोकाभिभूतत्वात् । ग्लाजिस्थश्चग्स्नुः । धृष्णुरिति त्रसिगृधीत्यादिना क्नुः ।

किं तद्विलपनमित्याह ॥

**भ्रमी कदम्बसम्भिन्नः पवनः शमिनामपि ।**
**क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥**

**भ्रमीत्यादि** ॥ भ्रमी भ्रमणशीलः । कदम्बसम्भिन्नः कदम्बगन्धसंश्लिष्टः । शमिनामपि शमनशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते । शमित्यष्टाभ्यो घिनुण् । नोदात्तोपदेशेत्यादिना उपधावृद्धिप्रतिषेधः ॥

**संज्वारिणेव मनसा ध्वान्तमायासिना मया ।**
**द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहम् ॥ ६ ॥**

**संज्वारिणेत्यादि** ॥ मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यत इति । मनसा करणभूतेन । कीदृशेन संज्वारिणेव रोगशीलेनेव । आयासिना आयासशीलेन मयेति । द्रोहि अपकारशीलम् । ध्वान्तं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलम् । नयनामोषि चक्षुर्मोषणशीलम् । संपृचानुरुधेत्यादिना सर्वे विनुणन्ताः ॥

**कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ।**
**अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः ॥ ७ ॥**

**कुर्वन्तीत्यादि** ॥ एता विद्युतः परिदेविनं परिदेवनशीलं कुर्वन्ति मामित्यर्थात् । कीदृशः परिसारिण्यः परिसरणशीलाः । चातकैः पक्षिविशेषैः परिराटिभिः परिरटनशीलैः । एवञ्चाभ्याघातिभिः अभिहननशीलैः । दुःखोत्पादनात् । आमिश्रा युक्ता विद्युतः । पूर्ववद्विनुण् ॥

**संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः ।**
**सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥**

**संसर्गीत्यादि** ॥ संसर्गी संसर्जनशीलः । शीतोऽपि शीकरो बिन्दुः । परिदाहीव

परिदहनशील इवाभाति । शिखिनश्च मयूरा. सोढुमशक्याः । आक्रीडिनो नर्तनशीलाः । परिवादिन· परिवदनशीला इव । इवशब्दश्चात्र लुप्तो द्रष्टव्यः । पूर्ववद्धिनुण् ॥

**एता दैवानुरोधिन्यो द्वेषिण्य इव रागिणम् ।**

**पीडयन्ति जनं धाराः पतन्त्योऽनपकारिणम् ॥ ९ ॥**

**एता इत्यादि** ॥ एता धारा. पतन्त्यो द्वेषिण्य इव द्वेषणशीला इव जनं रागिणं रागशीलम् । अनपकारिणमनपराधशीलं पीडयन्ति । दैवानुरोधिन्य. भाग्यानुरोधात् प्रवर्तनशीलाः । पूर्ववत् घिनुण् । घिनुणि च रञ्जेरुपसंख्यानमित्यनुनासिकलोपः । कृताननुनासिकनिर्देशाद्वा लोपनिपातनम् ॥

**कुर्याद्योगिनमप्येष स्फूर्जावान् परिमोहिनम् ।**

**त्यागिनं सुखदुःखस्य परिक्षेप्यम्भसामृतुः ॥ १० ॥**

**कुर्यादित्यादि** ॥ एष ऋतुरम्भसां जलानां परिक्षेपी परित्यजनशील· । कर्मणि षष्ठी । योगिनमपि योगशीलमपि । सुखदु खस्य त्यागिनं त्यागशीलम् । कर्मणि षष्ठी । परिमोहिनं परिमोहनशीलम् । कुर्यात् । कीदृश स्फूर्जावान वज्रनिर्घोषयुक्तः । पूर्ववद्धिनुण् ॥

**विकत्थी याचते प्रत्तमविश्रम्भी मुहुर्जलम् ।**

**पर्जन्यश्चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥**

**विकत्थीत्यादि** ॥ चातको मानसं निकृन्तन्निव खण्डयन्निव । प्रत्तं प्रदत्तम् । अच उपसर्गात्त. । जलं याचत इति प्रधानं कर्म । पर्जन्यमित्यकथितम् । विकत्थी विकत्थनशील इव पर्जन्योऽपि मह्यं जलं ददाति । इवशब्दो लुप्तोऽत्र द्रष्टव्य. । अविस्रम्भी अविश्वासशीलः । मानसखण्डनात् । वौकषलसेति घिनुण् ॥

**प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलाषिणः ।**

**प्रमाथिनो वियुक्तानां हिंसकाः पापदर्दुराः ॥ १२ ॥**

**प्रलापिन इत्यादि** ॥ एते पापदर्दुरा. पापाश्च ते दर्दुराश्चेत्याक्रोशाभिधानम् । कदा नु अपलाषिणो भविष्यन्ति । अपलषणशीलाः व्यपगतकामा इत्यर्थ. । लष कान्तौ । अपे च-लष इति घिनुण् । प्रलापिनः प्रलपनशीलाः । प्रमाथिन· प्रमथनशीलाः । चेतसामित्यर्थात् । प्रे लपेत्यादिना घिनुण् । अतएव वियुक्तानां मादृशां हिंसकाः हिसनशीलाः । इत्येवं विललाप निन्दहिंसेत्यादिना वुञ् ॥

**निन्दको रजनिम्मन्यं दिवसं क्लेशको निशाम् ।**
**प्रावृष्यनैषीत् काकुत्स्थः कथञ्चित्परिदेवकः ॥ १३ ॥**

**निन्दक इत्यादि** ॥ काकुत्स्थो दिवसं रजनिम्मन्यं रजनीमात्मानं मन्यमानं घनान्धकारित्वात् । आत्ममाने खश्च खित्यनव्ययस्येति ह्रस्वत्वम् । निशां च प्रावृषि कथमप्यनैषीत् नीतवान् । निन्दकः निन्दनशील. । नक्तन्दिनस्येत्यर्थात् । क्लेशकः क्लेशनशीलः। परिदेवकः परिदेवनशीलः । आत्मनः इत्यर्थात् ॥

**अथोपशरदेऽपश्यत् क्रौञ्चानां चेष्टनैः कुलैः ।**
**उत्कण्ठावर्धनैः शुभ्रं रवणैरम्बरं ततम् ॥ १४ ॥**

**अथेत्यादि** ॥ अथानन्तरमुपशरदे शरत्समीपे इति । अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तष्टच् । तृतीयासप्तम्योर्बहुलमित्यमभावः । क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान् । चेष्टनैः व्यापारशीलैः । रवणैः शब्दनशीलैः । अनयोश्चलनशब्दार्थत्वात् चलनशब्देत्यादिना युच् । उत्कण्ठावर्धनै । उत्कण्ठावर्धनशीलैः । अनुदात्तेतश्चेति युच् । क्रौञ्च इति क्विन्प्रत्ययान्तत्वात् प्रज्ञादित्वादण् ॥

**विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत् ।**
**पश्य दन्द्रमणान् हंसानरविन्दसमुत्सुकान् ॥ १५ ॥**

**विलोक्येत्यादि** ॥ चन्द्रं विलोक्य द्योतनं साधु द्योतमानम् । अनुदात्तेतश्चेति युच् । शोचन. शोचनशीलः । जुचङ्क्रम्येत्यादिना युच् । रामो लक्ष्मणमवदत् । पश्य हंसान् दन्द्रमणान् शनैर्द्रमणशीलान् । द्रमेर्नित्यं कौटिल्य एव भवति नतु क्रियासमभिहार इत्युक्तम । तदन्ताद्युच् । अतो लोपः । यस्य हल. । अरविन्दसमुत्सुकान् । प्रसितेति सप्तमी विधाय सप्तमीति योगविभागत् सः ॥

**कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्धनः ।**
**कुर्वन्ति कोपनं तारा मण्डना गगनस्य माम् ॥ १६ ॥**

**कपिरित्यादि** ॥ नासौ कपि सुग्रीवोऽद्यापि चङ्क्रमण॰ शनैर्गमनशीलो न भवति यतो गर्धनोऽभिलाषशील॰ । स्त्रीष्वित्यर्थात् । पूर्ववद्युच् । ताराश्च मां कोपनं कोपनशीलं तद्विषय एव कुर्वन्ति । कीदृश्यः गगनस्य मण्डना भूषणाः । क्रुधमण्डार्थेभ्यश्चेति युच् ॥

**नावैत्याप्यायितारं किं कमलानि रविं कपिः ।**
**दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयम् ॥ १७ ॥**

**नावैतीत्यादि** ॥ किमसौ कपि: रवि नावैति नावगच्छति । कमलान्याप्यायितारं साधु वर्धयन्तम् । अनुदात्तेतश्चेति प्राप्ते नय इति प्रतिषिद्धे तृन्नेव भवति । ततश्च न लोकेति षष्ठीप्रतिषेध: । दिनारम्भे दीपितारं साधु दीप्यमानम् । पूर्ववद्युचि प्राप्ते सूद-दीपदीक्षेति प्रतिषेध । निरस्तध्वान्तसञ्चयं अपनीतान्धकारसंहतिकं किमसौ शरत्समयं नावैतीत्यर्थ: ॥

**अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे ।**
**गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम् ॥ १८ ॥**

**अतीतेत्यादि** ॥ वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशील शरदि नागतत्वात् प्रमत्त सन् सुग्रीवो वालिना गतं अध्वानं प्राप्तमार्गं ध्रुवमवश्यं गामुकः साधु गन्ता । लषपतेत्युकञ् । न लोकेति षष्ठीप्रतिषेध: ॥

**जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया ।**
**गत्वा लक्ष्मण वक्तव्यो जयिना निष्ठुरं वचः ॥ १९ ॥**

**जल्पाकीभिरित्यादि** ॥ हे लक्ष्मण त्वया प्रजविना प्रकृष्टगमनशीलेन । प्रजोरिनिः । जयिना अभिभवनशीलेन । जिदृक्षीत्यादिना इनिः । सुग्रीवो निष्ठुरं वचो-भिधातव्यः । जल्पाकीभि. जल्पनशीलाभिः स्त्रीभिः सहासीन: । जल्पभिक्षेति षाकन् । षित्वात् ङीष् । तन्मध्ये हि परुषमभिधीयमान: परिभवं मन्यत इति भाव: ॥

**शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी ।**
**न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिम् ॥ २० ॥**

**शैल इत्यादि** ॥ कपि क्षिप्रं गत्वा ब्रूहि इत्यकथितं कर्म । न्याय्यं वच इति प्र-धानं कर्म । अस्य चातिस्पष्टार्थत्वादिद तदिति न सन्दिष्टम । अनादरिणमनादरशीलं कपि कालातिक्रमणात् । आङ् पूर्वो दृङ् । अतएव पापं दुराचारम । अव्यथिनं नि र्भयशीलम् । नञ्पूर्वो व्यथि । शैले विश्रयिणं तत्र स्थितिशीलम् । विपूर्वं श्रयति । त्वं चाभ्यमी अभिमुखगमनशील । अभिपूर्वोऽमगत्यादिषु । परिभवी साधु परिभवं जनयन् । परिपूर्वो भवतिः । अत्र सर्वत्र जिदृक्षीत्यादिना इनिः ॥

**स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत् ।**
**श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतम् ॥ २१ ॥**

**स्पृहयालुमित्यादि** ॥ स्त्रीभ्यः स्पृहयालुं कपि साधु स्पृहयन्तम् । स्पृहि: स्वार्थिक-ण्यन्तोऽदन्तश्च । अयामन्तेत्ययादेशः । स्पृहेरीप्सित इति सम्प्रदानसंज्ञा । द्रुतं वद

ब्रूहि। अदयालुवत् अदयनशील इव। निद्रालुं निद्राशीलं अस्मत्कार्येष्वनवधानत्वात् शयनीय एव सर्वदा स्थितत्वात् स्त्रीभिः सह। श्रद्धालुं साध्वभिलषन्तम्। किं भ्रामरं भ्रमरैः कृतम्। क्षुद्राभ्रमरेत्यादिना अञ्। मध्वित्यर्थात्। न लोकेति षष्ठीप्रतिषेधः। स्पृहिगृहीत्यादिना आलुच्। श्रद्धालुत्वादेव धारुं साधु पिबन्तं भ्रामरमेव। सद्रुं साधु सीदन्तम्। क्व अद्रौ। दाधेट्सिशदसदो रु ॥

**सृमरो भङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः।**
**विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान् कपीन् ॥ २२ ॥**

**सृमर इत्यादि** ॥ लक्ष्मणः कपीन् प्राप। कीदृशः सृमरः साधु गन्ता। सृघस्यदः क्मरच्। भङ्गुरा ये स्वयमेव भज्यन्ते। भञ्जभासेति घुरच्। तान् प्रजानातीति भङ्गुरप्रज्ञः। प्रे दाज्ञ इति कः। विदुरः साधु वेदी। विदिभिदिच्छिदेः कुरच्। जित्वरः साधु जयशीलः। इणनशजीत्यादिना क्वरप्। गृहीत्वा धनुर्भासुरं भासनशीलम्। गत्वरान् गमनशीलान् कपीन् अस्थिरप्रकृतीनित्यर्थः। गत्वरश्चेति निपातितम्। गमेः क्वरप्यनुनासिकलोपः ॥

**तं जागरूकः कार्येषु दन्दशूकरिपुं कपिः।**
**अकम्प्रं मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहाम् ॥ २३ ॥**

**तमित्यादि** ॥ तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत्। विशेर्हेतुमण्ण्यन्तात् लङि रूपम्। कार्येषु कृत्येषु जागरूकः सावधानः। जागुरूक इति जागर्तेरूकः। दन्दशूकरिपुं हिंस्रारिम्। यजजपेत्यादिना दंशेर्यङन्तादूकः। लुपसदेत्यादिना यङ्। दीप्रं साधु दीप्यमानम्। अकम्प्रं अकम्पनशीलं अभीरुमित्यर्थः। नम्रः साधु प्रह्वीभूतः। सर्वत्र नमिकम्पीत्यादिना रः ॥

**कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः।**
**इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावदन्नृपम् ॥ २४ ॥**

**कम्राभिरित्यादि** ॥ सुग्रीवः प्रावदत् नृपं लक्ष्मणम्। स्त्रीभिरावृतः परिवृतः सन् प्रणमन् ताभिः सहेत्यर्थः। कम्राभिः कमनशीलाभिः। पूर्ववद्रः। आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः। सनाशंसभिक्ष उः। न लोकेति षष्ठीप्रतिषेधः। इच्छुः प्रसादं प्रसादयिषणशीलः। अपि मे स्वामी प्रसन्नः स्यादिति। विन्दुरिच्छुरिति निपातनम् ॥

**अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह।**
**अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वरः ॥ २५ ॥**

**अहमित्यादि** ॥ अहं तव प्रसादेन इह गुहायामवसं उषितवान् स्वप्नक् निद्रालु. चिन्ताभावात् । स्वपितृषोर्नजिङ् । वन्दारुभिर्वन्दनशीलाभि सह । शृवन्द्योरारु: । अभीरु अभयशील: । भिय: क्रुक्लुकनौ । भास्वराभि: भासनशीलाभि । ईश्वर इशनशील । स्थेशभासेति वरच् ॥

**विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनम् ।**
**रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥**

**विद्युदित्यादि** ॥ रामप्रत्तेषु रामदत्तेषु भोगेषु रत: सक्त । नाहमज्ञासिषं नाहं ज्ञातवान् । लुङि यमरमेत्यादिना सगिटौ । विद्युन्नाशं द्योतनशीला विद्युत: तासां नाशम् । रवेर्भास भासनशीला दीप्ति । विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रम । प्रावृडतिक्रान्ता शरदायातेति नाज्ञासिषमित्यर्थ । सर्वत्र भ्राजभासेति क्विप् ॥

**एष शोकच्छिदो वीरान् प्रभो सम्प्रति वानरान् ।**
**धराशैलसमुद्राणामन्तगान् प्रहिणोम्यहम् ॥ २७ ॥**

इति ताच्छीलिका: समाप्ता ।

**एष इत्यादि** ॥ हे प्रभो । एषोऽहं सम्प्रति वानरान् प्रहिणोमि प्रस्थापयामि । कीदृशान् शोकच्छिद शोकापनोदनशीलान् । अन्येभ्योऽपि दृश्यत इति क्विप । वीरान् शूरान् । धराशैलसमुद्राणां अन्तं गच्छन्ति ये तानन्तगान् । अन्तात्यन्तेति डः । धरा पृथ्वी धरासमुद्रशैलानामिति पाठान्तरम । अत्र बह्वच्वनियम इति पूर्वनिपात. । यथा वीणाशङ्खदुन्दुभय. ॥ इति ताच्छीलिककृत ॥

## अथ निरधिकारकृत् ।

इतो विशेषाधिकाराभावात् निर्विशेषकृतो दर्शयन्नाह ॥

**राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः ।**
**सर्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥**

**राघवस्येत्यादि** ॥ ततोऽभिधानानन्तरं वानरपुङ्गव सुग्रीव सर्ववानरसेनानामाशु शीघ्रमागमनमादिशत् आदिष्टवान । पुमाश्चासौ गौश्चेति । गोरतद्धितलुकीति समासान्तष्टच् । व्युत्पत्तिमात्रमेतत् । पुङ्गवशब्दस्तु प्रधानमाचष्टे । कारुः करोतीति उणादयो बहुलमिति औणादिकः । कृवापाजीत्यादिना उण् । एवमाशु । कस्य कर्तेत्याह । राघवस्य कार्यम् ॥

**वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः ।**
**कारका मित्रकार्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥**

**वयमित्यादि** ॥ आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्तवान् । वयमद्यैव गच्छाम इति । रामं द्रष्टुं रामं द्रक्ष्याम इति । त्वरान्विता. त्वरिता इत्यर्थः । कीदृशा वयं सीतालाभाय सीतां प्राप्स्याम इति । कारका मित्रकार्याणि रावणवधादेः कार्यस्य कर्तारो भविष्याम इति । गच्छाम इति क्रिया । तस्यां क्रियायां क्रियार्थायामुपपदे तुमुन्ण्वुलौ भविष्यति काले स्याताम् । मित्रकार्याणीति । अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधे द्वितीयैव स्यात् । सीतालाभायेति भाववचनाच्चेति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ् । तुमर्थाच्च भाववचनादिति चतुर्थी ॥

**ततःकपीनां सङ्घाता हर्षाद्राघवभूतये ।**
**पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥**

**तत इत्यादि** ॥ आदेशादनन्तरं कपीनां संघाताः समाजग्मुः । हर्षात् हर्षेण । आदेशादानमेव हर्षहेतुः । राघवभूतये कापि नाम राघवस्य संपत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थायामुपपदे भाववचनाच्चेति भविष्यति क्तिन् । चतुर्थी च पूर्ववत् । पूरयन्तो व्याप्नुवन्तः । दश दिशः । भयदाया. भयं दास्याम इत्यस्यां क्रियायामुपपदे अण् कर्मणि चेत्यण् । आतो युक् ॥

**सुग्रीवान्तिकमासेदुः सादयिष्याम इत्यरिम् ।**
**करिष्यन्त इवाकस्माद्भुवनं निर्दशाननम् ॥ ३१ ॥**

**सुग्रीवेत्यादि** ॥ अरिं शत्रुं सादयिष्यामो व्यापादयिष्याम इति सुग्रीवान्तिकमासेदुः आगताः । लृट् शेषे चेति चकारात् क्रियार्थायामुपपदे भविष्यति लृट् । आसेदुरिति क्रिया क्रियार्था । अकस्मादतर्कितं भुवनत्रयं निर्दशाननं रावणरहितं करिष्यन्त इव तथाविधमहासंरम्भदर्शनादुत्प्रेक्ष्यते । लृट् शेषे चेति लृट् । अत्र क्रियायाः क्रियार्थाया अन्यः शुद्धो भविष्यत्कालः शेषः ।

**कर्तास्मि कार्यमायातैरेभिरित्यवगम्य सः ।**
**काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥**

**कर्तास्मीत्यादि** ॥ एभिरायातैर्वानरैः कार्यं सीतान्वेषणादि कर्तास्मि करिष्यामीति अवगम्य । अनद्यतने भविष्यति लुट् । सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् ।

पद्यन्त इति पादाः । पदरुजेति कर्तरि घञ् । तत्र भविष्यतीति निवृत्तम् । पादैः पिबतीति पादपो वृक्षः । आतोऽनुपसर्गे कः । काकुत्स्थः पादप इव समाश्रयणीयत्वात् । तस्य छायां शीतस्पर्शाम् । अनुद्वेजनकरीम् । स्पृश्यत इति स्पर्शस्तन्मात्र उच्यते । अकर्तरि चेति घञ् । ननु पदरुजेत्यादिना तत्र हि स्पृश उपताप इति वक्तव्यमित्युक्तं स्पृशतीति स्पर्श उपतापः ॥

**कार्यं सारनिभं दृष्ट्वा वानराणां समागमम् ।**
**अवैन्नाशं दशास्यस्य निर्वृत्तमिव राघवः ॥ ३३ ॥**

इति निरधिकारकृत् ।

**कार्यमित्यादि** ॥ राघवो वानराणां समागमं दृष्ट्वा कार्यं सारनिभं सीतालाभतुल्यम् । सरति कालान्तरे तिष्ठतीति कर्तरि कारके सृ स्थिर इति घञ् । दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान् । अवपूर्वादिणो लङि रूपम् ॥ इति निरधिकारा कृतः ॥

अतःपरं भावे कर्तरि च कारक इत्यधिकृत्य कृदुच्यते ॥

**ततः कपिसमाहारमेकनिश्चायमागतम् ।**
**उपाध्याय इवायामं सुग्रीवोऽध्यापिपद्दिशाम् ॥ ३४ ॥**

**तत इत्यादि** ॥ कपिसमागमनानन्तरं सुग्रीवः कपिसमाहारं कपिसमूहं दिशामायाममध्यापिपत् बोधितवान् । अमुका अमुका दिक् ईदृशीति । गतिबुद्धीत्यादिना समाहारस्य कर्मसंज्ञा । आयामपरिज्ञानं चास्य वालिभयाद्दूरपरिभ्रमणात् । एकनिश्चायमागतं एकराशितां प्राप्तं आयाममित्यर्थः । निश्चायमिति परिमाणाख्यायामिति घञ् । पश्चादेकशब्देन पूर्वकालैकेति सः । क इव उपाध्याय इति उपेत्याधीयते अस्मादिति इङश्चेति घञ् ॥

**सजलाम्भोदसंरावं हनुमन्तं सहाङ्गदम् ।**
**जाम्बवं नीलसहितं चारुसन्द्रावमब्रवीत् ॥ ३५ ॥**

**सजलेत्यादि** ॥ सुग्रीवो हनुमन्तमब्रवीत् । सजलाम्भोदसंरावं सजलमेघस्येव संरावो यस्य हनुमतः । उपसर्गे रुव इति घञ् । सहाङ्गदं अङ्गदसहितम् । तथा जाम्बवं ऋक्षाधिपतिं नीलसहितमब्रवीत् । जाम्बवशब्दोऽकारान्तो द्रष्टव्यः । चारुसन्द्रावं चारुगतिम् । समि युद्रुदुव इति घञ् ॥

यात यूयं यमश्रायं दिशं नायेन दक्षिणाम् ।
विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥ ३६ ॥

**यातेत्यादि** ॥ यूयं यात गच्छत । यमश्रायं यमस्थानम् । श्रयत्येनमिति श्रिणीभुवोऽनुपसर्ग इति घञ् कर्मणि । कां दक्षिणां दिशम् । सामान्याभिधानाद्विशेषाभिधानम् । नायेन नीत्या सामादिना । नीयतेऽनेनेति पूर्ववत्करणे घञ् । महोदधेस्तोयविश्रावं तोयध्वनि तर्जयन्तो न्यक्कुर्वाणा. । कैः विक्षावैः स्वैः शब्दैः । उभयत्रापि वौ क्षुश्रुव इति कर्मणि घञ् ॥

उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् ।
वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ ३७ ॥

**उन्नायानित्यादि** ॥ वसुधाभृतां पर्वतानां उन्नायानुच्चयानुच्चत्वान्यधिगच्छन्त. जानन्तः ।अवोदोर्नियः इति भावे घञ् । कैः प्रद्रावैः प्रकृष्टगतिभि. । प्रे द्रुस्तुस्रुव इति घञ् । वनाभिलावान् वनविध्वंसान् । निरभ्योः पूल्वोरिति भावे घञ् । स्वेच्छया कुर्वन्तः । चारुविक्रमाः असाधारणपराक्रमाः । यात यूयमिति सम्बन्धः। ॥

सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ ३८ ॥

**सदेत्यादि** ॥ सदा सर्वदा उद्गारे भक्षणानन्तरं श्वसनपूर्वके शब्दोच्चारणे यानि सुगन्धीनि तेषामलं पर्याप्तमाशिताः तृप्ता. । गॄ शब्द इत्यस्मादुत्पूर्वादुन्योर्ग्र इति घञ् । आङ्पूर्वादश्नातेरादिकर्मणि क्त. । कर्तरि चेति कर्तरिक्त । कृत्प्रयोगे कर्मणि षष्ठी नलोकेति निषिद्धातः शेषे षष्ठी ।उत्कारेषु च राशिषु धान्यानाम् । कॄ विक्षेप इत्यस्मादुत्पर्वात् कॄ धान्य इति कर्मणि घञ् । अनभीष्टपरिग्रहा अनभिलाषुका इत्यर्थः ॥

संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे ।
शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ ३९ ॥

**संस्तावमित्यादि** ॥ मधुलेहानां भ्रमराणां पुष्पप्रस्तारशायिनाम् । प्रे स्त्रोऽयज्ञ इति घञ् ।शिञ्जितं शब्दं शृण्वत. यूयं यात । छन्दोगानां महाध्वरे संस्तावमिव सम्भूय स्तवनमिव पाठध्वनिविशेषमिव वा । यज्ञे समि स्तुव इति घञ् ॥

आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः ।
स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम् ॥ ४० ॥

**आलोचयन्त इत्यादि** ॥ दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णताम् । विपूर्वात् स्तृणातेः प्रथने वावशब्द इति घञ् । आलोचयन्तो निरूपयन्त. । इयानस्य विस्तार इति। फलरसमास्वादयन्त. । मुष्टिसंग्राहपीडितम् । मुष्टेः संग्राहेण हस्तेन पीडितम । ग्रहेः समिमुष्टाविति घञ् । भावे मुष्टिविषये व्युत्पादितत्वात् । मुष्टिग्रहणमभिव्यक्त्यर्थं ज्ञातव्यम् ॥

**न्याय्यं यद्यत्र तत्कार्यं पर्यायेणाविरोधिभिः ।**
**निशोपशायः कर्तव्यः फलोच्चायश्च संहतैः ॥ ४१ ॥**

**न्याय्यमित्यादि** ॥ यदत्र न्यायादनपेतं तत्कार्यमविरोधिभिर्युष्माभि. । परिन्योर्नीणोरिति घञ् । पदार्थानामनपचारेणेत्यर्थ. । व्युपयोः शेते पर्याय इति घञ् । पर्यायेण परिपाट्या । परावनुपात्यय इण इति भावे घञ् । अनुपात्यय. पर्याय. । निशोपशायः कर्तव्य । युष्माभिर्निशायामुपशय पर्यायशयनं कर्तव्यम । व्युपयो. शेतेः पर्याय इति घञ् । फलोच्चायश्च संहतै युष्माभि कर्तव्यः । हस्तादान इति घञ् । हस्तादानं चादेयस्य प्रत्यासत्ति ॥

**सीता रक्षोनिकायेषु स्तोककायैश्छलेन च ।**
**मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः ॥ ४२ ॥**

**सीतेत्यादि** ॥ छलेन युष्माभि. सीता मृग्या । रक्षोनिकायेषु निवासेषु । निवसन्त्यस्मिन्निति अधिकरणे निवासचितीत्यादिना घञ् आदेश्च ककारः । स्तोककायैर्युष्माभिः । चिन्वन्त्यस्माच्छुभमिति काय । शरीरे घञ् । शत्रुनिकायानां अरिसमूहानाम् । निचीयत इति निकायः । संघे चानौत्तराधर्ये इति कर्मणि घञ् आदेश्च ककार । तेषां सम्बन्धिनी व्यावहासी परस्परहसनम । अनाश्रितै व्यवपूर्वाद्धस कर्मव्यतीहारे णचः स्त्रियामिति स्त्रीलिङ्गे भावे णचं विधाय णच स्त्रियामञ् । न कर्मव्यतीहार इति वृद्धिप्रतिषेध ॥

**सांराविणं न कर्तव्यं यावन्नायाति दर्शनम् ।**
**संदृष्टायां तु वैदेह्यां निग्राहो वोऽर्थवानरेः ॥ ४३ ॥**

**सांराविणमित्यादि** ॥ सांरावणमभिव्याप्त्या भाषणं न कर्तव्यं युष्माभिः यावन्नायाति दर्शनं सीतेत्यर्थात् । संपूर्वाद्रौतेरभिविधौ भाव इनुण् तदन्तादणिनुण इत्यण् । तस्मिन्निनण्यनपत्य इति प्रकृतिभाव. । यस्मात्संदृष्टायां चैतस्यां वैदेह्यां अरेर्निग्राह. आक्रोशोऽभिभवलक्षणः वो युष्माकमर्थवान् । आक्रोशेऽवन्योर्ग्रह इति भावे घञ् ॥

**प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः ।**
**ज्ञातव्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवागमम् ॥ ४४ ॥**

**प्रग्राहैरित्यादि** ॥ पात्राणा भिक्षाभाजनानां प्रग्राहैरिव कृतैरन्वेष्या मैथिली भिक्षुकवेषैरिव युष्माभिरित्यर्थः । ग्रहेः प्रे लिप्सायामिति भावे घञ् । कर्मणि षष्ठी । इङ्गितैर्धर्म्यैः चेष्टितैः कुलाङ्गनोचितैः ज्ञातव्या सा ध्यायन्ती रामागमम् । कुलाङ्गना हि प्रोषितभर्तृका सर्वदा भर्तुरागमनं ध्यायति ॥

**वेदिवत् सपरिग्राहा यज्ञियैः संस्कृता द्विजैः ।**
**दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत् ॥ ४५ ॥**

**वेदिवदित्यादि** ॥ यथा यज्ञियैर्यज्ञकर्माहैर्द्विजैः ब्राह्मणैः । वेदिः यज्ञस्थली । सपरिग्राहा परिगृहीता संस्कृता तथा साऽपि अतिपवित्रत्वात् । ग्रहेः परौ यज्ञ इति यज्ञविषये घञ् । मासतमादह्नः प्राग्दृश्या दर्शनार्हा । मासस्य पूरणं यदहः । नित्यं शतादिमासेत्यादिना तमडागमः । अस्मादेव निपातनात् मासस्यासंख्यावाचित्वे डट् । मासतमेऽह्नीति हेतुं दर्शयन्नाह । तस्याः पूतत्वात्तद्वदनिन्दितवेशभृत् मैथिली मङ्गलमात्राभरणा दर्शनार्हा तां द्रष्टुं भवतां न चिरकालो भवतीति मासावधिना प्रेषिताः ॥

**नीवारफलमूलाशानृषीनप्यतिशेरते ।**
**यस्या गुणा निरुद्गावास्तां द्रुतं यात पश्यत ॥ ४६ ॥**

**नीवारेत्यादि** ॥ यस्या गुणा ब्रह्मचर्यादय ऋषीनप्यतिशेरते न्यक्कुर्वते तां द्रुतं यात पश्यत । तत्र नीवारः अकृष्टपच्यधान्यम् । नौ वृधान्य इति घञ् । उपसर्गस्य घञीति दीर्घत्वम् । फलं मोचादि । मूलं शालूकादि । एतान्यश्नन्ति ये ऋषय । कीदृशा गुणाः निरुद्गावाः स्थिरा । उदि श्रयतीति घञ् ॥

**उच्छ्रायवान् घनारावो वानरं जलदारवम् ।**
**दूराप्लावं हनूमन्तं रामः प्रोचे गजाप्लवः ॥ ४७ ॥**

**उच्छ्रायवानित्यादि** ॥ रामो हनूमन्तं प्रोचे । कीदृशः उच्छ्रायवानुन्नतियुक्तः । पूर्ववद्घञ् । घनस्येवारावो यस्य । विभाषाङिरुप्लुवोरिति भावे घञ् । गजाप्लवः गजगमनः । पक्षे पूर्ववदप् । कीदृशं दूराप्लावं दूरमाप्लाव उद्गमनं यस्य पूर्ववत् घञ् ॥

**अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः ।**
**प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥**

**अवग्राह इत्यादि** ॥ अवग्रहो वर्षप्रतिबन्धः । अवे ग्रह इति पक्षे अप् । यथा अवग्रहे कृषीवला वृष्टिं प्रार्थयन्ते तथा सीतां यूयं प्रार्थयध्वम् । तस्या दुर्लभत्वादत्यन्तादरणीयत्वाच्च । यात सुग्रीवशासनात् ॥

**वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये ।**
**देशापेक्षास्तथा यूयं यातादायाङ्गुलीयकम् ॥ ४९ ॥**

**वणिगित्यादि** ॥ तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः । प्रे वणिजामिति करणे घञ् । स तुलासम्बन्धी विद्यते यस्य वणिजः । संसर्गे मतुप् । यथा तुलाप्रग्राहवान् तदुपलक्षितो वणिक्काले उचिते क्रयसिद्धये चरति तथा यूयं अङ्गुलीयकं तुलासूत्रस्थानीयं चिह्नमादाय देशापेक्षाः तत्तद्देशस्थितास्तत्र हि चिह्नेन रामदूता इति लक्ष्यन्ते ॥

**अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलम् ।**
**वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव ॥ ५० ॥**

**अभिज्ञानमित्यादि** ॥ ते वानरा नभस्तलमुत्पेतुः । वाजिन इव विमुक्तप्रग्रहाः । विमुक्तः प्रग्रहो नियमरज्जुर्येषामिति । रश्मौ चेति विभाषा ग्रहणमनुवर्तते । घञभावपक्षे ग्रहवृदृनिश्चिगमश्चेत्यप् । स्यन्दने रथे भानोरादित्यस्य । किं कृत्वा अभिज्ञानं गृहीत्वा चिह्नमङ्गुलीयकमादाय ॥

**उदक् शतवलिं कोट्या सुषेणं पश्चिमां तथा ।**
**दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ ५१ ॥**

**उदगित्यादि** ॥ वानराणां राजा सुग्रीवः शतवलिं नाम वानरं वानराणां कोट्या सह उदगुदीचीं दिशं प्रास्थापयत् । तिष्ठतेर्ण्यन्तस्य लङि रूपम् । उदीचीशब्दात् प्रथमान्ताद्दिशि वर्तमानादस्ताति. । तस्याञ्चतेर्लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । तस्मिन्निवृत्तौ भसंज्ञाभावादीत्वमपि निवर्तते । तसिलादिस्तद्धित एधाच् पर्यन्त इत्यव्ययत्वे द्वितीयालुक् । तथैव सुषेणं वानरं पश्चिमां दिशं प्रास्थापयत् । कृतत्वरः त्वरितः ॥

**प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ ।**
**अप्रग्राहैरिवादित्यो वाजिभिर्दूरपातिभिः ॥ ५२ ॥**

**प्राचीमित्यादि** ॥ कपिभिस्तावद्भिरित्येककोटिसंघातैः सह विनतः प्रणतः सुग्रीव इत्यर्थात् । अव्यग्रः अनाकुलः । प्राचीं पूर्वां दिशं ययौ । यथा आदित्यो वाजिभिरप्रग्राहैः मुक्तबन्धनैः करणभूतैः । रश्मौ चेति घञ् । दूरयायिभिः ॥

**ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव ।**
**प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ ५३ ॥**

**ययुरित्यादि** ॥ मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्यपर्वतं ययुः । शरन्मेघैः प्रावारैरिव प्रच्छन्नम् । वृणोतेराच्छादन इति घञ् । प्रवरैः श्रेष्ठैः । अनाच्छादने ग्रहेत्यादिना अप् ॥

**परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्धसु ।**
**विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥**

**परीत्यादि** ॥ मृगेद्राणां सिंहानां परिभावमभिभवं कुर्वन्तः । विन्ध्ये चेरुः भ्रान्ताः । परौ भुवोऽवज्ञान इति घञ् । कीदृशे परिभवोपमे आदित्यमार्गस्य परिभवनम् । अत्युच्चत्वात् । घञभावपक्षे अप् ॥

**भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान् नदान् ।**
**आशंसवो लवं शत्रोः सीतायाश्च विनिश्चयम् ॥ ५५ ॥**

**भ्रेमुरित्यादि** ॥ उत्पूर्वाच्चिनोतेः एरजित्यच् । शिलाभिरुच्चयो येषां तान् शिलोच्चयान् । भ्रेमुः भ्रमणक्रियाया व्याप्यत्वात् सकर्मकता । नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः । शत्रोर्लवमुच्छेदनम् । सीतायाश्च विनिश्चयं विनिर्णयम् । आशंसवः आशंसनशीलाः । सनाशंसभिक्ष उः । तरलवौ ऋदोरबिति अप्प्रत्ययान्तौ विनिश्चय इति ग्रहेत्यप् ॥

**आदरेण गमं चक्रुर्विषमेष्वप्यसङ्घसाः ।**
**व्याप्नुवन्तो दिशोऽन्यादान् कुर्वन्तः सव्यधान् हरीन् ॥ ५६ ॥**

**आदरेणेत्यादि** ॥ विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः । आदरेणानवज्ञया । ग्रहेत्यप् । असंघसाः त्यक्ताहाराः । उपसर्गेऽद इति अपि घञपोश्चेति अदेर्घस्लादेशः । हरीन् सिंहान् । सव्यधान् सप्रहारान् । व्यधजपोरित्यप् । सप्रहारत्वादन्यादान् परित्यक्ताहारान् कुर्वन्तः । नौ ण चेति निपूर्वाददोऽण् प्रत्ययः । तस्मिन्नदेर्न घस्लादेशः । चकारादपि तत्र निघसः । दिशो व्याप्नुवन्तः सर्वव्यापिनः ॥

**सञ्चेरुः सहसाः केचिदस्वनाः केचिदाटिषुः ।**
**संयामवन्तो यतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥**

**सश्वेरुरित्यादि** ॥ सहसा सस्मिता । अस्वनास्तूष्णीकाः । स्वनहसोर्वेत्यप् । यतिवन् संयामवन्तः नियमवन्त । यमः समुपनिविषु चेति घञ् । आटिषु अटितवत । अटेर्लुङि रूपम् । अपरे निगदान्वचनान्यमुचन् । नौ गदेत्यादिना विकल्पेनापो विधानात् घञ् ॥

**अथ क्वमादनिःक्वाणा नराः क्षीणपणा इव ।**
**अमदाः सेदुरेकस्मिन् नितम्बे निखिला गिरेः ॥ ५८ ॥**

**अथेत्यादि** ॥ अथ परिभ्रमणादनन्तरं क्लमेन परिश्रमेण अमदाः गतहर्षा । मदोऽनुपसर्गे इत्यप् । अतएव निःक्वाणाः निःशब्दा । क्वणो वीणायां चेत्यपो विकल्पेन घञ् । वीणादिविषयमेतत् । क्वणेर्निपूर्वादनुपसर्गाद्वीणादिविषयाच्च विकल्पेनाप्प्रत्यय इत्युक्तम् । एकस्मिन् गिरेर्नितम्बे सेदुः निषण्णाः । निखिलाः समस्ता वानरा । क्षीणपणा इव अर्थरहिता नरा इव । पण्यन्त इति पणा । व्यवहाराय क्रूते पणे व्यवस्थाप्यन्ते । नित्यं पण परिमाणे इत्यप् ॥

**ततः ससम्मदास्तत्र निरैक्षन्त पतत्रिणः ।**
**गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥**

**तत इत्यादि** ॥ ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्वते पतत्रिणः पक्षिणो निरैक्षन्त ईक्षितवन्तः । ईक्षेर्लङि रूपम् । कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः । निष्पूर्वाद्यातेः शत्रन्तस्य शसि रूपम् । ससम्मदा सहर्षा । प्रमदसम्मदाविति निपातितम् । समजेन वृन्देन पशूनिव निर्यातः । समुदोरजः पशुष्वित्यप् ॥

**वीनामुपसरं दृष्ट्वा तेऽन्योन्योपहवा गुहाम् ।**
**प्राविशन्नाहवप्रज्ञा आहावमुपलिप्सवः ॥ ६० ॥**

**वीनामित्यादि** ॥ वीनां पक्षिणामुपसरं नैरन्तर्य्येण निर्गमनं दृष्ट्वा । इव उपसरनैरन्तर्यमात्रेणोपलक्षितत्वात् । उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स च नैरन्तर्य्येण भवति । प्रजने सर्तेरित्यप् । वानरा अन्योन्योपहवाः परस्परमाह्वानं येषां आगच्छतागच्छत प्रविशाम इति । ह्वः संप्रसारणमित्यप् सम्प्रसारणं च । गुहां प्राविशन् प्रविष्टवन्तः । आहवप्रज्ञाः युद्धप्रज्ञाः । आहूयते युद्धाय स्पर्धतेऽत्रेत्याङि युद्ध इत्यप् संप्रसारणं च । आहावमुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः । निपानमाहाव इति घञि संप्रसारणं निपात्यते वृद्धिरस्त्येव । अप्प्रत्यये त्ववृद्धिः ॥

**कुर्वन्तो ह्वमाप्तानां पिपासावधकाङ्क्षिणः ।**
**द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतम् ॥ ६१ ॥**

**कुर्वन्त इत्यादि** ॥ गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् । आप्तानां स्निग्धानां ह्वमाह्वानं कुर्वन्तः । भावेऽनुपसर्गस्येत्यप् संप्रसारणं च । पिपासा पातुमिच्छा तस्या वधोऽपनयनम् । हनश्च वध इत्यप् वधादेशश्च । तं काङ्क्षितुं शीलं येषामिति । काक्षि माक्षि कांक्षायां इत्यस्मात् सुप्यजातौ णिनिः । इदितो नुम् । साधुकारिणि वा । कीदृशं द्वारं तमोघनप्रख्यं तमसो घनः मूर्तिः काठिन्यं तेन सदृशम् । मूर्तौ घन इति हन्तेरप्प्रत्ययो घनादेशश्च निपात्यते । मूर्तिमत्तम इव द्वारमित्यर्थः ॥

**तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः ।**
**लोहोद्घनघनस्कन्धा ललितापघनां स्त्रियम् ॥ ६२ ॥**

**तस्मिन्नित्यादि** ॥ द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते । तथाह्यन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वम् । अन्तर्घणो देश इत्यन्तःपूर्वाद्धन्तेरप् घनादेशः । घणादेशो वा ये णकारं पठन्ति । यत्तु संज्ञीभूतो वाहीकेषु देशविशेष इत्युक्तं तत् संज्ञाशब्दमाश्रित्य । तस्मिन्नन्तरे यत् सौधसद्म धवलगृहं तस्य प्रघणे एकदेशे। प्रघणः प्रघाणश्चेति निपातितम् । स्त्रियं ललितापघनां ललिताङ्गीमपश्यन् । अपघनोऽङ्गमिति निपातनम् । लोहोद्घनघनस्कन्धाः । यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते स उद्घनः । तद्वत् घनः स्कन्धो येषामिति । उद्घनोऽत्याधानमिति निपातनम् ॥

**सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः ।**
**परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६३ ॥**

**सेत्यादि** ॥ सा स्त्री हसन्ती कपीन् स्वागतं वच आह । कीदृशी विघनेन्दुसमद्युतिः । विहन्यते अभिभूयते अन्या द्युतिर्येन स विघनः । करणेऽयोविद्रुष्वित्यप् । घनादेशश्च । स चेन्दुश्चेति सः । तत्समा द्युतिर्यस्याः । स्तम्बो हन्यते येन पादन्यासेन स स्तम्बघ्नः । तृणकाष्ठादिः । स्तम्बे कच इति करणे कः । गमहनेत्युपधालोपः । तादृशः पादन्यासो येषां कपीनामिति । परिहन्यते येन । परौघ इत्यप् घादेशश्च । परिघोऽर्गलः । तदनुकारिणो विपुला बाहवो येषामिति ॥

**पिप्रायाद्रिगुहोपघ्नानुद्घान् सङ्घसमागतान् ।**
**फलैर्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥**

**पिप्रायेत्यादि** ।। तान्विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती । अद्रिगुहोपघ्नान् । अद्रिगुहैव उपघ्न आश्रयो येषां कपीनाम् । उपघ्न आश्रय इत्यप् उपधालोपश्च निपात्यते । संघसमागतान् समूहेनागतान् । उद्घान् प्रशस्तान् । संघोद्धौ गणप्रशंसयोरिति समुदोरुपपदयो. हन्तेरपि टिलोपश्च निपात्यते ।।

**निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः ।**
**तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ।। ६५ ।।**

**निघेत्यादि** ।। तस्मिन्प्रघणे निघानिघैर्निमितानिमितैस्तरुभिश्छन्ने । निघो निमितमिति निपूर्वाद्धन्तेरपि टिलोपे निपात्यते । समारोहपरिणाहाभ्यां निमितमित्युच्यते । ते कपयः । लब्धिमैर्लाभनिर्वृत्तैः । ड्वित क्त्रिः । फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीम् । पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति । ट्वितोऽथुच् तदन्तान्मतुप् ।।

**रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे ।**
**स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः ।। ६६ ।।**

**रक्षणमित्यादि** ।। हे शुभे कस्माद्वा रक्षणं रक्षां करोषि । एतद्यत्नेनादरेण नोऽस्माकमाख्यायताम् । उभयत्रापि यजयाचेति नङ् । यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति । नोऽस्माकमतिदुर्लभत्वात् । स्वप्न इति स्वपो नन् । निधिरिति उपसर्गे घोः किः ।।

**ततो जलधिगम्भीरान् वानरान् प्रत्युवाच सा ।**
**इयं दानवराजस्य पूः सृष्टिर्विश्वकर्मणः ।। ६७ ।।**

**तत इत्यादि** ।। ततस्तस्मादनन्तरं सा प्रत्युवाच । जलं धीयते अस्मिन्निति अधिकरणे चेति किः । जलधि. समुद्रः । तद्वद्गम्भीरानक्षोभ्यत्वात् । इयं पूः दानवराजस्य विश्वकर्मणः सृष्टिः । सृज्यत इति सृष्टिः । कर्मणि स्त्रियां क्तिन् ।।

इतः स्त्रीलिङ्गमधिकृत्योच्यते ।।

**निहतश्च स्थितिं भिन्दन् दानवोऽसौ बलद्विषा ।**
**दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा ।। ६८ ।।**

**निहत इत्यादि** ।। असौ दानवराज. स्थितिं मर्यादां भिन्दन् । स्थागापापचो भाव इति क्तिन् । बलद्विषा इन्द्रेण निहतः । यस्य चाहं दुहिता । स पिता नाम्ना मेरुसावर्णिः अहं च नाम्ना स्वयंप्रभेति ।।

**जूतिमिच्छथ चेत्तूर्णं कीर्तिं वा पातुमात्मनः ।**
**करोमि वो बहिर्यूतीन् पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥**

**जूतिमित्यादि** ॥ यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ । कीर्तिं वा आत्मनः पातुं रक्षितुम् । वः युष्मान् बहिर्यूतीन् बहिर्भूतान् । ऊतियूतीत्यादिना निपातितः । तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वं च निपात्यते । कीर्तिरपि कृतसंशब्दने स्वार्थिको णिच् उपधायाश्चेतीत्वं तस्मात् क्तिन् । अतः पाणिभिः । दृशो दृष्टीः पिधध्वं च्छादयध्वम् । अपि पूर्वाद्धाञो लोटि द्विर्वचने दधस्तथोश्चेति अभ्यासस्य भष्भावे श्नाभ्यस्तयोरित्याकारलोपे झलां जश् झशीति धातोर्दकारे वष्टिभागुरिरित्युपसर्गाकारलोपे च रूपम् ॥

**व्रज्यावती निरुद्धाक्षान् विद्येवानुष्ठितक्रियान् ।**
**निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ ७० ॥**

**व्रज्येत्यादि** ॥ सा व्रज्यावती प्रशस्तगमनवती । व्रजयजोर्भावे क्यप् । प्रशंसाया मतुप् । वानरान्निरुद्धाक्षान् निरचिक्रमत् निष्कासितवती । क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्वम् । दीर्घो लघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् । अनुष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् । कृञ· श चेति श· । सार्वधातुके यक् । रिङादेशश्च । चङ्क्रमावत कुटिलगतिमतः । अः प्रत्ययादित्यकारः । इच्छात इति वानराणामिच्छाया. । इच्छेति निपातितं इषेः शप् प्रत्ययः छभावश्च निपात्यते । विद्या । संज्ञायामिति क्यप् । यथा विद्या अनुष्ठितक्रियान् कृतपुरश्चरणान् पुरुषानिच्छातोऽभीष्टं सम्पादयति तद्वत्सेति ॥

**निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात् ।**
**ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥**

**निष्क्रम्येत्यादि** ॥ तस्याः शिक्षया उपदेशेन गुरोश्च हल इत्यकारः । तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्ता वयमिति त्रपेति । षिद्भिदादिभ्योऽङ् । मासमतिक्रान्तं ज्ञात्वा बहिर्निर्गताः सन्तः व्यथां भयम् । भिदादित्वादङ् । अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासो विनैव कार्येणातिक्रान्त इति स्वामिनो भयम् ॥

**चिन्तावन्तः कथांचक्रुरुपधाभेदभीरवः ।**
**अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथम् ॥ ७२ ॥**

**चिन्तेत्यादि** ॥ उपधानमुपधा परीक्षा । आतश्चोपसर्ग इत्यङ् । तत्परिशुद्धो हि भृत्यः कार्येषु नियुज्यते । तदकरणादुपधाया भेदोऽभावः तस्मादीरव । चिन्तावन्त इति कर्तव्यतामूढा । कथां चक्रुः कृतवन्त । कीदृशीमित्याह । अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः । चिन्तादयः चिन्तिपूजीत्यादिना अङन्ता ॥

**प्रायोपासनया शान्तिं मन्वानो वालिसंभवः ।**
**युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनाम् ॥ ७३ ॥**

**प्राय इत्यादि** ॥ उपासनेति । ण्यासश्रन्थो युच् । प्रायेण अविच्छेदेन उपवासेनोपासना अनशनेनासनमित्यर्थः । तया शान्तिं कल्याणं मन्वानोऽवगच्छन् उपायान्तराभावात् । वालिसम्भवोऽङ्गदः । योगश्चित्तवृत्तिनिरोधः । तं युक्त्वा संबध्य शैले स्थितः । चित्तवेदनां चित्तपीडां विवृण्वन् । घट्टिविदिवन्दिभ्यो युज्वक्तव्य इति युच् ॥

**प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान् ।**
**धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥७४॥**

**प्रस्कन्दिकामित्यादि** ॥ त्वया का क्रिया कर्तव्येत्यन्यैः पृष्टः सन् जाम्बवान् ध्यात्वा विचिन्त्य ब्रूते स्म । प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तो यतः उत्साहाभावात् । रोगाख्यायां ण्वुल्बहुलम् । शालभञ्जिका क्रीडाविशेषः । संज्ञायामिति ण्वुल् । नित्यं क्रीडेत्यादिना सः । तत्प्रख्या विषया रूपादयः । अतितुच्छत्वात् । अतस्तान् धिक् किन्तु कल्पनारुचीन् कल्पनीयान् ॥

**यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियाम् ।**
**अहमप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ ७५ ॥**

**यामित्यादि** ॥ अयं राजपुत्रोऽङ्गदो यां कारिं क्रियामनुतिष्ठति तां क्रियां अहमप्यनुतिष्ठामि । विभाषाख्यानपरिप्रश्नयोरिञ्चेति करोतेरिञ् । पक्षे कृञः श चेति श । सोऽप्येवमुक्त्वा उपाविशत् अनशनेन स्थितः ॥

**उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान् ।**
**अहं पर्यायसंप्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ ७६ ॥**

**उवाचेत्यादि** ॥ मारुतिर्वानरानुवाच वृद्धे जाम्बवति संन्यासिनि अनशनवति अहमप्यत्र शैले पर्यायेण परिपाट्या सम्प्राप्तां प्रायोपवेशिकां अनशनं कुर्वे । पर्यायार्हेत्यादिना ण्वुल् ॥

**अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः ।**
**इत्युक्त्वा सर्व एवास्थुर्बद्ध्वा योगासनानि ते ॥ ७७ ॥**

**अभाव इत्यादि** ॥ अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितम् । आक्रोशे नञ्यनिः । एवमुक्त्वा सर्व एव अस्थुः स्थिताः । तिष्ठतेर्गातिस्थेति सिचो लुक् । बद्ध्वा योगासनानि विरचय्य पद्मासनादीनि ॥

इतः स्त्रीलिङ्गभावं निवर्त्य कृदुदाह्रियते ॥

**अक्लेश्यमसिनाग्न्यन्तं कबन्धवधमभ्यधुः ।**
**धिङ्नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत् ॥ ७८ ॥**

**अक्लेश्यमित्यादि** ॥ कबन्धवधं योजनबाहोर्वधमभ्यधुः अभिहितवन्तः । अभिपूर्वो धाञभिधाने वर्तते । कीदृशं अक्लेश्यं प्रयासरहितम् । कस्मात् असिना सुखमरणात् । तं चाग्न्यन्तं अन्ते तस्याग्निरभूत् । अस्माकं धिक् प्रपतनं विनाशम् । दुःखेन घोरत्वात् । क्लेदान्तत्वं अन्ते पूतीभावं तद्यत्रास्ति । अर्शआदित्वादच् । अनाथानामिव । अक्लेश्यप्रपतनशब्दौ भावसाधनौ । कृत्यल्युटो बहुलमिति ॥

**ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम् ।**
**अशनीयमिवाशंसुर्महानायादशोभनः ॥ ७९ ॥**

**तत इत्यादि** ॥ ततोऽभिहितानन्तरं महान् पक्षी सम्पातिनामा जटायुभ्राता । आयात् आगतः । मन्दगतो मन्दगमनः । नपुंसके भावे क्तः । आहिताग्नित्वात् परनिपातः । तेषां यत्प्रायोपवेशनं तदशनीयमिव भोजनीयमिव । कृत्यल्युटो बहुलमिति कृत्यः । आशंसुः आशंसनशीलः । अशोभनः शोभारहितः । दावाग्निना प्लुष्टशरीरत्वात् । ल्युट् चेति भावे ल्युट् । कर्मणि च येनेत्येतत्परिहृत्योदाहृतत्वात् ॥

**देहव्रश्चनतुण्डाग्रं तं विलोक्याशुभाकरम् ।**
**पापगोचरमात्मानमशोचन् वानरा मुहुः ॥ ८० ॥**

**देहेत्यादि** ॥ वृश्च्यते येन तुण्डाग्रेण । करणाधिकरणयोश्चेति करणे ल्युट् । देहस्य व्रश्चनमिति कृद्योगे षष्ठी । देहव्रश्चनं तुण्डाग्रं यस्य तं विलोक्य । वानरा अशुभाकरं पापस्योत्पत्तिस्थानम् । आकर इवाकरः । पुंसि संज्ञायां घः । तत्र हि करणाधिकरणयोरिति वर्तते । एवं उत्तरत्रापि चात्मानं पापगोचरं पापविषयं पापविषये पतिता वयमिति मुहुरशोचन् शोचितवन्तः । गोचरसञ्चरेत्यधिकरणे निपातितः ॥

**जटायुः पुण्यकृत् पक्षी दण्डकारण्यसञ्चरः ।**
**कृत्वा राघवकार्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८१ ॥**

**जटायुरित्यादि** ॥ कृत्वा राघवकार्यम् । अग्निसंस्कृत अग्निना कृतसंस्कार· । स्व. स्वर्गमारूढ । जटायु· पुण्यकृत् । संचरत्यस्मिन्निति संचर । पर्ववत निपातित । दण्डकारण्यं संचरोऽवस्थानं यस्येति ॥

**नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः ।**
**अचेष्टा यदिहान्यायादनेनात्स्यामहे वयम् ॥ ८२ ॥**

**नरकस्येत्यादि** ॥ अवतीर्यते येन कर्मणेति । अवेस्तृस्त्रोर्घञ् । स एवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागत. । यद्यस्माद्वयमचेष्टाः निश्चला. अनेन पक्षिणा अन्यायादयुक्त्या । नीयते अनेनेति निपूर्वादिण अध्यायन्यायेति निपातनात् घञ् । अत्स्यामहे भक्षयिष्यामहे । कर्मणि लृट् ॥

**हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभम् ।**
**शरीराखनतुण्डाग्रं प्राप्यामुं शर्म दुर्लभम् ॥ ८३ ॥**

**हृदेत्यादि** ॥ अमुं पक्षिणं प्राप्य । कीदृशं हृदयोदङ्कसंस्थानम उदञ्च्यते आकृष्यते अनेनेति उत्पूर्वादञ्चतेरुदङ्कोऽनुदक इति घञ् निपात्यते । हृदयस्योदङ्कः संदंश. तत्संस्थानं तत्सदृशम् । कृतान्तानायसन्निभम् । यमजालतुल्यं तत्प्रविष्टस्य दु खेन निर्गमत्वात् । जालमानाय इति नयतेराङ्पूर्वात्करणे घञ् निपात्यते । आखन्यते येन तुण्डाग्रेण । खनो घच् । शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति । प्राप्य शर्म सुखं दुर्लभं कृच्छ्रलभ्यम । ईषदित्यादिना खल् । अत्र करणाधिकरणयोश्चेति निवृत्तम् । तयोरेव कृत्यक्तखलर्था इति योज्यम् । उपसर्गात् खल्घञोरिति प्राप्तस्य नुम· न सुदुर्भ्यामिति प्रतिषेधः ॥

**ईषदाढ्यङ्करोऽप्येष न परत्राशुभक्रियः ।**
**अस्मानत्तुमितोऽभ्येति परिग्लानो बुभुक्षया ॥ ८४ ॥**

**ईषदित्यादि** ॥ य एष अस्मानत्तुमित प्रदेशादभ्येति आगच्छति स परत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृत. । अशुभेन कर्मणेत्यर्थात् । कर्तृकर्मणोश्च भूकृञोरिति च्व्यर्थे कर्मोपपदात्करोते खल् । यत. परिग्लानो बुभुक्षया यो हि कर्मणा शुभेन ईषदाढ्यङ्करोऽपि न कृत· स कथं न बुभुक्षया पीड्यते । परिग्लायतीति कर्तरि बहुलवचनात् ल्युट् । निष्ठान्तो वा । संयोगादेरित्यादिना निष्ठानत्वम् । अशुभक्रियः सत्वद्रोहाभिरतत्वात् ॥

**संप्राप्य वानरान् पक्षी जगाद मधुरं वचः ।**
**के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्धनि ॥ ८५ ॥**

इति कृदधिकार. ।

**संप्राप्येत्यादि** ॥ वानरान् संप्राप्य पक्षी जगाद गदितवान् । के यूयं अद्रिमूर्धनि पर्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण । आतो युच् । तत्रापि ईषदादयोऽनुवर्तन्ते । कर्तृकर्मणोरिति न स्मर्यते ॥ इति कृदधिकारः ॥

## अथ प्रकीर्णकाः ।

इतः प्रकीर्णकश्लोकानाह ॥

**आत्मनः परिदेवध्वे कुर्वन्तो रामसत्कथाम् ।**
**समानोदर्यमस्माकं जटायुं च स्तुथादरात् ॥ ८६ ॥**

**आत्मन इत्यादि** ॥ आत्मनः परिदेवध्वे शोचथ । देवृ देवन इति भौवादिकः । शसि न संयोगाद्वमन्तादित्यल्लोपो न भवति । जटायुं च समानोदर्यं भ्रातरमस्माकम् । समानोदरे शयित इति यत् । आदरात् प्रस्तुथ प्रस्तुतिं कुरुथ । जटायुः पुण्यकृदित्यादिना । रामसत्कथां च कुर्वन्तः अतः के यूयमिति ॥

**शङ्काधवित्रवचनं प्रत्यूचुर्वानराः खगम् ।**
**वयं शत्रुलवित्रेषोर्दूता रामस्य भूपतेः ॥ ८७ ॥**

**शङ्केत्यादि** ॥ धुनोत्यपनयत्यनेनेति धवित्रम् । आर्तिलूधू इत्यादिना करणे इत्रः । किमयं करिष्यतीति शङ्काधवित्रं वचनं यस्य तं खगं वानराः प्रत्यूचुः । शत्रुलवित्रा इषवो बाणा यस्य रामस्य भूपतेस्तस्य वयं दूताः । पूर्ववदित्रं कृत्वा सः ॥

**केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् ।**
**हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥ ८८ ॥**

**केनेत्यादि** ॥ तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृताम् । दुष्कुलस्यापत्यमिति दुष्कुलाड्ढक् । कुल्यां कुले साध्वी तत्र साधुरिति यत् । माहाकुली माहाकुलीनस्येति महाकुलस्यापत्यमिति माहाकुलादञ्खञाविति अञ्खञौ । लिप्सामहे वयं लब्धुमिच्छामः ॥

**त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिम् ।**
**अकृतार्था विषीदन्तः परलोकमुपास्महे ॥ ८९ ॥**

**त्रिंशादित्यादि** ॥ त्रिंशतः पूरणम् । विंशत्यादिभ्य इति तमट् । त्रिंशत्तमं यदहः तत् प्रत्यागमावधि प्रत्यागमनस्यावधिं यातं अतीतं मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे ॥

**म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम् ।**
**उपलम्भ्यामपश्यन्तः कौमारीं पततां वर ॥ ९० ॥**

**म्रियामहे इत्यादि** ॥ हे पततां पक्षिणां वर म्रियामहे न गच्छामः । किमिति कौमारीं अकृतपूर्वदारपतिं लब्धवतीम् । कौमारापूर्ववचन इति साधुः । कौशल्यायनिवल्लभाम् । कौशल्याया अपत्यं कौशल्यायनी रामः । कौशल्यकार्मार्याभ्यां चेति फिञ् । फस्यायनादेशः । तस्य वल्लभां इष्टां उपलम्भ्या प्रशस्ताम् । पोरदुपधादिति यत् । उपात्प्रशंसायामिति यत्प्रत्यये नुम् । अपश्यन्तोऽनुपलभमाना ॥ एतेप्रकीर्णकाः ।

इतः क्ङिदतिशेषमधिकृत्याह ॥

**जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतिम् ।**
**यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ९१ ॥**

**जगादेत्यादि** ॥ ध्रुवं अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्त इति पक्षी वानरान् जगाद । विभाषा लुङ्लृङोरिति विभाषा गाङादेशः । गाङ्कुटादिभ्य इति सिचो ङित्त्वम् । घुमास्थेतीत्वम् । धि चेति सिचो लोपः । इणः षीध्वमिति मूर्धन्यः । यस्माद्यूयमस्मिन् काले संकुटितुं अवसातुमध्यवस्यथ अभिप्रायं कुरुथ । कुटादित्वात् ङित्त्वम् ॥

अयमेवावसातुं काल इतिचेदाह ॥

**नायमुद्विजितुं कालः स्वामिकार्याद्भवादृशाम् ।**
**हृतभार्ये च्युते राज्याद्रामे पर्युत्सुके भृशम् ॥ ९२ ॥**

**नायमित्यादि** ॥ भवादृशां युष्मद्विधाना स्वामिकार्यादुद्विजितुं नायं कालः । विज इडिति ङित्त्वम् । किमिति न भवतीति चेदाह । राज्याच्च्युते भ्रष्टे रामे निर्वासितत्वात् । तत्रापि हृतभार्ये भृशमत्यर्थं पर्युत्सुके सीतायाम् ॥

**यत्नं प्रोर्णवितुं तूर्णं दिशं कुरुत दक्षिणाम् ।**
**प्रोर्णुवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम् ॥ ९३ ॥**

**यत्नमित्यादि** ॥ दक्षिणां दिशं प्रोर्णवितुं आच्छादयितुं छादयिष्याम इति तुमुन् । तूर्णं शीघ्रं यत्नं कुरुत । तस्यां दिशि पुरीं द्रक्ष्यथ । काञ्चनीं प्राणिरजतादिभ्योऽञ् । प्रोर्णुवि-

त्रीं अभिव्यापिनीम् । तृचि रूपम् । दिव आकाशस्य । कर्मणि षष्ठी । विभाषोर्णोरिति ङित्त्वपक्षे उवङ् । अङित्त्वपक्षे च गुणः । कुरुतेति सार्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति । तस्य चार्धधातुकत्वात् अङित्त्वे धातोर्गुणः अत उत् सार्वधातुके इति उत् ॥

लङ्कां नाम्ना गिरेर्मूर्ध्नि राक्षसेन्द्रेण पालिताम् ।
निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः ॥ ९४ ॥

**लङ्कामित्यादि** ॥ यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः दृष्टवत्यः । असंयोगाल्लिट् किदिति कित्त्वम् । तां यातेति वक्ष्यमाणेन सम्बन्धः । गिरेः सुवेलस्य मूर्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातम् । शक्रं निर्जित्य सुरस्त्रिय आनीता इति च रावणस्य माहात्म्यम् ॥

बभूव याधिशैलेन्द्रं मृदित्वेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

**बभूवेत्यादि** ॥ अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि । सप्तम्यर्थेऽव्ययीभावः । इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं मृदित्वेव तिरस्कृत्येव बभूव । इन्धिभवतिभ्यां चेति कित्त्वम् । जगतां सारं कुषित्वा निष्कुष्य । सैका भुवि कृता निर्मितेत्यहं शङ्के । तां यात । मृदित्वा कुषित्वेति नक्त्वा सेडिति कित्त्वप्रतिषेधे प्राप्ते मृडमृदेत्यादिना कित्त्वम् ।

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशलैर्निजैः ।
उदित्वालं चिरं यत्नात् सैका धात्रा विनिर्मिता ॥ ९६ ॥

**अमृडित्वेत्यादि** ॥ सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा । निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा । उदित्वा अभिधायालम्पर्याप्तमेवं करिष्यामीति । यत्नात् महता प्रयासेन । सैका धात्रा विनिर्मिता पूर्ववत्कित्त्वम् ॥

मुषित्वा धनदं पापो यां गृहीत्वावसद्द्विषन् ।
तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम् ॥ ९७ ॥

**मुषित्वेत्यादि** ॥ मुषित्वा धनदं वैश्रवणं तस्मात्पुरं पुष्पकं च विमानमपहृतम् । पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः । द्विषन् शत्रुः । शक्रेण रुदित्वेवोपेक्षितामवधीरिताम् । रुदविदेति कित्त्वम् । तत्र चकारेण क्लेत्यनुवर्तते ॥

**विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः ॥**
**उक्तं पिपृच्छिषूणां वो मास्म भूत सुषुप्सवः ॥ ९८ ॥**

**विदित्वेत्यादि** ॥ आत्मीयां शक्तिं सामर्थ्यं विदित्वा । पूर्ववत्कित्त्वम् । रावणं विजिघृक्षव विग्रहीतुमिच्छव । सुषुप्सवः शयितुमिच्छवो मास्म भूत न प्रमत्ता भवतेत्यर्थः । रावणस्य बलीयस्त्वादिदमुक्तं मया वो युष्माकं पिपृच्छिषूणां प्रष्टुमिच्छूनाम् । अत्र रुदविदेति सनः कित्त्वे सम्प्रसारणम् । प्रच्छेः किरश्च पञ्चभ्य इतीडागमः ॥

**नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरम् ।**
**किं मुमुषिषुवद्यात द्विषो नापचिकीर्षया ॥ ९९ ॥**

**नेत्यादि** ॥ वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति वो मयोक्तमिति योज्यम् । किन्न यात न गच्छत । मुमुषिषुवत् चौरवदित्यर्थ. । पूर्ववत्कित्त्वम् । द्विषः शत्रोरपचिकीर्षया अपकर्तुमिच्छया । इको झलीति कित्त्वे गुणो न भवतीति अज्झनगमां सनीति दीर्घः । ऋत इद्धातोः ॥

**बुभुत्सवो द्रुतं सीतां भुत्सीध्वं प्रब्रवीमि वः ।**
**मा च भुद्ध्वं मृषोक्तं नः कृपीढ्वं स्वामिने हितम् ॥ १०० ॥**

**बुभुत्सव इत्यादि** ॥ बुभुत्सवो ज्ञातुमिच्छव. यदि सीताम् । बुधेः सन्नन्ताद्धलन्ताच्चेति कित्त्वम् । एकाच इति भष्भावः । तदा द्रुतं ता भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि । लिङ्सिचाविति कित्त्वम् । मृषोक्तं मिथ्योक्तं नोऽस्माकं मा च भुद्ध्वं न जानीत अपि तु सत्यम् । झलो झलीति सिचो लोप. । झलां जश् झशि । कित्त्वं पूर्ववत् । अतो यूयं स्वामिने रामाय हितं कृपीढ्वं कुरुत । उश्चेति कित्त्वम् । इणः षीध्वमिति मूर्धन्यः ॥

**समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम् ।**
**नोपायध्वं भयं सीतां नोपायंस्त दशाननः ॥ १०१ ॥**

**समगध्वमित्यादि** ॥ इदमहमाशंसे यदुत शत्रो. रावणस्य पुरः अग्रत. समगध्वं संगता भवत । आशंसायां भूतवच्चेति लुङ् । समो गम्यृच्छी तितङ् । वा गम इति सिचः कित्त्वे अनुदात्तेत्यनुनासिकलोप. । ह्रस्वादङ्गादिति सिचो लोपः । मोदयध्वं रघूत्तमं हर्षयत । तत्कार्यकरणात् । मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थ. । आङो यमहन इति तङ् । यमो गन्धन इति तङ् । यमो गन्धन इति सिचः कित्त्वे अनुनासिकलोपः । गन्धनं सूचनम् । अन्यथा युष्मासु गन्धितनयेषु नियतमसौ दशाननः सीतामुपायंस्त स्वीकृतवान् स्यात्

तस्य दुर्वृत्तत्वात् । आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् । उपाद्यमः स्वकरण इति तङ् । स्वीकरणं चात्र विवाहनमुक्तम् । विभाषोपयमन इति अकित्त्वपक्षे रूपम् ॥

**ततः प्रास्थिषताद्रीन्द्रं महेन्द्रं वानरा द्रुतम् ।**
**सर्वे किलकिलायन्तो धैर्यं चाधिषताधिकम् ॥ १०२ ॥**

**तत इत्यादि** ॥ ततः सम्पातिवचनानन्तरं सर्वे वानरा महेन्द्रं पर्वतं प्रास्थिषत प्रस्थितवन्तः । धैर्यं चाधिकमाधिषत आहितवन्त आत्मनि । तिष्ठतेर्दधातेश्च स्थाघ्वोरिच्चेति कित्त्वमित्वं च । तिष्ठतेः समवप्रविभ्यः स्थ इति तङ् । किलकिलायन्तः किलकिलाध्वनिं कुर्वाणाः । अव्यक्तानुकरणेत्यादिना डाच् । तदन्तात् लोहितादिडाज्भ्यः क्यष् । वा क्यष इति परस्मैपदम् ॥

**निकुञ्जे तस्य वर्तित्वा रम्ये प्रक्ष्वेदिताः परम् ।**
**मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ १०३ ॥**

**निकुञ्ज इत्यादि** ॥ तस्य पर्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्तित्वा स्थित्वा । नक्त्वा सेडिति कित्वप्रतिषेधः । परं प्रक्ष्वेदिता उच्चैरव्यक्तशब्दं कुर्वाणाः । निष्ठाशीङिति कित्त्वप्रतिषेधः । तोयधिं प्रैत्युदक्षन्त दृष्टवन्तः । लङि रूपम् । कीदृशं मणिरत्नाधिशयितम् । क्तोऽधिकरणे चेति क्तः । पूर्ववत्कित्त्वप्रतिषेधः । मणिर्यद्रत्नमिति स्त्रीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः । तस्याधिशयितमवस्थानमित्यर्थः ॥

**अमर्षितमिव घ्नन्तं तटाद्रीन् सलिलोर्मिभिः ।**
**श्रिया समग्रं द्युतितं मदेनेव प्रलोठितम् ॥ १०४ ॥**

**अमर्षितमित्यादि** ॥ सलिलोर्मिभिः कल्लोलैः । तटाद्रीन् तटस्थान् पर्वतान् घ्नन्तं प्रत्युदैक्षन्त । अमर्षितमिव मृषेस्तितिक्षायामिति कित्त्वप्रतिषेधः । पश्चात् नञ्समासः । श्रिया हेतुभूतया समग्रं संपूर्णम् । द्युतितमिति कर्तरि निष्ठा । यदि वा श्रिया कर्तृभूतया द्युतितं शोभितम् । यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यम् । एवं च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन कित्त्वप्रतिषेधात् कित्त्वमुदाहृतम् । मदेनेव मत्ततयेव । श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धम् । आदिकर्मणि निष्ठायामकित्त्वमुदाहृतम् ॥

**पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वे व स्थितं रुचः ।**
**गुम्फित्वे व निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥ १०५ ॥**

**पूतमित्यादि** ॥ नमस्वद्भिर्वायुभिः शीतैः पूतं पवित्रीकृतम् । पूङश्चेति विकल्पे-नेट् । अतएव पक्षे पून्व' क्तानिष्टयो किन्त्वप्रतिषेधोऽत्र न भवति । तत्र सेडित्यनुव-र्तते । रुचो दीप्तीर्भ्रथित्वेव मंदभ्र्येव स्थितम् । नोपधात्थफान्ताद्वेति किन्त्वप्रतिषेधपक्षे रूपम् । सर्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिप्यन्तम् । नोपधादिति विकल्पेन किन्त्व-प्रतिषेधः । यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यम् ॥

**वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि ।**
**तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः ॥ १०६ ॥**

**वञ्चित्वेत्यादि** ॥ स्थित्यनतिक्रमादम्बरं दूरं वञ्चित्वातिक्रम्य । वञ्चिलुञ्चीति किन्त्व-प्रतिषेधः । स्वस्मिन्नात्मनि स्वरूपे तिष्ठन्तम । अत्र नश्छव्यप्रशानिति नकारस्य रुत्व-म् । पूर्वस्य त्वनुनासिकादेशः । तृषित्वेव तृषित इव भूत्वा । तृषिमृषीत्यादिना प्रतिषे-धः । तत्सलिलस्य स्वादुत्वात् । सरितां पय' स्वादु पिबन्तं अनिशमजस्रम् ॥

**द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्धितम् ।**
**मेरोर्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः ॥ १०७ ॥**

**द्युतित्वेत्यादि** ॥ शशिना नक्तम् रात्रौ द्युतित्वा दीप्तिमता भूत्वा । रश्मिभिः परिवर्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगं महत्त्वं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्धि-तुमिच्छुमित्यर्थः । अनेकार्थत्वाद्धातूनाम् । द्युतित्वा दिद्योतिषुमिति रलो व्युपधादिति किन्त्वाकिन्त्वे । तत्र ह्युकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्तासनौ वा न कितौ भवत इति सूत्रार्थ ॥

**विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्**
**भ्रमन्मकरभीषणं समधिगम्य चाधः पयः ।**
**गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन्**
**गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम् ॥ १०८ ॥**

**इतिभट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य सप्तमः सर्गः ॥ ७॥**

**विलोक्येत्यादि** ॥ कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्य-सर्जयन् । परिप्रपूर्वादिषुगतावित्यस्मात् हेतुमण्ण्यन्तात् लङि रूपम । किं कृत्वेत्याह । विलोक्य सलिलोच्चयान् सलिलोर्मीन् । ऊर्ध्वं चीयत इत्येरच् । अधिसमुद्रं समुद्रस्योपरि । अभ्रंलिहान् दूरमुच्छ्रितान् । अधश्च पय. समधिगम्य ज्ञात्वा । कीदृशं भ्रमद्भिर्मकरै-

भीषणं भयानकम् । भीषयतीति नन्द्यादिलाल्लयुः । गमागमसहं गमनागमनयोग्यं मारुतिम् । गजेन्द्रस्येव गुरुर्विक्रमो यस्य । तरुमृगेषु वानरेषूत्तममिति सप्तमीति योगविभागात् सः ॥ ॥ इतिक्त्वाधिकारः ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्वितीयः परिच्छेदः
काव्यस्य सीतान्वेषणं नाम सप्तमः सर्गः ॥ ७ ॥

---

# अष्टमः सर्गः ।

आत्मनेपदमधिकृत्याह ॥

**अगाधत ततो व्योम हनूमानुरुविग्रहः ।**
**अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः ॥ १ ॥**

**अगाधतेति** ॥ ततो विसर्जनानन्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् । गाधृ प्रतिष्ठालिप्सयोरित्यस्माल्लङ् । अनुदात्तङित इति अनुदात्तेत्वादात्मनेपदम् । उरुविग्रहः कामरूपित्वात् तदानीमुत्पादितविपुलकायः । तस्य चोत्पततो वेगं गरुडादित्यपवनाः नात्यशेरत नातिशयितवन्तः । ङित्त्वात्तङ् । शीङो रुट् । शीङः सार्वधातुके गुणः ॥

**अभायत यथार्केण सुप्रातेन शरन्मुखे ।**
**गम्यमानं न तेनासीदगतं क्रामता पुरः ॥ २ ॥**

**अभायतेत्यादि** ॥ यथा अर्केण सुप्रातेन सुप्रभातेन नीहाराद्यभावात् । शोभनं प्रातरनेनेति सुप्रातसुश्वेति समासान्तनिपातनम् । शरन्मुखे शरदारम्भे । अभायत दीप्यते स्म । भावकर्मणोरिति भावे तङ् । तद्वत्तेनाभायत । पुरोऽग्रतो यदर्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् । कर्मण्यात्मनेपदम् । तेन हनूमता क्रामता गच्छता । शिति क्रम इति दीर्घत्वम् । नागतमासीत् अपि तु सर्वमेव गतमिति ॥

**वियति व्यत्यतन्वातां मूर्ती हरिपयोनिधी ।**
**व्यत्यैतांचोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ ३ ॥**

**वियतीत्यादि** ॥ हरिपयोनिधी हनूमत्समुद्रौ मूर्ती स्वदेहौ वियत्याकाशे व्यत्य-

तन्वातां व्यतिविस्तारितवन्तौ । तनोतेर्लङ् । कर्तरि कर्मव्यतीहार इत्यात्मनेपदम् । उत्तमं च मार्गं अर्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ । इण परस्य लङः, कर्मव्यतीहार इत्यात्मनेपदं प्राप्तं न गतिहिंसार्थेभ्य इति गत्यर्थत्वात् प्रतिषिद्धं तेन तसस्तामादेशः। तत्र हरेर्गच्छतः पुरतो यस्मिन्वियत्प्रदेशे स्वमूर्तिं विस्तारितुमवसरो भविता तत्र पयोनिधिरूर्मिभिः स्वमूर्तिं वितस्तार । पयोनिधेश्च वेलातटं गच्छतो यत्र स्वमूर्तिविस्तारावसरो भावी तत्र हरिः स्वमूर्तिं वितस्तार । तथा पयोनिधेर्यं मार्गं गन्तुमवसरो भविता हरिरुत्पत्य तं मार्गं गन्तुमैच्छत् । यं च हरेर्मार्गं गन्तुमवसरो भविता तं मार्गं पयोनिधिरभ्रंलिहैरूर्मिभिरैच्छत् । यत्र यत्क्रियावसरे क्रियां करोति स तत्र तत्क्रियाकारीत्युपचर्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्वन् तत्कारीत्युच्यते । ततश्चेतरेणेतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्याश्चेतरकरणात् सम्भवति कर्मव्यतीहारः ॥

**व्यतिजिग्ये समुद्रोऽपि न धैर्यं तस्य गच्छतः ।**
**व्यत्यगच्छन्न च गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥**

**व्यतीत्यादि** ॥ तस्य हरेर्गच्छत स्वदेहस्याल्पता कर्तुं योऽवसरो भावी तत्र समुद्रो नातिशयधैर्यं कृतवान् तेन तस्य धैर्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् । अपिशब्दाच्च हनूमानपि समुद्रस्य शान्तत्वं कर्तुं योऽवसरो भावी तत्र नातिशयधैर्यं कृतवान् तेन तस्य धैर्यं वा न जितं तदानीं तस्य विपुलकायत्वात् । तदेवं हनूमतः समुद्रो हनूमानपि समुद्रस्य धैर्यं न व्यतिजिग्ये नाभिबभूव । एकवचनस्य प्रत्येकाभिसम्बन्धात्। कर्मव्यतीहारे पर्ववदात्मनेपदम् । संल्लिटोर्जेर्गिति कुत्वम् । तस्य हनुमतो गतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनो वायुर्न व्यत्यगच्छत् न प्राप्तवान् ॥

तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह ॥

**व्यतिघ्नतीं पथि घ्नन्तं राक्षसीं पवनात्मजः ।**
**जघानाविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥**

**व्यतीत्यादि** ॥ हनिष्याम्येनमिति राक्षस्या यो वधकरणावसर तत्र व्यतिघ्नन् व्यतिघ्नन्तीं तस्यैनां हनिष्यामीति यो वधकरणावसर तत्र घ्नतीं तदेवमितरेतरक्रियाकरणेन व्यतिघ्नती राक्षसीम् । न गतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः । तां पवनात्मजो हनूमान् जघान कथं वदनमाविश्य उदरं भित्त्वा द्रुतं निर्यान् निर्गच्छन् । यातेः शतरि रूपम् ॥

**अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान् ।**
**उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी ॥ ६ ॥**

**अन्योन्यमित्यादि** ॥ अन्योन्यमित्यन्योन्यस्येत्यर्थः । कर्मव्यतीहारे सर्वनाम्नो द्वे भवतः स्त्रीनपुंसकयोरामभाव इति वक्तव्यम् । अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षस्यौ शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ । यु मिश्रण इत्यस्माल्लट् स्म इति भूते लट् । इतरेतरेत्यादिना कर्मव्यतीहार आत्मनेपदप्रतिषेध. । तत्रोदन्वतः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयाव । राक्षस्याः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्रोदन्वाननिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयाव ॥

**न्यविक्षत महाग्राहसङ्कुलं मकरालयम् ।**
**सैका बहूनां कुर्वाणा नक्राणां स्वाशितम्भवम् ॥ ७ ॥**

**न्यविक्षतेत्यादि** ॥ महद्भिर्ग्राहैः सङ्कुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती । नेर्विश इत्यात्मनेपदम् । शल इगुपधादनिटः क्स । बहूनां नक्राणामेकापि सती स्वाशितम्भवं सुष्ठु तृप्तिं कुर्वाणा । आशिते भुव इति भावे खच् ॥

**कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् ।**
**पित्रा संरक्षितं शक्रात्स मैनाकाद्रिमैक्षत ॥ ८ ॥**

**कृतेनेत्यादि** ॥ स हनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत । वायोरुपकृतमुपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विचिन्वन्तम् । परिव्यवेभ्यः क्रिय इत्यकर्त्रभिप्रायविषयमात्मनेपदम् । पित्रा वायुना रक्षितं शक्रात् । तेन हि पक्षच्छेदकाले महता वेगेन समुद्रं नीत्वा रक्षित इति श्रूयते ॥

**खं पराजयमानोऽसावुन्नत्या पवनात्मजम् ।**
**जगादाद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम् ॥ ९ ॥**

**खमित्यादि** ॥ असावद्रिः उन्नत्या उन्नततया खं पराजयमानोऽभिभवन् पवनात्मजं जगाद । मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः । आशिषि लिङ् । उभयत्रापि विपराभ्यां जेरिति तङ् ॥

**फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।**
**साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम् ॥ १० ॥**

**फलानीत्यादि** ॥ चित्राणि नानाविधानि फलानि आदत्स्व गृहाण । आङो दोनास्यविहरण इत्यात्मनेपदम् । सानुषु ममैकदेशेषु परिक्रीडस्व विहर । पक्षिणां च वृन्दानि साधु शोभनं अनुक्रीडमानानि विहरन्ति सन्ति पश्य । उभयत्र क्रीडोऽनुसम्परिभ्यश्चेति तङ् ॥

**क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः ।**
**न तत्संस्थास्यते कार्यं दक्षेणोरीकृतं त्वया ॥ ११ ॥**

**क्षणमित्यादि** ॥ हे भद्र कल्याण क्षणमवतिष्ठस्व । ततः पश्चात्प्रस्थास्यसे यास्यसि । यच्च कार्यं करणीयं दक्षेणानलसेन त्वया ऊरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यत एवेत्यर्थः । सर्वत्र समवप्रविभ्यः स्थः इति तङ् ॥

**त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम् ।**
**उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते ॥ १२ ॥**

**त्वयीत्यादि** ॥ त्वयि विषये अस्माकं प्रीतिरस्ति । तेन संशये अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते । प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदम् । विवादपदनिर्णेता स्थेय उच्यते । तुभ्यं तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतो वर्तत इति स्वाभिप्रायम् । तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयाम इत्यर्थः । अत्र प्रकाशनं च स्वाभिप्रायकथनम् । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति सम्प्रदानसंज्ञायां चतुर्थी । कस्मादेवं मां श्लाघस इति चेदाह । उत्तिष्ठमानं यतमानम् । उदोऽनूर्ध्वकर्मणीत्यात्मनेपदम् । कस्त्वां न बहु मन्यते न श्लाघते ॥

**ये सूर्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः ।**
**रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥ १३ ॥**

**य इत्यादि** ॥ ये द्विजा मन्त्रैः करणभूतैः सूर्यमुपतिष्ठन्ते प्रत्युपासते । उपान्मन्त्रकरण इत्यात्मनेपदम् । सन्ध्यात्रयं त्रिसन्ध्यम । अत्यन्तसंयोगे द्वितीया । तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति किं पुनरहं यत्ते पितुः सुहृत् ॥

तदेव दर्शयन्नाह ॥

**अव्यग्रमुपतिष्ठस्व वीर वायोरहं सुहृत् ।**
**रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥**

**अव्यग्रमित्यादि** ॥ हे वीर अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहितो भव ।

अकर्मकाच्चेत्यात्मनेपदम् । यतो वायोस्तव पितुरहं सुहृत् । रविरत्यर्थं वितपते दीप्यते । उद्विभ्यामित्यात्मनेपदम् । तत्राकर्मकादिति वर्तते । तस्मादाश्वस्य विश्रम्य गम्यताम् ॥

**तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः ।**
**आघ्नान इव सन्दीप्तैरलातैः सर्वतो मुहुः ॥ १५ ॥**

**तीव्रमित्यादि** ॥ तीव्रं सुष्ठु उत्तपमानो दीप्यमान आतपः सोढुमशक्यः । पूर्ववदात्मनेपदम् । अलातैः उल्मुकैः सन्दीप्तैः सर्वत आघ्नान इव ताडयन्निव । आङो यमहन इत्यविवक्षितकर्मकत्वादात्मनेपदम् । गमहनेत्युपधालोपः । हो हन्तेरिति कुत्वम् ॥

**संशृणुष्व कपे मत्कैः सङ्गच्छस्व वनैः शुभैः ।**
**समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते ॥ १६ ॥**

**संशृणुष्वेत्यादि** ॥ हे कपे संशृणुष्व आकर्णय । समो गम्यृच्छीत्यादिविवक्षितकर्मकत्वादात्मनेपदम् । शुभैः शोभमानैः । इगुपधलक्षणः कः । वनैर्मत्कैः मत्स्वामिकैः । अहं स्वामी येषामिति स एषां ग्रामणीरिति कः । प्रत्ययोत्तरपदयोश्चेति मदादेशः । सङ्गच्छस्व सङ्गतो भव । पूर्ववदात्मनेपदम् । समारन्त ममाभीष्टा इति ममाभिप्रेता ये सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिदेष्यति यस्याहमुपयोगी स्यामिति ते समारन्त आगताः त्वय्युपागते सति । अर्तेर्लुङि पूर्ववदात्मनेपदम् । सर्तिशास्त्यर्तिभ्य इत्यङि ऋदृशो ङि गुणः । आडजादीनाम् । भाषाविषयस्य प्रयोगः ॥

न चैवं मिथ्या वायुर्मे सुहृदित्याह ॥

**के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा ।**
**यत्नादुपाह्वये प्रीतः संह्वयस्व विवक्षितम् ॥ १७ ॥**

**क इत्यादि** ॥ वायोर्मैनाकाद्रिर्यथा सखेति के न संविद्रते जानन्ति । वेत्तेः पूर्ववदात्मनेपदम् । वेत्तेर्विभाषेति रुट् । तस्मात् प्रीतः सन् अहं यत्नादुपाह्वये भवन्तमाह्वयामि ततः संह्वयस्व कथय विवक्षितमभिप्रेतम् । निसमुपविभ्यो ह्व इत्यकर्त्रभिप्राये लट्लोटोरात्मनेपदम् । ततोऽकर्मकादिति निवृत्तम् । सामान्ये न विधानम् ॥

**द्यामिवाह्वयमानन्तमवोचद्भूधरं कपिः ।**
**उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीविवत् ॥ १८ ॥**

**द्यामित्यादि** ॥ द्यामिवाकाशमिवाह्वयमानं महत्तया स्पर्द्धमानम् । स्पर्द्धायामाङः इत्यात्मनेपदम् । अत्यर्थमुपकुर्वन्तं आतिथ्येन तमीदृशं भूधरमवोचत् । कपिः प्रकुर्वाणः सेवमानोऽनुजीविवत् भृत्यवत् । गन्धनेत्यादिना सेवने तङ् ॥

**कुलभार्यां प्रकुर्वाणमहं द्रष्टुं दशाननम् ।**
**यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपस्कृथाः ॥ १९ ॥**

**कुलभार्यामित्यादि** ॥ अहं दशाननं द्रष्टुं यामि । कुलभार्यां प्रकुर्वाणं कुलनारीमभिगच्छन्तम् । तस्यां सहसा प्रवर्तमानमित्यर्थः । साहसिक्ये तङ् । त्वरावान् त्वरायुक्तः । अतः शैलेन्द्र मा कस्यचिदशनपानादिकस्य उपस्कृथाः अतिशयवन्तं माकार्षीरित्यर्थः । माङि लुङ् । प्रतियत्ने तङ् । तनादिभ्यस्तथासोरिति सिचो लुक् । उपात्प्रतियत्न इति सुट् । कस्यचिदिति कृञः प्रतियत्न इति कर्मणि षष्ठी ॥

**योऽपचक्रे वनात्सीतामधिचक्रे न यं हरिः ।**
**विकुर्वाणः स्वरानद्य बलं तस्य निहन्म्यहम् ॥ २० ॥**

**य इत्यादि** ॥ यः सीतामपचक्रे अभिबभूव । अवक्षेपणे तङ् । वनादिति वनमुपगम्य । ल्यब्लोपे कर्मणि पञ्चमी । यं हरिरिन्द्रो नाधिचक्रे न प्रसेहे । अधेः प्रसहन इति तङ् । तस्य बलं दशाननस्य सामर्थ्यम् । कीदृशं स्वरान् विकुर्वाणं विविधान् स्वरान् कुर्वाणम् । वेः शब्दकर्मण इति तङ् । तस्य दशाननस्य बलं निहन्मि ॥

**विकुर्वे नगरे तस्य पापस्याद्य रघुद्विषः ।**
**विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥**

**विकुर्व इत्यादि** ॥ तस्य रघुद्विषो रामशत्रोः पापस्य नगरे पुर्यां अहमद्य विकुर्वे विविधं चेष्टे । अकर्मकाच्चेति तङ् । तत्र विकुर्वाणो यदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि । सम्माननेत्यादिना व्यये तङ् । यतो धर्मादिषु विनियोगो व्ययः । यशो वा उदानेष्ये ऊर्ध्वं नेष्यामि तस्यापकारकरणात् । अत्रोत्सञ्जने तङ् । उत्सञ्जनमुत्क्षेपणम् ॥

**विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि ।**
**इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥**

**विनेष्य इत्यादि** ॥ यदि वा क्रोधमात्मनो विनेष्ये अपनेष्यामि । कर्तृस्थे चेति तङ् । कर्तृस्थस्य क्रोधकर्मणोऽशरीरत्वात् अत्र व्ययो न सम्भवतीति । अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्तमानः । वृत्तिसर्गेत्यादिना वृत्तौ तङ् । वृत्तिरप्रतिबन्धः । इत्येवमुक्त्वा सूनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्सेहे । उपपराभ्यामित्यनेन सर्गे तङ् । सर्गं उत्साहः ॥

**परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।**
**दिवमाक्रममाणेव केतुतारा भयप्रदा ॥ २३ ॥**

**परीत्यादि** ॥ तस्य हनूमतो विक्रमं शौर्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे । पूर्ववत्तङ् । दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयङ्करा । आङ उद्गमन इति तङ् । तत्र हि ज्योतिरुद्गमन इत्युक्तम् । केतुतारायाश्च ज्योतिः स्वभावत्वात् ॥

**जले विक्रममाणाया हनूमान् शतयोजनम् ।**
**आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥**

**जल इत्यादि** ॥ विक्रममाणायाः पद्भ्यां विचरन्त्याः । वेः पादविहरण इति तङ् । जलग्रहणात् गतिविशेषं दर्शयति । आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणतः । तदणूभूय सूक्ष्मीभूय प्रविश्य निरगात् निर्गतः । उदरं विदार्येत्यर्थात् । अप्रचेतितः अविज्ञातः ॥

**द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम् ।**
**उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥**

**द्रष्टुमित्यादि** ॥ असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः । आदिकर्मणि यथा भोक्तुं प्रक्रमते इति । उदधेस्तटमुपाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः । ततश्च प्रोपयोरादिकर्मणि समानार्थत्वात् प्रोपाभ्यां समार्थाभ्यामिति तङ् । घोरैः रौद्रैः । निशाचरैराकुलं व्याप्तम् । तटं क्रममाणैः इतस्ततो गच्छद्भिः । अनुपसर्गाद्वेति तङ् ॥

**आत्मानमपजानानः शशमात्रोऽनयद्दिनम् ।**
**ज्ञास्ये रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः ॥ २६ ॥**

**आत्मानमित्यादि** ॥ माकश्चिदद्राक्षीदिति तथाविधमात्मानं शरीरमवजानानः अपह्नुवानः । अपह्नवेज्ञ इति तङ् । योहि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् । अनयद्दिनं अगमयद्दिवसम् । ज्ञास्ये रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानित्यर्थः । सम्प्रतिभ्यामनाध्यान इत्यात्मनेपदं लुङो भवति । आध्यानं चोत्कण्ठनम् । ज्ञास्ये इत्यकर्मकाच्चेत्यकर्मकक्रियावचनत्वादात्मनेपदम् । प्राज्ञः क्रियापटुरिति बुद्धिकौशलं कर्मकौशलं च दर्शयति ॥

**सञ्जानानान् परिहरन् रावणानुचरान् बहून् ।**
**लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमान् ॥ २७ ॥**

**सञ्ज्ञानानानित्यादि** ॥ रावणस्यार्थेषु कार्येषु ये चरन्तीति चरेष्टः । तान् बहून् सञ्ज्ञानानान् चेतयतः परिहरन् । अनाध्याने तङ् । रात्रौ लङ्कां समविशत् प्रविष्टवान् । अरिदुर्गमां राक्षसदुर्गमाम् । वदमानो भासमानः । भासनोपसम्भाषेत्यादिना आत्मनेपदम् ॥

**कश्चिन्नोपावदिष्टासौ केनचिद्व्यवदिष्ट न ।**
**शृण्वन्संप्रवदमानाद्रावणस्य गुणान् जनात् ॥ २८ ॥**

**कश्चिदित्यादि** ॥ असौ प्रविष्टः सन् न कश्चिदुपावदिष्ट उपसान्त्वितवान् । उपसम्भाषायां तङ् । केनचिद्व्यवदिष्टन न भाषितवान् । विमतौ तङ् । विमतिर्नानामतिः । संशृण्वन् आकर्णयन् । जनात् प्रवदमानात् । सम्भूय भाषमाणात् । रावणस्य सम्बन्धिनो गुणान् । व्यक्तवाचामित्यात्मनेपदम् । जनानां व्यक्तवाक्त्वात् ॥

**जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः ।**
**घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥**

**जल्पितेत्यादि** ॥ पूतक्रतोरिन्द्रस्य या पूः तस्या अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का । अनुशब्दः सादृश्ये । सदृशं वादं कृतवती । तैर्जल्पितादिभिः । उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् । लङ्केति तत्स्थो जन उच्यते । तेन व्यक्तवाग्विषयत्वात् अनोरकर्मकादिति तङ् । तत्र व्यक्तवाचामिति अनुवर्तते न समुच्चारण इति ॥

**ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः ।**
**तथावगिरमाणैश्च पिशाचैर्मांसशोणितम् ॥ ३० ॥**

**ऐदित्यादि** ॥ तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम । इणो लङि रूपम् । विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः । विप्रलापात्मके व्यक्तवाचां समुच्चारणे विभाषा विप्रलाप इति तङ् । तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिरतेरभ्यवहारार्थत्वादवाद्ग्र इति तङ् । मांसशोणितमिति जातिरप्राणिनामित्येकवद्भावः ॥

**यथास्वं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनो गुणान् ।**
**पानशौण्डाः पथः क्षीबा वृन्दैरुदचरन्त च ॥ ३१ ॥**

**यथास्वमित्यादि** ॥ ब्रह्मराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वामिनो गुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः । समः प्रतिज्ञान इति तङ् ।

पानशौण्डाः पानासक्ताः क्षीबा मत्ताः सन्तः पथो मार्गानुदचरन्त उत्क्रम्य गच्छन्ति स्म । उदश्चरः सकर्मकादिति तङ् । वृन्दैरिति सम्भूयेत्यर्थः ॥

**यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः ।**
**संप्रायच्छन्त बन्दीभिरन्ये पुष्पफलं शुभम् ॥ ३२ ॥**

**यानैरित्यादि** ॥ अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्चरन्ते स्म । समस्तृतीयायुक्तादिति तङ् । अन्ये बन्दीभिरानीताभिः । सम्प्रदाने तृतीया । अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वचनाद्बन्दीभ्य इत्यर्थः । पुष्पफलं शोभनं सम्प्रायच्छन्त ददति स्म । दाणश्च सा चेच्चतुर्थ्यर्थे इति तङ् । पुष्पफलमिति जातेरेकवद्भावः ॥

**कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवम् ।**
**प्रेम जिज्ञासमानाभ्यस्ताभ्योऽशप्सत कामिनः ॥ ३३ ॥**

**कोपादित्यादि** ॥ काश्चित् स्त्रियः कोपात् अन्यस्त्रीगमनजनितात् आसवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः । विभाषोपयमन इत्यकित्त्वपक्षे रूपम् । उपाद्यमः स्वकरण इति तङ् । पाणिग्रहणपूर्वस्य स्वीकरणस्य तत्र स्थितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यम् । समुदाङ्भ्यो यमो ग्रन्थ इति वा तङ् । उदाङ्पूर्वस्य यम आदानार्थत्वात् । अवसरप्राप्तं तु सूत्रद्वयमुदाहृतं स्यात् । प्रियैः प्रत्तं दत्तम् । अच उपसर्गात्तः । प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा न वेति कृतकोपप्रकारेण ज्ञातुमिच्छन्तीभ्यः । ज्ञाश्रुस्मृदृशां सन इति तङ् । ताभ्यो योषिद्भ्यः । कामिनः अशप्सत न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शनेन शपथंचक्रुः । शप उपालम्भने इत्यात्मनेपदम् । वाचा उपलम्भनं शरीरस्पर्शनम् । श्लाघन्हुङित्यादिना सम्प्रदानसंज्ञायां चतुर्थी । तासां ज्ञापयितुमिष्यमाणत्वात् ॥

**प्रादिदृक्षत नो नृत्यं नाशुश्रूषत गायनान् ।**
**रामं सुस्मूर्षमाणोऽसौ कपिर्विरहदुःखितम् ॥ ३४ ॥**

**प्रादिदृक्षतेत्यादि** ॥ असौ कपिर्लङ्कायां नो नृत्यं प्रादिदृक्षत । गायनान् गायकान् । गस्थकन् ण्युट् च । नाशुश्रूषत न श्रोतुमिष्टवान् । किमिति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्तुमिच्छन् । सन्नन्तेभ्यः पूर्ववदात्मनेपदम् । अज्झनगमां सनीति दीर्घत्वम् । उदोष्ठ्यपूर्वस्येत्युत्वम् ॥

**अनुजिज्ञासते वाथ लङ्कादर्शनमिन्दुना ।**
**तमोपहविमुक्तांशु पूर्वस्यां दिश्युदैयत ॥ ३५ ॥**

**अन्वित्यादि** ॥ अथैतस्मिन् प्रस्तावे इन्दुना चन्द्रेण उदैयत उदितम् । इणो भावे लङि रूपम् । पूर्वस्यां दिशीति पूर्णेनेति दर्शयति । दृश्यते यत् दर्शनं रूपम् । लङ्काया रूपमनुजिज्ञासतेव । पूर्वेण प्राप्तस्यात्मनेपदस्य नानोर्ज्ञ इति प्रतिषेधः । तमोपहास्तमोविध्वंसमानाः विमुक्ताः प्रेरिता अंशवो यस्मिन् उदय इति ॥

**आशुश्रूषन् स मैथिल्या वार्ता हर्म्येषु रक्षसाम् ॥**
**शीयमानान्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥**

**आशुश्रूषन्नित्यादि** ॥ स कपिर्मैथिल्याः सीताया वार्तामाशुश्रूषन् श्रोतुमिच्छन् । प्रत्याङ्भ्यां श्रुव इत्यात्मनेपदप्रतिषेधः । रक्षसां हर्म्येषु गृहेषु । समचारीत् संक्रान्तवान् । अतो लरान्तस्येति वृद्धिः । शीयमानान्धकारेषु अपगच्छत्तमःसु । शद्लृ शातने । शदेः शित इति तङ् । पाघ्रेति शीयादेशः । अशङ्कितः शङ्कारहितः ॥ ३६ ॥

**शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः ॥**
**ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणम् ॥ ३७ ॥**

**शतेत्यादि** ॥ मध्यमं मध्यप्रकोष्ठगतं आरक्षं गोपकं शतसाहस्रं रक्षसां लक्षमात्रं ददर्श विलोकितवान् । शतसहस्रं परिमाणमस्येति प्राग्वते. संख्यापूर्वपदानां तदन्तग्रहणमलुकीति वचनात् । शतमानविंशतिकेत्यादिना अणि संख्यायाः संवत्सरेत्युत्तरपदवृद्धि. । भीषणं भयानकं आसाद्य प्राप्य । कृतान्तोऽपि यमोऽपि । म्रियेत प्राणान् सन्त्यजेत् । म्रियतेर्लुङ्लिङोश्चेति तङ् । तत्र हि शित इत्यनुवर्तते ॥ ३७ ॥

**अध्यासिसिषमाणोऽथ वियन्मध्यं निशाकरे ॥**
**कासाञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८ ॥**

**अधीत्यादि** ॥ अथ निशाकरे चन्द्रमसि वियन्मध्यं अध्यासितुमारोढुमिच्छति सति । पूर्ववत्सन इत्यात्मनेपदम् । आस्तेरनुदात्तेत्त्वमात्मनेपदनिमित्तम् । तेनैव सन्नन्तादपि भवति । अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्वचनम् । पुरी लङ्का कासाञ्चक्रे शोभतेस्म । सौधैः सौधानां ज्योत्स्नया चोद्भास्यमानत्वात् । आम्प्रत्ययवदिति तङ् ॥

**इन्दुं चषकसंक्रान्तमुपायुङ्क्त यथामृतम् ॥**
**प्रयुञ्जानः प्रिया वाचः समाजानुरतो जनः ॥ ३९ ॥**

**इन्दुमित्यादि** ॥ एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतो जनः चषकसंक्रान्तं मद्यभाजने प्रतिबिम्बेन संक्रान्तमिन्दुमुपायुङ्क्त उपभुक्तवान् । प्रतिम्बिबावच्छिन्नस्य मद्यस्योपलक्ष्यमाणत्वादेवमुक्तम् । यथाऽमृतं अमृतमिव । प्रिया अनुकूला वाचः प्रयुञ्जानः अभिदधानः । प्रोपाभ्यामिति तङ् ॥

**संक्ष्णुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम् ।**
**ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥ ४० ॥**

**संक्ष्णुवान इत्यादि** ॥ रक्षसां तरुणो गणः उत्कण्ठां प्रियासु संस्मरणं संक्ष्णुवान इव समुत्तेजयन्निव । समः क्ष्णुव इति तङ् । ज्योत्स्नायां सुरां अलम्पर्याप्तमुपाभुङ्क्त अभ्याहृतवान् । भुजोऽनवन इति तङ् । विगलन्मानः ॥

**मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके ।**
**आत्मानं सुरताभोगविश्रम्भोत्पादनं मुहुः ॥ ४१ ॥**

**मध्वित्यादि** ॥ कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् । णेरणाविति तङ् । दयितान्तिके दयितस्य समीपे । सुरताभोगः सुरतविमर्दः । तत्र विश्रम्भः तस्योत्पादनं जनकम् । उत्पादयतीति कृत्यल्युटो बहुलमिति कर्तरि ल्युट् ॥

**अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः ।**
**अविस्मापयमानस्तान् कपिराटीद्गृहाद्गृहम् ॥ ४२ ॥**

**अभीषयन्तेत्यादि** ॥ एवं रक्षःसु यथायथं चेष्टमानेषु ये राक्षसा रणपण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त भीषितवन्तः । भीस्म्योर्हेतुभय इति तङ् । भियो हेतुभये षुक् । भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति । तानसौ कपिरविस्मापयमानः विस्मयमकारयन् । नित्यं स्मयतेरित्यात्वम् । गृहाद्गृहमाटीत् गतवान् । लुङि रूपम् ॥

**सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्धयत राक्षसान् ।**
**अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषाम् ॥ ४३ ॥**

**सीतामित्यादि** ॥ स कपिः सीतां दिदृक्षुः सीतां द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्धयत व्यामोहयत् । स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहितवान् । गृधिवञ्च्योः प्रलम्भन इति तङ् ॥

**अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः ।**
**मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः ॥ ४४ ॥**

**अपेत्यादि** ॥ तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्वतः । विभाषा लीयतेरित्यात्वे लियः सम्मानेत्यादिना शालिनीकरणे न्यग्भावने आत्मनेपदम् । म-

तिरभवत् । कीदृशीत्याह । मिथ्याकारयत इति । अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पुनः कारयति जागृत जागृतेति तां मिथ्या कारयते येनाहमविज्ञात एव प्रविष्टः । मिथ्योपपदात् कृञोऽभ्यास इति तङ् । अभ्यासश्च पुनः पुनः करणम् ॥

**गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।**
**नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥**

**गूहमान इत्यादि** ॥ स्वमाहात्म्यं स्वपराक्रमं गूहमानः आवृण्वन् । ऊदुपधाया गोह इत्यूत्त्वम् । स्वरितञित इति तङ् । अटित्वा मन्त्रिसंसदः शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ । कीदृशस्य नृभ्योऽपवादमानस्य कुप्यतः असूयतो वा । अपाद्वद इति तङ् । नृभ्य इति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥

कीदृशं गृहमित्याह ॥

**दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम् ।**
**श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् ॥ ४६ ॥**

**दिश इत्यादि** ॥ दिशः द्योतयमानाभिः भासयमानाभिः । णिचश्चेति तङ् । दिव्यनारीभिः उत्तमाभिः प्रधाननायिकाभिराकुलं व्याप्तम् । श्रियमनुत्तमामतिशयवती आयच्छमानाभिः स्वीकुर्वाणाभिः । समुदाङ्भ्य इति तङ् ॥

**नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्मसु ।**
**जानानाभिरलं लीलाकिलकिञ्चितविभ्रमान् ॥ ४७ ॥**

**नित्यमित्यादि** ॥ स्मरसम्भोगकर्मसु कामोपभोगक्रियासु । नित्यमुद्यच्छमानाभिः उत्सहमानाभिः । लीला जानानाभिः । अनुपसर्गाज्ज्ञः इति तङ् । पूर्ववत्तङ् । लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः । तथा चोक्तम् । विलासलीलाः किलकिञ्चितानि विव्वोकमोट्टायितविभ्रमाणि । विच्छित्तमाकुट्टिमितेक्षितानि योज्यानि तज्ज्ञैः सुकुमारनृत्त इति । लक्षणं चैषां नृत्यशास्त्रे ॥

**स्वं कर्म कारयन्नास्ते निश्चिन्तो या झषध्वजः ।**
**स्वार्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ ४८ ॥**

**स्वमित्यादि** ॥ स्वमात्मीयं मोहनादिकर्म दिव्यनारीः कारयन् अनुष्ठापयन् एष झषध्वजः कामदेवः निश्चिन्त आस्ते । ताभिराकुलमिति योज्यम् । हृक्रोरन्यतरस्यामिति द्विकर्मकता । यूनः स्वार्थं स्वप्रयोजनं मैथुनाख्यं कारयमाणाभिः आकुलम् । ताम्

हनूमानिति वक्ष्यमाणेन सम्बन्धः । कीदृशान् मदविमोहितान् मधुपानमदपरवशान् ताभिः॥

कीदृशीभिरित्याह ॥

**कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान् ।**
**नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥**

**कान्तिमित्यादि** ॥ स्वां कान्ति शोभां वहमानाभिः यजन्तीभिः । स्वविग्रहान् ददतीभिः कामिभ्यः । तत्र स्वं कर्मेति णिचश्चेत्यस्य विषयः । कान्ति स्वां स्वविग्रहानिति स्वरितेत इत्यस्य विषयः । विभाषोपपदेन प्रतीयमान इति विभाषा आत्मनेपदम् ॥ **इत्यात्मनेपदाधिकारः** ॥ **शेषभूतत्वात् परस्मैपदविधानमाह ।** नेत्रैरिति । पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिबन्तीभिरिव गृह्णन्तीभिरिव । शेषात्कर्तरि परस्मैपदम् ॥

**ता हनूमान् पराकुर्वन्नगमत् पुष्पकं प्रति ।**
**विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ ५० ॥**

**ता इत्यादि** ॥ ता दिव्यनारीः पराकुर्वन्नपक्षिपन् अगमत् । पुष्पकं प्रति पुष्पकविमानं प्रति । येन पुष्पकविमानेन जगाम । कीदृशं मन्दरस्याद्रेः श्रियमनुकुर्वदिव । अनुपराभ्यां कृञः कर्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥

**तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमम् ।**
**अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ ५१ ॥**

**तस्मिन्नित्यादि** ॥ तस्मिन् विमाने रावणमैक्षिष्ट । कैलाससङ्काशं कैलासतुल्यम् । शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य । भुजद्रुमं भुजा द्रुमा इव यस्य । तं पर्वतस्य श्रियोऽभिक्षिपन्तं अभिभवन्तम् । अभिप्रत्यतिभ्यः क्षिप इति परस्मैपदम् । तस्य स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदं प्राप्तम् ॥

**प्रवहन्तं सदामोदं सुप्तं परिजनान्वितम् ।**
**मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५२ ॥**

**प्रवहन्तमित्यादि** ॥ सदामोदं कस्तूरिकादिपरिमलं प्रवहन्तम् । प्राद्वह इति परस्मैपदं स्वरितेत्त्वात् । सुप्तं शयने संविष्टम् । परिजनान्वितं पारिपार्श्विकाधिष्ठितम् । मघोने इन्द्राय परिमृष्यन्तं असूयन्तम् । परेर्मृष इति परस्मैपदं मृषेः स्वरितेत्त्वात् । क्रुधद्रु-

हेति सम्प्रदानसंज्ञायां चतुर्थी । स्मरे कामे परमत्यर्थं आरमन्तं सक्तिं कुर्वाणम् । व्याङ्परिभ्यो रम इति परस्मैपदम् । रमेरनुदात्तेत्त्वात् ॥

**व्यरमत् प्रधनाद्यस्मात् परित्रस्तः सहस्रदृक् ।**
**क्षणं पर्यरमत्तस्य दर्शनान्मारुतात्मजः ॥ ५३ ॥**

**व्यरमदित्यादि** ॥ यस्माद्रावणात् सहस्रदृगिन्द्रः परित्रस्तः । भीत्रार्थानामित्यपादाने पञ्चमी । प्रधनात् युद्धात् व्यरमत् । उपरतव्यापारोऽभूत् । व्याङ्परिभ्यो रम इति परस्मैपदम् । जुगुप्साविरामप्रमादार्थानामपादाने पञ्चमी । तस्य दर्शनान्मारुतात्मजः हनूमान् क्षणं पर्यरमत् तुष्टिमानभवदित्यर्थः । साधु रावणेति । पूर्ववल्लङः परस्मैपदम् ॥

**उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात् ।**
**रम्यं मेरुमिवाधूतकाननं श्वसनोर्मिभिः ॥ ५४ ॥**

**उपेत्यादि** ॥ तं रावणं पश्यन् वानरः चिकीर्षितात्कर्तुमिष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः । उपाच्चेत्यधिकृत्य विभाषाकर्मकादिति लुङः परस्मैपदम् । तस्य मेरोरिव रम्यत्वात् यदाह मेरुमिव । श्वसनोर्मिभिः वातसमूहैः । आधूतकाननं प्रचलितवनं मेरुम् ।तथा श्वसितकल्लोलैः आधूतानि शिरांस्याननानि च यस्येति ॥

**दृष्ट्वा दयितया साकं रहीभूतं दशाननम् ।**
**नात्र सीतेत्युपारंस्त दुर्मना वायुसम्भवः ॥ ५५ ॥**

**दृष्ट्वेत्यादि** ॥ रहीभूतं विजनस्थं दशाननम् । अरुर्मनश्चक्षुरित्यादिना च्वौ सलोपः । दयितया साकं दृष्ट्वा नात्र सीतेति कृत्वा उपारंस्त विमना निवर्तते स्म । विभाषाकर्मकादिति तङ् । वायुसम्भवो हनूमान् ॥

**ततः प्राकारमारोहत् क्षपाटानविबोधयन् ।**
**नायोधयत् समर्थोऽपि सीतादर्शनलालसः ॥ ५६ ॥**

**तत इत्यादि** ॥ तत उत्तरकालं प्राकारमारोहत् आरूढवान् । क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् । णिचश्चेत्यात्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदम् ।बुधेरणौ सकर्मकस्य चित्तवत्कर्तृकत्वात् हनूमतश्चित्तवत्त्वात् । तत्र ह्यकर्मका ये तेषामचित्तवत्कर्तृत्वार्थमुपादानमित्युक्तम् । तान्नायोधयत् समर्थोऽपि न संग्रामितवान् । यतः सीतादर्शनलम्पटः । अणावकर्मकादित्यनेन उभयत्रापि लङः परस्मैपदम् । युधेरेकस्याचित्तवत्कर्तृकत्वात् ॥

**अध्यासीद्राघवस्याहं नाशयेयं कथं शुचम् ।**
**वैदेह्या जनयेयं वा कथमानन्दमुत्तमम् ॥ ५७ ॥**

**अध्यासीदित्यादि** ॥ राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाशयेयम् । कथं वा वैदेह्याः सीताया आनन्दं जनयेयमिति हनूमानध्यासीत् चिन्तितवान् । ध्यै-चिन्तायामित्यस्य लुङि रूपम् । नशिजन्योरकर्मकत्वात् अणावित्यनेन लिङः परस्मैपद-म् । न बुधेत्यादिना जनिजॄषित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वम् ॥

**दृष्ट्वा राघवकान्तां तां द्रावयिष्यामि राक्षसान् ।**
**तस्या हि दर्शनात्पूर्वं विक्रमः कार्यनाशकृत् ॥ ५८ ॥**

**दृष्ट्वेत्यादि** ॥ इयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि राक्षसान् पला-ययिष्यामि । अत्र अणावित्यनेन न बुधेत्यादिना तस्याकर्मकस्य चित्तवत्कर्तृकत्वात् । हि यस्मात् तस्याः सीताया दर्शनात्पूर्वं विक्रमः कार्यस्य सीतादर्शनरूपस्य नाशकृत् ॥

**चिन्तयन्नित्थमुत्तुङ्गैः प्रावयन्तीं दिवं वनैः ।**
**अशोकवनिकामारादपश्यत् स्तबकाचिताम् ॥ ५९ ॥**

**चिन्तयन्नित्यादि** ॥ इत्थं पूर्वोक्तप्रकारेण चिन्तयन्नारात्समीपे अशोकवनिकामप-श्यत् । उत्तुङ्गैरुच्चैर्वनैर्दिवमाकाशं प्रावयन्तीं व्याप्नुवानाम् । बुधयुधेत्यादिना तिप् । प्र-वतेरकर्मकस्याचित्तवत्कर्तृकत्वात् । अशोकवनिकायाश्चाचित्तवतीत्वात् । स्तबकाचिता अशोकपुष्पस्तबकैः च्छन्नाम् ॥

**तां प्राविशत् कपिव्याघ्रस्तरूनचलयन् शनैः ।**
**अत्रासयन् वनशयान् सुप्तान् शाखासु पक्षिणः ॥ ६० ॥**

**तामित्यादि** ॥ तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्र इव शनैर्मन्दं प्राविश-त् । तरूनचलयन् अकम्पयन् । चलेरकर्मकत्वाच्चित्तवत्कर्तृकादणावित्यनेन च लटः प-रस्मैपदं न निगरणेत्यादिना तद्धि तत्र सकर्मकार्थं अचित्तवत्कर्तृकार्थं चेत्युक्तम् । वनश-यान् पक्षिणः शाखासु सुप्तान् अत्रासयन् । अणावित्यनेन परस्मैपदम् । वने शेरत इति अधिकरणे शेतेरित्यच् । शयवासिष्वित्यादिना सप्तम्या विभाषा अलुक् ॥

**अवाद्वायुः शनैर्यस्यां लतां नर्तयमानवत् ।**
**नायासयन्त सन्त्रस्ता ऋतवोऽन्योन्यसम्पदः ॥ ६१ ॥**

**अवादित्यादि** ॥ यस्यामशोकवनिकायां वायुर्वातः शनैर्मन्दमवात् वाति स्म ।

तामाटेति वक्ष्यमाणेन सम्बन्धः । लतां नर्तयमानवत् नृत्यमिव कारयन् । नृतिश्चलने वर्तते ततश्च निगरणेत्यादिना परस्मैपदं प्राप्तं न पादमीत्यादिना प्रतिषिद्धम् । ऋतवोऽन्योन्यसम्पदं परस्परस्य विभूतिं नायासयन्त नोपपीडयन्ति स्म सन्त्रस्ता रावणात् । आङ्पूर्वाद्यसेः चित्तवत्कर्तृकत्वात् अणावित्यादिना परस्मैपदं प्राप्तं न पादमीत्यादिना प्रतिषिद्धम् ॥

**ज्योत्स्नामृतं शशी यस्यां वापीर्विकसितोत्पलाः ।**
**अपाययत सम्पूर्णः सदा दशमुखाज्ञया ॥ ६२ ॥**

**ज्योत्स्नेत्यादि** ॥ यस्यां रावणाज्ञया शशी सदा संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत पायितवान् । निगरणार्थत्वात्तिपि प्राप्ते न पादमीत्यादिना प्रतिषिद्धे णिचश्चेति तङ् ॥

**प्रादमयन्त पुष्पेषुं यस्यां बन्द्यः समाहृताः ।**
**परिमोहयमाणाभी राक्षसीभिः समावृताः ॥ ६३ ॥**

**प्रादमयन्तेत्यादि** ॥ यस्यां बन्द्यः समाहृताः समानीताः पुष्पेषुं कामं प्रादमयन्त शमितवत्यः तन्मतस्याचरणात् । कीदृश्यः परिमोहयमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः । दमिपरिमुह्योः अणावित्यादिना प्राप्तस्य परस्मैपदस्य न पादमीत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदम् ॥

**यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात् ।**
**न त्वरोचयतात्मानं चतुरो वृद्धिमानपि ॥ ६४ ॥**

**यस्यामित्यादि** ॥ रिपुर्दशाननः स्मरात् कामाद्धेतोः केवलं निष्फलं यस्यां सीतां वासयते स्म वासितवान् । न त्वरोचयत आत्मानं नैवात्मानमुपरोचितवान् । चतुरोऽपि योषिदाराधनकुशलोऽपि । वृद्धिमानपि सम्पद्युक्तोऽपि । रोचिवास्योरणावित्यादिना प्राप्तस्यापि च परस्मैपदस्य न पादमीति प्रतिषेधे णिचश्चेति तङ् ॥

**मन्दायमानगमनो हरितायत्तरूं कपिः ।**
**द्रुमैः शकशकायद्भिर्मारुतेनाट सर्वतः ॥ ६५ ॥**

**मन्देत्यादि** ॥ कपिः सर्वतः सर्वत्र तामाट विजहार । यत्तदोर्नित्यसम्बन्धात्तामिति गम्यते । मन्दायमानगमनः मन्दीभवद्गमनः । कीदृशी हरितायत्तरूं शाद्वलीभवद्वृक्षाम् । अप्राणिजातेश्चेत्यूङ् । द्रुमैरुपलक्षिताम् । कीदृशैः शकशकायद्भिः । शकस्वभावैः शकीभवद्भिः । केन मारुतेन । अत्रामन्दं मन्दं भवति अहरिता हरिता भव-

न्तीति लोहितादित्वात् क्यष्। अशकाः शका भवन्तीति वाक्ये अव्यक्तानुकरणादिति डाच्। तस्मिन्विषयभूते डाचि बहुलं द्वे भवतः। नित्यमाम्रेडिते डाचीति पररूपत्वम्। डाजन्तात् शकशकाशब्दात् क्यष्। वाक्यष इति परस्मैपदं आत्मनेपदं च॥

**अस्यन्दन्निन्दुमणयो व्यरुचन् कुमुदाकराः।**
**अलोठिषत वातेन प्रकीर्णाः स्तबकोच्चयाः॥ ६६॥**

**अस्यन्दन्नित्यादि**॥ चन्द्रोदयादिन्दुमणयः अस्यन्दन् स्यन्दन्ते स्म। तामाटेति योज्यम्। व्यरुचन् कुमुदाकराः विराजितवन्तः। स्तबकोच्चयाः गुच्छराशयः। वातेन प्रकीर्णाः इतस्ततो विक्षिप्ताः सन्तः अलोठिषत लुठन्ते स्म। सर्वत्र द्युद्भ्यो लुङीति विभाषा परस्मैपदम। द्युतादयश्च कृपूपर्यन्ताः॥

**सीतान्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम्।**
**पतत्रिणः शुभा मन्द्रमानुवानास्त्वजिह्लदन्॥ ६७॥**

**सीतेत्यादि**॥ सीतासमीपे विवृत्सन्तं वर्तितुमिच्छन्तं प्लवङ्गमं वर्त्स्यत्सिद्धिं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा यस्य। वृद्भ्यः स्यसनोरिति विभाषा तिप्। तं पक्षिणः शुभाः प्रशस्ता अजिह्लदन् सुखयन्ति स्म। णिचि लुङि चङि रूपम्। कीदृशाः मन्द्रं गम्भीरं मधुरमानुवाना वाश्यमानाः। आङि नुप्रच्छयोरुपसंख्यानमिति तङ्। णुस्तुताविल्यादादिकस्य परस्मैपदित्वात्॥

**वर्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके।**
**उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः॥ ६८॥**

**वर्तिष्यमाणमित्यादि**॥ सीतापि तदा तस्मिन् काले पत्यूरामस्यान्तिके आत्मानं वर्तिष्यमाणमिव उदपश्यत् उत्प्रेक्षते स्म। वृद्भ्यः स्यसनोरिति विभाषावचनात्तङ्। निमित्तैश्चक्षुःस्पन्दनादिभिः। तथ्यैरविसंवादिभिः। इष्टदर्शनैः इष्टार्थप्रकाशकैः। दर्शनमिति कृत्यल्युटो बहुलमिति कर्तरि ल्युट्॥

**निरवर्त्स्यन्न चेद्वार्ता सीताया वितथैव नः।**
**अकल्प्स्यदुद्यतिः सर्वा हनूमानित्यचिन्तयत्॥ ६९॥**

**आत्मनेपदाधिकारः।**

**निरवर्त्स्यन्नित्यादि**॥ चेदिति यद्यर्थे। यदि सीताया वार्ता न निरवर्त्स्यत् नेर्वृति नायास्यत् तदा वृथैव निष्फलैव नोऽस्माकमुद्यतिः सर्वा। अयमुद्यमः समुद्रलङ्घनादिकः। अकल्प्स्यत् अभविष्यत्। इत्येवं हनूमानचिन्तयत्। क्रियातिपत्तौ लृङ्।

त्र निरवत्स्यदिति वृद्भ्यः स्यसनोरिति विभाषापरस्मैपदम् । अकल्प्स्यदिति लुटि चक्लृप इति चकारात् स्यसनोरपि भवति विभाषापरस्मैपदम् । उद्यतिरिति यमेः स्त्रियां क्तिन् । अनुदात्तेत्यादिना अनुनासिकलोपः ॥ इत्यात्मनेपदाधिकारः ॥

इतः प्रभृति कारकमधिकृत्याह ॥

**वृक्षाद्वृक्षं परिक्रामन् रावणाद्बिभ्यतीं भृशम् ।**
**शत्रोस्त्राणमपश्यन्तीमदृश्यो जनकात्मजाम् ॥ ७० ॥**

**वृक्षादित्यादि** ॥ तां जनकात्मजां सीतां स कपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन सम्बन्धः । वृक्षात् वृक्षं परिक्रामन् गच्छन् । ध्रुवमपायेऽपादानमित्यपादानसंज्ञायां पञ्चमी । रावणात् बिभ्यती भृशं त्रस्यन्ती अत्यर्थं शत्रो रावणाद्रक्षामपश्यतीं यतो भयन्ततः कुतो रक्षेति । भीत्रार्थानामित्यपादानसंज्ञा । अदृश्यः प्रच्छन्नो भूत्वा । ऋदुपधेत्यादिना क्यप् ॥

**तां पराजयमानां स प्रीते रक्ष्यां दशाननात् ॥**
**अन्तर्दधानां रक्षोभ्यो मलिनां म्लानमूर्द्धजाम् ॥ ७१ ॥**

**तामित्यादि** ॥ प्रीतेः रावणसम्बन्धिन्याः पराजयमानां विमुखीभवन्तीम् । पराजेरसोढ इत्यपादानत्वम् । असोढोऽर्थः प्रीतिः । रक्ष्यां दशाननात् रावणविषये स्वयं निवार्यप्रसराम् । वारणार्थानामीप्सित इत्यपादानत्वम् । प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात् । अन्तर्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति । ततश्चान्तर्धौ येनादर्शनमित्यपादानसंज्ञा । अन्तर्धिनिमित्तं हि रक्षोभिरात्मनोदर्शनस्यानीप्सितत्वात् । मलिनां शरीरेण म्लानमूर्धजां मलिनकेशां बद्धवेणीत्वात् ॥

**रामादधीतसन्देशो वायोर्जातश्च्युतस्मिताम् ॥**
**प्रभवन्तीमिवादित्यादपश्यत् कपिकुञ्जरः ॥ ७२ ॥**

**रामादित्यादि** ॥ सत्कृत्य अधीतसन्देशो गृहीतसन्देशः कपिकुञ्जरः । आख्यातोपयोग इत्यपादानसंज्ञा । रामस्याख्यातृत्वात् । सावधानतया सन्देशग्रहणात् नियमपूर्वकविद्यावत्सन्देशग्रहणम् । वायोर्जात इति जनिकर्तुरित्यपादानसंज्ञा । जन्यर्थस्य जन्मनः कर्ता हनूमान् तस्य वायुः प्रकृतिः कारणम् । च्युतस्मितां शोकाक्रान्तत्वात् । प्रभवन्तीमिवादित्यात् । भुवः प्रभव इत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमत उपलभ्यमानत्वात् । अतः प्रभव आदित्यः तस्यास्तेजस्वित्वात् ॥

**रोचमानः कुदृष्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ॥**
**श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ ७३ ॥**

**रोचमान इत्यादि ॥** तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणः आगात् आगतः । रोचमानः कुदृष्टिभ्यः त्यक्तत्रयीधर्मत्वात् ये कुदृष्टयः कुबुद्धयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः । रुच्यर्थानां प्रीयमाण इति सम्प्रदानसंज्ञायां चतुर्थी । रुचेरभिलाषस्य तत्रावस्थानात् । कुदृष्टयः प्रीयमाणा । रक्षोभ्यः श्रियं विभूतिं प्रत्तवान् । कर्मणा यमभिप्रैतीति सम्प्रदानम् । ददातिक्रियया राक्षसानामभिप्रीयमाणत्वात् । श्लाघमानः परस्त्रीभ्यः युष्मद्विषयेऽस्माकं श्लाघेति परकलत्राणि ज्ञापयितुमेषयन् । श्लाघह्नुङित्यादिना सम्प्रदानत्वम् । श्लाघया बहुमानेन ज्ञापयितुमिष्यमाणत्वात्तासाम् ॥

**अशप्त निह्नुवानोऽसौ सीतायै स्मरमोहितः ॥**
**धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥**

**अशप्तेत्यादि ॥** सीतायै निह्नुवानः क्रौर्यादिकं न मेऽस्तीति सीतां ज्ञापयितुमेषयन्नित्यर्थः । तस्यै सीतायै अशप्यत् शपथं सीतां ज्ञापयितुमैषदित्यर्थः । किमित्येवमाह स्मरमोहितः । अत्र शपथापह्नुतिक्रियया सीतामाज्ञापयितुमिष्यमाणत्वात् पूर्ववत्सम्प्रदानसंज्ञा । किञ्चास्यै सीतायै स्वामिनीभूतायै वसूनि द्रव्याणि प्रत्यपद्यत अङ्गीकृतवान् । धारयन्निव गृहीतवित्त इव । अत्र धारेरुत्तमर्ण इति सीतायाः कयाचिदुत्तमर्णया तुल्यत्वात् ॥

**तस्यै स्पृहयमाणोऽसौ बहु प्रियमभाषत ॥**
**सानुनीतिश्च सीतायै नाक्रुध्यन्नाप्यसूयत ॥ ७५ ॥**

**तस्या इत्यादि ॥** असौ राक्षसाधिपः स्पृहयमाणः सीतामाप्तुमिच्छन् बहु प्रियमभाषत वक्ष्यमाणम् । स्पृहेरीप्सित इति स्पृहयतेः स्वार्थिकण्यन्तस्य प्रयोगे सीताया ईप्स्यमानत्वात् । सानुनीतिश्च सानुनयः सीतायै नाक्रुध्यत् तां प्रति कोपं न कृतवान् । नाप्यसूयत दोषाविष्करणलक्षणामसूयां न कृतवान् । क्रुध्यतिसूयत्योर्दिवादिकयोरुदात्तेन्ङितोर्लङि प्रयोगे क्रुधद्रुहेत्यादिना सम्प्रदानम् ॥

**संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे ॥**
**ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥ ७६ ॥**

**संक्रुध्यसीत्यादि ॥** किं त्वं शुभाशुभे दिदृक्षुं द्रष्टुमिच्छुं मां हे मृगेक्षणे संक्रुध्यसि । क्रुधद्रुहोरुपसृष्टयोः कर्मसंज्ञा क्रुधेरुपसर्गेण युक्तत्वात् । कुतस्ते परिज्ञानं

यत्परस्त्रीषु शुभाशुभं निरूपयसि अन्यत्र दुष्टाशयत्वात् । अथ कथं मृषा संक्रुध्यामीति चेदाह । ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमीक्षणीयं तदयं स्वधर्मो रक्षसाम् । राधीक्ष्योर्यस्य विप्रश्न इति सम्प्रदानसंज्ञा । यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात् ॥

**शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः ।**
**गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥**

**शृण्वद्भ्य इत्यादि** ॥ अनेनात्मनः प्रभावं दर्शयति । शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति । मध्यमाः प्रभवः प्रतिशृण्वन्ति ओमित्युपगच्छन्ति । हे भीरु नोत्तमा मादृशाः । ते हि स्वातन्त्र्यात्स्वयमेव हितं प्रतिपद्यन्त इति भावः । प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्तेति सम्प्रदानसंज्ञा पूर्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्तृत्वात् । अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुग्राह्यस्य भृत्यस्य कस्यचिन्न स्तुतिं कुर्वद्भ्यो मन्त्रिभ्यः अनुगृणन्ति तान् प्रोत्साहयन्ति । अनुगृणीत अनुगृणीतेति ममानुगतो भवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् । गृशब्द इत्यस्य प्रयोगे अनुप्रतिगृणश्चेति सम्प्रदानसंज्ञा । गृणातेः स्तुतिक्रियापेक्षया कर्तृत्वात् ॥

**इच्छ स्नेहेन दीव्यन्ती विषयान् भुवनेश्वरम् ।**
**सम्भोगाय परिक्रीतः कर्तास्मि तव नाप्रियम् ॥ ७८ ॥**

**इच्छेत्यादि** ॥ ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिनमिच्छ अङ्गीकरु । आत्मानमुद्दिश्य स्नेहेन प्रेम्णा । साधकतमं करणमितिकरणसंज्ञा । दीव्यन्ती क्रीडन्ती विषयान् शब्दादिभिरित्यर्थः । दिव' कर्म चेति करणसंज्ञापवादात् कर्मसंज्ञा । सम्भोगाय परिक्रीतः त्वद्विषयभोगेन परिक्रीत इत्यर्थ' । परिक्रयणे सम्प्रदानमिति सम्प्रदानत्वम् । तव नाप्रियं कर्तास्मि न करिष्यामि ॥

**आस्स्व साकं मया सौधे मा धिष्ठा निर्जनं वनम् ।**
**माधिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥**

**आस्स्वेत्यादि** ॥ मया साकं सार्धं सौधे धवलगृहे आस्स्व तिष्ठ । आसेर्लोटि रूपम् । आधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तमी । मा धिष्ठा निर्जनं वनम् '। अधिशीङ्स्थासां कर्मेत्यधिकरणे कर्मसंज्ञा । लुङि रूपम् । मा धिवात्सीः भुवं भूमौ मा शयिष्ठाः । माङि लुङि रूपम् । उपान्वध्याङ्वस इति अधिकरणे कर्मसंज्ञा । किन्तु शय्यामधिशेष्व । शीङो लोटि रूपम् । अधिशीङिति कर्मसंज्ञा । स्मरोत्सुका कामार्थिनी ॥

**अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः ।**
**तवाप्यध्यावसन्तं मां मारौत्सीर्हृदयं तथा ॥ ८० ॥**

**अभीत्यादि** ॥ यथैव त्वमव्याहता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः अभिनिविष्टासि । लुङि रूपम् । नेर्विश इति तङ् । अभिनिविशश्चेत्यधिकरणे मनसः कर्मसंज्ञा । तथा त्वमपि त्वद्धृदयमध्यावसन्तं मां मा रौत्सीः मा निवारय । रुधेर्लुङि रूपम् । उपान्वध्येति हृदयस्य कर्मसंज्ञा ॥

**मावमंस्था नमस्यन्तमकार्यज्ञे जगत्पतिम् ।**
**संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ॥ ८१ ॥**

**मेत्यादि** ॥ हे अकार्यज्ञे अविशेषज्ञे मां जगत्पतिं नमस्यन्तं मावमंस्थाः । लुङि रूपम् । कर्तुरीप्सिततममिति कर्मसंज्ञा । अवमानक्रियया कर्तृसम्बन्धिन्या जगत्पतेराप्तुमिष्टत्वात् । सन्दृष्टे मयि काकुत्स्थमधन्यं मन्दभाग्यं का कामयेत का इच्छेत् नैवेत्यर्थः । तथा युक्तं चानीप्सितमिति कर्मसंज्ञा । येनैव प्रकारेण कर्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात् ॥

**यः पयो दोग्धि पाषाणं स रामाद्भूतिमाप्नुयात् ।**
**रावणं गमय प्रीतिं बोधयन्तं हिताहितम् ॥ ८२ ॥**

**य इत्यादि** ॥ यथा पाषाणात् पयो न सम्भवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति । पयसः पूर्वेणैव कर्मसंज्ञा । पाषाणस्याकथितं चेत्यनेन । रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिम् । स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तम् । गतिबुद्धीत्यादिना कर्मसंज्ञा । गतिबुध्योरण्यन्तावस्थायां तयोः कर्तृत्वात् ॥

**प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम् ।**
**किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥**

**प्रीत इत्यादि** ॥ अहं प्रीतः सन् भुवनत्रयं तत्समुत्थं भोज्यं भोक्तुं योग्यं भवतीं भोजयिष्यामि । प्रत्यवसानार्थत्वात्कर्मसंज्ञा । प्रत्यवसानमभ्यवहारः । अकर्त्रभिप्राये णिचश्चेत्यात्मनेपदं न भवति । विलपन्तं विविधं भाषमाणं किं विलापयसेऽत्यर्थं नाहं त्वामिच्छामीति ब्रुवाणा । अत्र शब्दकर्मकत्वात् कर्मसंज्ञा । कर्त्रभिप्राये णिचश्चेत्यात्मनेपदम् । तस्मादिदं प्रार्थये पार्श्वे रावणं शायय । अत्राकर्मकत्वात्कर्मसंज्ञा ॥

**आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।**
**कः शक्रेण कृतं नेच्छेदधिमूर्द्धानमञ्जलिम् ॥ ८४ ॥**

इति कारकाधिकारः ॥

**आज्ञामित्यादि** ॥ रक्षांसि त्वदाज्ञां कुर्वन्त्येव कारय । प्रियाणि च त्वत्सम्बन्धीनि मामुपहरन्तमुपहारय उत्पादय । हृक्रोरन्यतरस्यामिति कर्मसंज्ञा । शक्रेण कृतं विरचितं अञ्जलिमधिमूर्द्धानं अधिगत' प्राप्तो मूर्द्धा येनेति । को नेच्छेत् स्वतन्त्र इति कर्तृसंज्ञा । शक्रेण प्रणतोऽहमित्यर्थः । प्रयोज्यकर्ता नोदाहृतोण्यन्तावस्थायामुदाहृतत्वात्॥

इति कारकाधिकारः ॥

इतः प्रभृति कर्मप्रवचनीयमधिकृत्याह ॥

**वचनं रक्षसां पत्युरनुक्रुद्धा पतिप्रिया ।**
**पापानुवसितं सीता रावणं प्राब्रवीद्वचः ॥ ८५ ॥**

**वचनमित्यादि** ॥ रक्षसां पत्यू रावणस्य वचनमनुलक्ष्यीकृत्य । अनुर्लक्षण इति कर्मप्रवचनीयसंज्ञायां द्वितीया । क्रुद्धा सती सीता । पतिप्रिया पतिः प्रियो यस्या इति । रावणं प्राब्रवीद्वचो वक्ष्यमाणम् । पापानुवसितं पापेन संयुक्तम् । तृतीयार्थ इत्यनेन कर्मप्रवचनीयसंज्ञायां द्वितीया । पापमन्ववसित इति । द्वितीयेति योगविभागात् सः सुप्सुपेति वा ॥

**न भवाननु रामं चेदुपशूरेषु वा ततः ।**
**अपवाह्य च्छलाद्वीरौ किमर्थं मामिहाहरः ॥ ८६ ॥**

**नेत्यादि** ॥ यदि भवान्नानुरामं रामान्न हीन इत्यर्थः । हीन इत्यनेन कर्मवप्रचीयसंज्ञा । अनुशब्दश्च स्वहीनार्थद्योतकः । हीनश्चोत्कृष्टापेक्षः । उपशूरेषु वा शूरेभ्यो वा यद्यधिको भवान् । उपोऽधिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा । यस्मादधिकमित्यनेन सप्तमी उपशब्दस्याधिकद्योतनात् । किमर्थं कनकमृगच्छलेन । वीरौ रामलक्ष्मणौ । अपवाह्य अन्यतो नीत्वा । मामिहाहरः लङ्कामानीतवान् ॥

**उपशूरं न ते वृत्तं कथं रात्रिश्चराधम ।**
**यत्संप्रत्यपलोकेभ्यो लङ्कायां वसतिर्भयात् ॥ ८७ ॥**

**उपेत्यादि** ॥ हे रात्रिश्चराधम कथं ते वृत्तं चरितं नोपशूरं शूरेभ्यो न हीनम् । उपोऽधिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा । यद्यस्मात् सम्प्रत्यधुना भयालङ्कायां जलपर्वतदुर्गायां वसतिः । वसेरतिवसिवर्तिभ्यश्चेत्यौणादिकः । अपलोकेभ्यो लोकान् वर्जयित्वा । अपपरी वर्जन इति कर्मप्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिभिरिति पञ्चमी ॥

**आरामदर्शनात् पाप विद्योतस्व स्त्रियः प्रति ।**
**सद्वृत्तानतु दुर्वृत्तः परिस्त्री जातमन्मथः ॥ ८८ ॥**

**आरामेत्यादि** ॥ हे पाप आरामदर्शनात् रामदर्शनं यावत् । आङ् मर्यादावचने इति पूर्ववत्पञ्चमी । स्त्रियः प्रति योषितो लक्ष्यीकृत्य । विद्योतस्व स्थिरो भव । स्त्रिय इति वाम्शसोरिति इयङ् । लक्षणेत्थंभूतेति कर्मप्रवचनीयत्वम् । सद्वृत्तानतु दुर्वृत्तः सदाचारिणामुपरि दुर्वृत्त इत्यर्थः । इत्थंभूताख्यानेऽनोः कर्मप्रवचनीयत्वम् । परिस्त्री जातमन्मथः । अत्र वीप्सायां कर्मप्रवचनीयत्वम् ॥

**अभिद्योतिष्यते रामो भवन्तमचिरादिह ।**
**उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥**

**अभीत्यादि** ॥ भवन्तमभि भवन्तं लक्ष्यीकृत्य । अभिरभाग इति कर्मप्रवचनीयत्वम् । अचिरादिह लङ्कायां रामो द्योतिष्यते असह्यतेजा भविष्यति । य उद्गूर्णबाणः । उद्यतबाणः । सङ्ग्रामे नारायणतः प्रति तेन तुल्यः । प्रतिः प्रतिनिधिप्रतिदानयोरिति प्रतिनिधौ कर्मप्रवचनीयत्वम् । प्रतिनिधिप्रतिदाने च यस्मादिति पञ्चमी । प्रतियोगे पञ्चम्यास्तसिः । मुख्यसदृशः प्रतिनिधिः ॥

**कुतोऽधियास्यसि क्रूर निहतस्तेन पत्रिभिः ।**
**न सूक्तं भवतात्युग्रमतिरामं मदोद्धत ॥ ९० ॥**

**कुत इत्यादि** ॥ हे क्रूर तेन रामेण उद्गूर्णबाणेन पत्रिभिः शरैः निहतः **सन्** कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यसि । अधिपरी अनर्थकाविति अधेः कर्मप्रवचनीयसंज्ञा । धात्वर्थव्यतिरेकेणार्थस्यानभिधानादनर्थकत्वम् । संज्ञा च गत्युपसर्गसंज्ञाबाधनार्था । तेन तिङि चोदात्तवतीति निघाताभावो द्रष्टव्यः । पञ्चमी च प्रश्नाख्यानयोरित्युपसंख्यानात् भवति । किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तम् । सुः पूजायामिति कर्मप्रवचनीयत्वम् । गतिरनन्तर इति स्वराभावः । अत्युग्रमतिरौद्रम् । अतिरामं राममधिक्षिप्य । काकुत्स्थमधन्यमिति । अतिरतिक्रमणे चेतिकर्मप्रवचनीयत्वम् । चकारात्पूजायां च तत्र चाप्युक्तमिति प्रयोगः । हे मदोद्धत ॥

**परिशेषं न नामापि स्थापयिष्यति ते विभुः ।**
**अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥९१ ॥**

**परीत्यादि** ॥ रामो विभुः प्रभुः ते परिशेषं नामापि संज्ञामपि न स्थापयिष्यति किमु देहम् । अपिः पदार्थेत्यादिना पदार्थे कर्मप्रवचनीयसंज्ञा । पदस्य देहस्याप्रयुज्य-

मानस्यार्थे अपिशब्दो वर्तते । अपि स्थाणुं जयेद्रामो यमाराध्याधिपत्यं प्राप्तवानसि तमपि स्थाणुं महादेवं जेतुं सम्भाव्यते भवतो ग्रहणं कियत् । वस्त्वेव न भवति । अत्र संभावनायां कर्मप्रवचनीयत्वम् । सम्भावने लिङ् । उपसर्गबाधनत्वात्संज्ञाया उपसर्गात्सुनोतीत्यादिना षत्वं न भवति ॥

**अपि स्तुह्यपिसेधास्मांस्तथ्यमुक्तं नराशन ।**
**अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः ॥ ९२ ॥**

**अपीत्यादि** ॥ हे नराशन मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति । अस्मानपि स्तुहि साधूक्तमिति प्रशंस । सेर्ह्यपिच्चेति अपिति ङित्त्वाद्गुणाभावः । अपिसेध निगृह्णाण यथेच्छं तथा क्रियतां मया तु सत्यमेवोक्तमिति भावः । अत्रान्ववसर्गे कामचारानुज्ञाने कर्मप्रवचनीयसंज्ञा । किञ्च कृशानावग्नौ दर्पं अपि सिञ्चेः क्षरेस्त्वम् । अत्र गर्हायां लिङि रूपम् । योऽयं मय्यपि मद्विषयेऽपि अभिकः कामयिता । अनुकाभिकेत्यादिना निपातितः । उपसर्गसंज्ञाबाधनार्थत्वात् स्तौतिसेधिसिचां षत्वं न भवति ॥

**अधिरामे पराक्रान्तमधिकर्ता स ते क्षयम् ।**
**इत्युक्त्वा मैथिली तूष्णीमासाञ्चक्रे दशाननम् ॥ ९३ ॥**

**अधीत्यादि** ॥ पराक्रान्तस्य शौर्यस्य राम ईशितेत्यस्मिन्नर्थे अधिरामे पराक्रान्तम् । नपुंसके भावे क्तः । अधिरीश्वर इति स्वस्वामिसम्बन्धे अधेः कर्मप्रवचनीयसंज्ञा । यस्मादधिकमित्यादिना सप्तमी । यश्चैवं स रामस्ते क्षयमधिकर्ता करिष्यति । अत्र कर्मण्येव द्वितीया । न कर्मप्रवचनीययुक्त इति विभाषा कृञीति या संज्ञा तस्या गत्युपसर्गसंज्ञाबाधनार्थत्वात् । संज्ञापक्षे तिङि चोदात्तवतीति निघाताभावो द्रष्टव्य इति । एवमुक्त्वा दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती ॥

इति कर्मप्रवचनीयाधिकारः ॥

इतः प्रभृत्यनभिहित इत्यधिकृत्य विभक्तिविधानमाह ॥

**ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः ।**
**वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥ ९४ ॥**

**तत इत्यादि** ॥ ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य कर्मणि द्वितीया । क्रूरविग्रहः दुष्प्रेक्ष्यत्वात् । वैदेहीमन्तरा क्रुद्धः वैदेह्या वधे कुपितः । अन्तरान्तरेण युक्त इति षष्ठ्यपवादाद्द्वितीया । अन्तरा शब्दो मध्यमाधेयप्रधानमाचष्टे आधेयश्चात्र वधः । क्षणमूचे उक्तवान् उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् कालाध्वनोरिति द्वितीया । विनिश्वसन् क्रोधात् ॥

**चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी ।**
**न मासे प्रतिपत्तासे मां चेन्मर्तासि मैथिलि ॥ ९५ ॥**

**चिरेणेत्यादि** ॥ हे मैथिलि चिरेणापि कालेनानुगुणमनुकूलं मया प्रोक्तापि सती प्रतिपत्तिपराङ्मुखी । उक्तस्यार्थस्यानुष्ठानं प्रतिपत्तिः तस्या पराङ्मुखी । इदानीं यदि त्वं मासे त्रिंशद्दिवसलक्षणे मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्तासि मरिष्यसि । उभयमपि लुटि रूपम् । तत्र चिरेण प्रोक्तेत्यपवर्गे तृतीया । विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्ग इति । मां मासेन प्रतिपत्तास इति सप्तमीपञ्चम्यौ कारकमध्य इति सप्तमी । कर्मकर्त्रोः कारकयोर्मध्यत्वात् मासस्य ॥

**प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन् ।**
**भयानि दत्त सीतायै सर्वा यूयं कृते मम ॥ ९६ ॥**

**प्रायुङ्क्तेत्यादि** ॥ रावणो राक्षसीर्भीमा भयानकाः प्रायुङ्क्त समादिष्टवान् लङि रूपम् । मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन् । गत्यर्थकर्मणीत्यादिना तु चतुर्थी । कर्मप्रवचनीयादिसूत्रचतुष्टयेनोदाहृतं कर्मप्रवचनीयाधिकार एव दर्शितत्वात् । किमादिशदित्याह । सर्वा यूयं सीतायै भयानि दत्त । लोटि रूपम् । चतुर्थी सम्प्रदाने । सम्पूज्याहृत्य प्रकर्षेण दीयत इति सम्प्रदानम् । मम कृते मदनुग्रहनिमित्तम् ॥

**गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीम् ।**
**राक्षस्यो रावणप्रीत्यै क्रूरं चोचुरलं मुहुः ॥ ९७ ॥**

**गत इत्यादि** ॥ तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूय गताः । समो गम्यृच्छीत्यादिना आत्मनेपदं न भवति आङा व्यवहितत्वात् । मैथिलीं प्रति लक्ष्यीकृत्य भयाय सीतायै भयं दातुम् । क्रियार्थोपपदस्य कर्मणि स्थानिन इति चतुर्थी । ददाते. क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म । क्रिया चात्र समागमः । तत्रोपपदं क्रियार्थमिति । क्रूरं च भयानकम् । मुहुः प्रतिक्षणं अलं पर्याप्तमूचुः उक्तवत्यः । रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति । तुमर्थाच्च भाववचनादिति चतुर्थी । क्रियायां क्रियार्थायामिति । तुमुना समानार्थत्वात् भाववचनाश्चेत्यनेन विहितस्य क्तिनः क्रियार्थ उपपदं क्रूराभिधानम् ॥

**रावणाय नमस्कुर्याः स्यात्सीते स्वस्ति ते ध्रुवम् ।**
**अन्यथा प्रातराशाय कुर्याम त्वामलं वयम् ॥ ९८ ॥**

**रावणायेत्यादि** ॥ हे सीते रावणाय नमस्कुर्या रावणं नमस्कुरु । एवं च स-

ति ते तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् । युष्मच्छब्दस्य चतुर्थ्येकवचनान्तस्य ते आदेशः । नमस्कृत्वेति पाठान्तरम् । तत्र नमस्कृत्वा स्थितायै तुभ्यमित्यध्याहृत्य योज्यं अन्यथा ह्यसमानकर्तृकत्वात् क्त्वाप्रत्ययो न घटते । नमस्कृत्येति पाठान्तरं साक्षात्प्रभृतिषु नमःशब्दस्य विकल्पेन गतिसंज्ञा । गत्यभावपक्षे नित्यं गतिसमासाभावे ल्यबादेशः । नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारादेशश्च न सम्भवतीति । अन्यथेति यदि न नमस्कुर्याः तदा अलम्प्रातराशाय प्रातर्भोजनाय त्वा कुर्याम वयमित्यूचुः । नित्यं ङित इति सलोपः । रावणायेत्यादिषु नमःस्वस्तीत्यादिना चतुर्थी ॥

**तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटावदत् ।**
**आत्मानं हत दुर्वृत्ताः स्वमांसैः कुरुताशनम् ॥ ९९ ॥**

**तृणायेत्यादि** ॥ अथानन्तरं राक्षसीर्वदन्तीः त्रिजटा रावणस्वसा अवदत् उक्तवती । तृणाय मत्वा तृणमिव संगणय्य । मन्यकर्मण्यनादर इति चतुर्थी । तत्र कुत्सितग्रहणं कर्तव्यमित्युक्तम् । इह माभूत् तृणं मत्वेति । किमवदत् आत्मानं हत मारयत । दुर्वृत्ताः दुराचाराः । स्वमांसैः कुरुताशनमिति करणे तृतीया ॥

किमर्थमेवमाहेत्याह ॥

**अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह ।**
**स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥**

**अद्येत्यादि** ॥ स्वप्ने मया अद्य सीता दृष्टा । कर्तरि तृतीया । सूर्यं स्पृशन्ती चन्द्रमसा सह । सहयोगे तृतीया । सूर्याचन्द्रमसाविति रामलक्ष्मणाविति भाव । मध्येन तनुः तन्वी । इत्थंभूतलक्षणे तृतीया । वोतो गुणवचनादिति ङीबभावपक्षे रूपम् । श्यामा वर्णेन । सुलोचना शोभननेत्रा ॥

**तास्तया तर्जिताः सर्वा मुखैर्भीमा यथागतम् ।**
**ययुः सुषुप्सवस्तल्पं भीमैर्वचनकर्मभिः ॥ १०१ ॥**

**ता इत्यादि** ॥ ता राक्षस्यस्तया त्रिजटया तर्जिता भर्त्सिताः । सुषुप्सव स्वप्तुमिच्छवस्तल्पं शयनीयं ययुर्गताः । यथागतं यतो यतस्तल्पादुत्थायागता । यथासादृश्य इति वीप्सायामव्ययीभावः । मुखैर्भीमा रौद्राः । मुखानां विकृतत्वात् । येनाङ्गविकार इति तृतीया । भीमैर्वचनकर्मभिः उपलक्षिता. । इत्थंभूते तृतीया ॥

**गतासु तासु मैथिल्या संजानानोऽनिलात्मजः ।**
**आयातेन दशास्यस्य संस्थितोऽन्तर्हितश्चिरम् ॥ १०२ ॥**

**गतास्वित्यादि** ॥ तासु राक्षसीषु गतासु । अनिलात्मजो हनूमान् । रामसङ्क-

थां प्रास्तावीदिति वक्ष्यमाणेन सम्बन्धः । मैथिल्या सञ्जानानः इयं सेत्यवगच्छन् । संज्ञोऽन्यतरस्यामिति कर्मणि तृतीया । सम्प्रतिभ्यामिति तङ् । दशास्यस्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीनः स्थितः । हेताविति तृतीया ॥

**ऋणाद्बद्ध इवोन्मुक्तो वियोगेन क्रतुद्विषः ।**
**हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसङ्कथाम् ॥ १०३ ॥**

**ऋणादित्यादि** ॥ ऋणाद्धेतोर्बद्धः इवोन्मुक्तो यथा स्थानान्तरं गतवान् । अकर्तर्यृण इति पञ्चमी । ऋणस्याकर्तृहेतुत्वात् । ऋणेन बन्धित इवेति नोक्तं अप्रयोजककर्तृत्वादृणस्य । उन्मुक्तः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण । विभाषा गुणेऽस्त्रियामिति पक्षे तृतीयोदाहृता न पञ्चमी वियोगस्य गुणपदार्थत्वात् । किमिति सङ्कथां प्रास्तावीदित्याह । हेतोर्बोधस्य मैथिल्याः । एष रामदूत इति मैथिल्या बोधोऽवगमः स्यात् । षष्ठी हेतुप्रयोगे इति बोधशब्दस्य षष्ठी । प्रास्तावीदिति स्तुसुधूञ्भ्यः परस्मैपदेष्विवतीट् । नेटीति हलन्तलक्षणाया वृद्धेः प्रतिषेधः । नेगन्तलक्षाणायाः ॥

**तं दृष्ट्वा चिन्तयत्सीता हेतोः कस्यैष रावणः ।**
**अवरुह्य तरोरारादैति वानरविग्रहः ॥ १०४ ॥**

**तमित्यादि** ॥ तं हनूमन्तं रामं स्तुवन्तं दृष्ट्वा सीता अचिन्तयत् । कस्य हेतोः रावणो वानरविग्रहः सन् ऐति आयाति । आङ्पूर्वस्येणो रूपम् । सर्वनाम्नस्तृतीया चेति षष्ठी किंशब्दस्य सर्वनामत्वात् । आरात् अन्तिके । तरोरिति अन्यारादित्याराच्छब्दयोगे पञ्चमी । अवरुह्यावतीर्येति । अवरोहणापेक्षया ह्यपादाने पञ्चमी । अपेक्षाया यौगपद्याभावादुपपदविभक्तेः कारकविभक्तिर्बलीयसी आराद्योगे न वर्तते ॥

**पूर्वस्मादन्यवद्भाति भावाद्दाशरथिं स्तुवन् ।**
**ऋते क्रौर्यात्समायातो मां विश्वासयितुं नु किम् ॥ १०५ ॥**

**पूर्वस्मादित्यादि** ॥ पूर्वस्माद्रावणादन्यवद्भाति ज्ञायते । अन्येन तुल्यं वर्तत इति कृत्वा अन्यशब्दयोगे पञ्चमी । यतो भावात् स्नेहाद्दाशरथिं स्तुवन् । किंनु क्रौर्यादृते क्रौर्यं वर्जयित्वा । ऋतेशब्दयोगे पञ्चमी । मां विश्वासयितुं सम्भावयितुं किमागत इत्यचिन्तयत् ॥

**इतरो रावणादेष राघवानुचरो यदि ।**
**सफलानि निमित्तानि प्राक् प्रभातात्ततो मम ॥ १०६ ॥**

**इतर इत्यादि** ॥ यदि रावणादितरः प्रतियोगी । राघवानुचरः राघवार्थकारी ।

इतरयोगे पञ्चमी । ततो मम सफलानि स्वप्नलक्षणानि दर्शनादीनि निमित्तानि । प्राक् प्रभातात् आदित्योदयात्पूर्वस्मिन् काले । अन्यस्य हि प्रभातादुत्तरकालं सफलानि । अञ्चूत्तरपदयोगे पञ्चमी ॥

**उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरम् ।**
**अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम् ॥ १०७ ॥**

**उत्तराहीत्यादि** ॥ रामदूतोऽयमिति न सम्भाव्यते । यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः । आहि च दूरे उत्तराच्चेति । तत्राहिप्रत्ययान्तेन उत्तराहिशब्देन योगे समुद्रादिति पञ्चमी । लवणतोयस्य लवणसमुद्रस्य दक्षिणतो दक्षिणस्यां दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत् ज्ञातवान् । दक्षिणत इति दक्षिणोत्तराभ्यामतसुच् । तदन्तेन योगे षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी ॥

**दण्डकान् दक्षिणेनाहं सरितोऽद्रीन् वनानि च ।**
**अतिक्रम्याम्बुधिं चैव पुंसामगममाहृता ॥ १०८ ॥**

**दण्डकानित्यादि** ॥ दण्डकानामदूरे या दक्षिणा दिक् तस्यामिति एनबन्यतरस्यामिति सप्तम्यन्तादेनप् प्रत्ययः । तदन्तेन योगे एनपा द्वितीयेति द्वितीया । दक्षिणेन दण्डकानां दक्षिणस्यां दिशि । सरितोऽद्रीन् वनानि च अम्बुधि चातिक्रम्य पुंसामगममगम्यम् । ग्रहवृदृनिश्चिगमश्चेत्यप् । अहमाहृता आनीता । तत्कथमवैदित्यचिन्तयत् ॥

**पृथक् नभस्वतश्चण्डाद्वैनतेयेन वा विना ।**
**गन्तुमुत्सहते नेह कश्चित् किमुत वानरः ॥ १०९ ॥**

**पृथगित्यादि** ॥ नभस्वतो वातात् चण्डात् पृथक् वायुं त्यक्त्वा । वैनतेयेन वा विना गरुडं वा वर्जयित्वा । पृथग्विनेत्यादिना तृतीयापञ्चम्यौ । इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः ॥

**इति चिन्तावतीं कृच्छ्रात् समासाद्य कपिद्विपः ।**
**मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः ॥ ११० ॥**

**इतीत्यादि** ॥ एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनूमान् । कृच्छ्रात्समासाद्य कथमप्युपगम्य । अहं रामकिङ्करः रामप्रेषणकर इति प्रोचे । मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्तृभिः । करणे च स्तोकाल्पेत्यादिना तृतीयापञ्चम्यौ । कृच्छ्रस्तोकयोरसत्त्ववचनयोः करणत्वात् ॥

यदि त्वं रामकिङ्करः कासावित्याह ॥

**विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्वतात् ।**
**नानभ्याशे समुद्रस्य तव माल्यवति प्रियः ॥ १११ ॥**

**विप्रेत्यादि** ॥ माल्यवति पर्वते तव प्रियो रामः महेन्द्रस्य पर्वतस्य विप्रकृष्टं दूरं विन्ध्यपर्वताच्च न दूरम् । दूरान्तिकार्थैः षष्ठयन्यतरस्यामिति षष्ठीपञ्चम्यौ । महेन्द्रपर्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु दूरान्तिकार्थेभ्यो द्वितीया चेति द्वितीया । नानभ्याशे न दूरे समुद्रस्य । दूरान्तिकार्थैरिति षष्ठी । माल्यवति सप्तम्यधिकरणे चेति सप्तमी । चकाराद्दूरान्तिकार्थेभ्यश्च । तेनानभ्याश इति सप्तमी ॥

**असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् ।**
**तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥**

**असम्नित्यादि** ॥ दशवदने असंप्राप्ते अप्रविष्टे अहमचेत्तितः सन् इदं वनमशोकवनिकाख्यं प्रविष्ट इति । तस्मिन् प्रतिगते त्वां द्रष्टुमुपाक्रंसि समुत्सहे स्म । यस्य च भावेनेति सप्तमी । कपेः प्रवेशोपक्रमयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् । उपाक्रंसीति उपपराभ्यामित्यनेन वृत्त्यादिषु सर्ग उत्साहे क्रमेस्तङ् । उत्तमपुरुषैकवचनम् । स्नुक्रमोरनात्मनेपदनिमित्त इति सिन् इट् न भवति ॥

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसीत्याह ॥

**तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि विक्रमम् ।**
**अविनाशाय कार्यस्य विचिन्वानः परापरम् ॥ ११३ ॥**

**तस्मिन्नित्यादि** ॥ हे देवि तस्मिन् वदति रुष्टोऽपि विक्रमं नाकार्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः । षष्ठीचानादर इति चकारात्सप्तमी । किमर्थं कार्यस्य सन्देशकथादेरविनाशाय । विचिन्वानः परापरं पौर्वापर्यं निरूपयन् । कर्त्रभिप्राये तङ् ॥

कथं वानरस्त्वं तस्य किङ्कर इत्याह ॥

**वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा ।**
**जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ ११४ ॥**

**वानरेष्वित्यादि** ॥ वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतेः रामस्य सखा जातः । स्वामीश्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता । ततोऽहं दूत आगतः ॥

आगत्य च लङ्कां प्रविश्य इहायात इत्याह ॥

**ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम् ।**
**कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्मणि ॥ ११५ ॥**

**ईश्वरस्येत्यादि** ॥ निशाटानां राक्षसानामीश्वरस्य दशाननस्य । अत्र षष्ठ्युदाहृता । पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्तत इति । प्राप्त इति वक्ष्यमाणेन सम्बन्धः । कुशलोऽन्वेषणस्याहं सीताया अन्वेषणस्य निपुणः । आयुक्तो दूतकर्मणि दूतक्रियायां व्यापृतः । आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ ॥

**दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः ।**
**प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥ ११६ ॥**

**दर्शनीयेत्यादि** ॥ तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् । यतश्च निर्द्धारणमिति सप्तमी । दर्शनीयतमत्वेन गुणेन पृथक्करणात् । भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन् । पञ्चमी विभक्त इति पञ्चमी । भुजङ्गेभ्यो राक्षसानां विभागात् । प्राप्तो देव्याः पादमूलमित्यर्थात् ॥

किमवस्थो राम इत्याह ॥

**भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते ।**
**मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत् ॥ ११७ ॥**

**भवत्यामित्यादि** ॥ भवत्यां त्वयि उत्सुकः उन्मनाः रामः । तव सङ्गमेन प्रसितः प्रसक्तः । प्रसितोत्सुकाभ्यां तृतीया चेति चकारात्सप्तमी । मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसो वर्तमानत्वात् । नक्षत्रेण युक्तः काल इत्यण् । तस्य लुबविशेष इति लुप् । तस्मिन् काले पितृभ्यः कृतनिर्वापः दत्तदानः मां व्यसर्जयत् । नक्षत्रे च लुपीति सप्तमी । तत्रापि लुपि युक्तवद्व्यक्तिवचन इति स्त्रीलिङ्गबहुवचने भवतः । व्यसर्जयदिति विशब्दात् प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा ॥

सन्देहनिवृत्त्यर्थं चाभिज्ञानं दर्शयन्नाह ॥

**अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुलीयकः ।**
**भवत्याः स्मरतात्यर्थमर्पितः सादरं मम ॥ ११८ ॥**

**अयमित्यादि** ॥ काकुत्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गाधिके प्रातिपदिकमात्रे प्रथमा । मैथिलीति सम्बोधनादिके सम्बोधनेचेति । सामन्त्रितं

सम्बुद्धिश्चात्रैव द्रष्टव्यम् । काकुत्स्थस्येति षष्ठी शेष इति षष्ठी । भवत्या अत्यर्थं स्मरता सादरमर्पितम् । अधीगर्थेत्यादिना स्मरणार्थे कर्मणः शेषविवक्षायां षष्ठी ॥

**रामस्य दयमानोऽसावध्येति तव लक्ष्मणः ।**
**उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः ॥ ११९ ॥**

**रामस्येत्यादि** ॥ असौ लक्ष्मणो रामस्य दयमानो रामं रक्षन् शुचं मा कार्षीरिति । दयतेः कर्मणि षष्ठी । तवाध्येति त्वां स्मरति । अधीगर्थेति षष्ठी । आश्वासनार्थमाह मा त्रसीः उद्वेगं मा कार्षीः । त्रसेरीदित्वान्निष्ठायामिट्प्रतिषेधात् सिच इट् भवति । यतो राजेन्द्रौ रामलक्ष्मणौ । इहागमस्यागमनस्य । भावे अप् । उपास्कृषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात् तेन कृञः प्रतियत्न इति कर्मणि षष्ठी । प्रतियत्ने लुङ् तङ् सुट् ॥

**रावणस्येह रोक्ष्यन्ति कपयो भीमविक्रमाः ।**
**धृत्या नाथस्व वैदेहि मन्योरुज्जासयात्मनः ॥ १२१ ॥**

**रावणस्येत्यादि** ॥ इह लङ्कायां कपयो भीमविक्रमाः असह्यपराक्रमाः रावणस्य रोक्ष्यन्ति सरोगं रावणं करिष्यन्ति । भीमविक्रमा इति गुणप्रधानो निर्देशः । ततश्च विक्रमे रुजः भावकर्तृकत्वात् रुजार्थानां भाववचनानामज्वर इति षष्ठी । अतो वैदेहि धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः । आशिषि नाथ इति कर्मणि षष्ठी । आशिषि नाथ इत्युपसंख्यानात्तङ् । मन्योरुज्जासयात्मनः मन्युं नाशय । जसु हिंसायां ताडने चौरादिकस्य हिंसार्थत्वात्तेन जासिनिप्रहणेति कर्मणि षष्ठी ॥

**राक्षसानां मयि गते रामः प्रणिहनिष्यति ।**
**प्राणानामपणिष्टायं रावणस्त्वामिहानयन् ॥ १२१ ॥**

**राक्षसानामित्यादि** ॥ मयि गते रामो राक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति । पूर्ववत् कर्मणि षष्ठी । निप्रहण इति सङ्घातविगृहीतविपर्यस्तग्रहणमित्युक्तम् । नेर्गदेत्यादिना णत्वम् । किंच प्राणानामपणिष्टायमिति अयं रावणस्त्वामिहानयन् प्राणानपणिष्ट विक्रीतवान् । व्यवहृपणोः समर्थयोरिति षष्ठी । प्राणानामपणायिष्टेति पाठान्तरं तदयुक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययो न भवति ॥

**अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदम् ।**
**शतकृत्वस्तवैकस्याः स्मरत्यन्हो रघूत्तमः ॥ १२२ ॥**

**अदेवीदित्यादि** ॥ न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान्

विक्रीतवान् । दिवस्तदर्थस्येति षष्ठी । दिवो व्यवहारार्थत्वात् । प्रादेवीदात्मसम्पदं विक्रीतवान् । विभाषोपसर्ग इति पक्षे द्वितीया । प्रशब्देन युक्तत्वात् । रामानुरागं पुनर्दर्शयन्नाह । शतकृत्व इति बहुत्वोपलक्षणार्थम् । क्रियाभ्यावृत्तिगणने कृत्वसुच । तवैकस्यान्ह्रो रघूत्तमः स्मरति । अधीगर्थेति षष्ठी । अह्न इति एकस्मिन्नप्यह्नि । कृत्वोऽर्थप्रयोगे कालेऽधिकरण इति षष्ठी ॥

एवं तामाश्वास्य सन्देशं दापयितुमाह ॥

**तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न ।**
**प्रतिसंदिश्यतां तावद्भर्तुः शार्ङ्गस्य मैथिलि ॥ १२३ ॥**

**तवेत्यादि** ॥ हे मैथिलि तवोपशायिका परिपाट्या शयनं याभी राक्षसीभिः सहेत्यर्थात् । पर्यायार्हणोत्पत्तिषु ण्वुच् । यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत् प्रतिसन्दिश्यतां प्रतिसन्देशो दीयताम् । शार्ङ्गस्य भर्तुः शार्ङ्गं धनुर्धारयतो रामस्य । तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्मणोः कृतीति षष्ठी ॥

**पुरः प्रवेशमाश्चर्यं बुद्ध्वा शाखामृगेण सा ।**
**चूडामणिमभिज्ञानं ददौ रामस्य संमतम् ॥ १२४ ॥**

**पुर इत्यादि** ॥ शाखामृगेण मर्कटेन पुरो लङ्कायाः दुष्प्रवेशायाः प्रवेशः तमाश्चर्यमद्भुतं बुद्ध्वा सा सीता चूडामणिमभिज्ञानं ददौ सर्वमुक्तमस्य सम्भाव्यत इति । उभयप्राप्तौ कर्मणीति षष्ठी । प्रवेश इत्युभयप्राप्तौ कृति लङ्काहनूमतोः कर्मकर्तृत्वात् । रामस्य सम्मतं प्रियम् । मतिबुद्धीत्यादिना वर्तमाने निष्ठा । नलोकेति षष्ठीप्रतिषेधे प्राप्ते क्तस्य च वर्तमान इति षष्ठी ॥

**रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।**
**प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥ १२५ ॥**

**रामस्येत्यादि** ॥ रामस्य अभिज्ञानं दत्त्वा शयितादिकं मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती । तस्य शयितं शयनस्थानं कि भूमौ शेते अन्यत्रेति वा । भुक्तं भोजनस्थानं कि गृहे भुङ्क्ते मुनिजनगृहे वेति । जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति । हसितं हसनस्थानं कि शृङ्गारवस्तूनि हसति वीरवस्तूनि वेति । स्थितं निवासस्थानं कि गुहायां तिष्ठत्युत तरुतले वेति । प्रक्रान्तं प्रचंक्रमणस्थानम् । अनुनासिकेत्यादिना दीर्घः । कि अङ्गने क्रम्यते अन्यत्र वेति । एषां ध्रौव्यगतिप्रत्यवसानार्थत्वात् क्तोऽधिकरणेचेति क्तः । तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी ॥

**असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।**
**गामुकोऽप्यन्तिकं भर्तुर्मनसाचिन्तयत् क्षणम् ॥ १२६ ॥**

**असावित्यादि** ॥ असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नम् । कर्तृकर्मणोः कृतीति षष्ठ्यां प्राप्तायां न लोकेति लप्रयोगे प्रतिषेधः । ल इति शानन्नादयो गृहीताः । दारुणमशोकवनिकाभङ्गादिकं कर्म चिकीर्षुः कर्तुमिच्छुः । उकारप्रश्लेषात् षष्ठ्याः प्रतिषेधः । भर्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि । उकप्रयोगे प्रतिषेधः । मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म ॥

**कृत्वा कर्म यथादिष्टं पूर्वकार्याविरोधि यः ।**
**करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमम् ॥ १२७ ॥**

**कृत्वेत्यादि** ॥ यो दूतो यथोद्दिष्टं कर्म कार्यं कृत्वा । अत्र कृत्वेत्यव्ययप्रयोगे प्रतिषेधः । तत उत्तरकालं पूर्वकर्माविरोधि पूर्वकृतस्य कार्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदुर्नीतिविद इति शेषः । मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः ॥

तदेव च दर्शयन्नाह ॥

**वैदेहीं दृष्टवान् कर्म कृत्वान्यैरपि दुष्करम् ।**
**यशो यास्याम्युपादाता वार्तामाख्यायकः प्रभोः ॥ १२८ ॥**

**वैदेहीमित्यादि** ॥ अहमद्य तावद्वैदेहीं दृष्टवान् । निष्ठाप्रयोगे प्रतिषेधः । अन्यदपि कार्यमतिदुष्करं कृत्वा । खलुप्रयोगे प्रतिषेधः । ततो यश उपादाता । आत्मसात्कर्ता । इदमतिदुष्करं तेन कृतमिति । तृन्नन्तस्य प्रयोगे प्रतिषेधः । वार्तामाख्यायकः प्रभोर्वार्तामाख्यातास्मीति भविष्यदधिकारात्तुमुन्ण्वुलौ क्रियायामिति ण्वुल् । अकेनोर्भविष्यदाधमर्ण्ययोरिति प्रतिषेधः ॥

**राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम् ।**
**इति संचिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ १२९ ॥**

**राक्षसेत्यादि** ॥ इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य संरक्ष्यं रक्षार्हम् । अर्हे कृत्यः । ऋहलोर्ण्यत् । तन्मया लव्यं लवनीयम् । कृत्यानां कर्तरि वेति षष्ठीतृतीये कर्तरि भवतः । इत्येवं सञ्चिन्त्य कपिर्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी । अभनक् भग्नवान् । भञ्जेर्लङि श्नान्नलोप इति नलोपे हल्ङ्याब्भ्यो दीर्घादिलोपे जश्त्वे चर्त्वे च रूपम् ॥

**राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन् ।**
**हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥**

**राघवाभ्यामित्यादि** ॥ रघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु । तयोर्हनूमान् दूतो हितो रामस्य भनज्मीदं वनम् । एवंच क्रियमाणे को भवतां मध्ये राक्षसः कि ब्रूते इत्येवं ब्रुवन् । बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन सम्बन्धः । राघवाभ्यां शिवं हितो रामस्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ ॥ इति विभक्त्यधिकारः ॥

**विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमम्**
**कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ।**
**शकुननिनादनादिककुब्विलोलविपलायमानहरिणम्**
**हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् ॥ १३१ ॥**

**इति भट्टिकाव्येऽष्टमः सर्गः ।**

**विलुलितेत्यादि** ॥ कीदृशं बभञ्ज । विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गम् । प्रशान्ता अवसन्नाः कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र । कुसुमानां निपातेन विचित्रा वसुधा यत्र । सशब्दैर्निपतद्भिर्द्रुमैरुत्का उन्मनसः शकुना यत्र । शकुनानां पलायमानानां निनादेन नादिताः सञ्जातनादाः ककुभो दिशो यत्र । विलोला व्याकुला विपलायमाना हरिणा यत्र । हरिणस्येव लोचने यस्याः सीतायाः तस्या अधिवसतिं निवासम् ॥ इत्यनभिहिताधिकारः ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां अधिकारकाण्डे तृतीयः परिच्छेदः काव्यस्याशोकवनिकाभङ्गो नामाष्टमः सर्गः ॥

---

## नवमः सर्गः ।

### अथ प्रकीर्णकाः ।

अत्रान्तरे प्रकीर्णकश्लोकानाह ॥

**द्रुभङ्गध्वनिसंविग्नाः कुवत्पक्षिकुलाकुलाः ।**
**अकार्षुः क्षणदाचर्यो रावणस्य निवेदनम् ॥ १ ॥**

**द्रुभङ्गेत्यादि** ॥ क्षणदाचर्यो निशाचर्यः । चरेष्टः । रावणस्य निवेदनमकार्षुः कृतवत्यः । वक्ष्यमाणप्रकारेण । द्रुभङ्गध्वनिसंविग्नाः शाखाभङ्गशब्देन संत्रस्ताः । ओविजी भय-

चलनयोः । ओदितश्चेति निष्ठानत्वम् । कुवत्पक्षिकुलाकुलाः कूजद्भिः पक्षिकुलैः व्यस्तमानसाः । कु शब्दे । तौदादिकस्तस्य उवङादेशः ॥

**यदताप्सीच्छनैर्भानुर्यत्रावासीन्मितं मरुत् ।**
**यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः ॥ २ ॥**

**यदित्यादि** ॥ यद्वनं भानुः शनैर्मन्दमताप्सीत् तपति स्म । हलन्तलक्षणा वृद्धिः । मरुत् मितं स्तोकमवासीत् वाति स्म । हिमोस्रेण शिशिररश्मिना आप्यानं वृद्धिं नीतम् । प्यायतेर्लोपो व्योर्वलीति यलोपः । ओदित्वान्नत्वम । तदुपवनं कपिर्भनक्ति चूर्णयतीति निवेदनमकार्षुः ॥

**ततोऽशीतिसहस्राणि किङ्कराणां समादिशत् ।**
**इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥**

**तत इत्यादि** ॥ निवेदनानन्तरमिन्द्रजित्सूः रावणः । इन्द्रजितं सूत इति सत्सूद्विषेत्यादिनानुपसर्गे क्विप् । मारुतेर्हनूमतो विनाशाय । अशीतिसहस्राणि समादिशत् समादिष्टवान् । किङ्कराणां किं कुर्वन्तीति दिवाविभेत्यादिना टच् । क्रोधमूर्च्छितः क्रोधोद्धतः । मूर्च्छेः समुच्छ्राये वर्तमानत्वात् ॥

**शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः ।**
**व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥**

**शक्तीत्यादि** ॥ ते किङ्करा वनं प्रापुः प्राप्तवन्तः । शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः । व्यश्नुवानाः दिशो व्याप्नुवन्तः । अशू व्याप्तौ सौवादिकः । दृष्टिविषोपमा भुजङ्गवत् दृष्ट्यैव विनाशयन्त इत्यर्थः ॥

**दध्वान मेघवद्भीममादाय परिघं कपिः ।**
**नेदुर्दीप्तायुधास्तेऽपि तडित्वन्त इवाम्बुदाः ॥ ५ ॥**

**दध्वानेत्यादि** ॥ कपिर्भीमं परिघं भयानकमर्गलमादाय मेघवद्दध्वान ध्वनति स्म । तेऽपि किङ्कराः तडित्वन्त इवाम्बुदाः नेदुः नदन्ति स्म । किङ्कराणां कृष्णत्वात् मेघैः सादृश्यं आयुधानां च तडितेति ॥

**कपिनाम्भोधिधीरेण समगंसत राक्षसाः ।**
**वर्षास्वूद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥**

**कपिनेत्यादि** ॥ कपिना अम्भोधिधीरेणाक्षोभ्यत्वात् । राक्षसाः समगंसत स-

ङ्गताः । समोगमीत्यादिना तङ् । लुङ् । यथा सिन्धवो नद्यः उद्धततोयौघाः उद्रिक्त-जलपूराः समुद्रेण सङ्गच्छन्ते ॥

**लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परीघं गुरुम् ।**
**तस्थौ तोरणमारुह्य पूर्वं न प्रजहार सः ॥ ७ ॥**

**लाङ्गूलमित्यादि** ॥ स हनूमान् लाङ्गूलं पुच्छमुद्धतं उत्क्षिप्तं धुन्वन् । धूञ् कम्पन इति स्वादौ पठितः । परिघं गुरुं उद्वहन् तोरणमारुह्य तस्थौ । न तु पूर्वं प्रजहार प्रहृतवान् शूराणां पश्चात् प्रहारित्वात् ॥ ॥ एते प्रकीर्णकाः ॥

इतःपरं सिचि वृद्धिमधिकृत्याह ॥

**अक्षारिषुः शराम्भांसि तस्मिन् रक्षःपयोधराः ।**
**न चाह्वालीन्न चाव्राजीत्त्रासं कपिमहीधरः ॥ ८ ॥**

**अक्षारिषुरित्यादि** ॥ तस्मिन् वने रक्षःपयोधराः रक्षांसि पयोधरा इव । शराम्भांसि शरान् अम्भांसीव । अक्षारिषुः क्षरितवन्तः । क्षरतिरकर्मकः क्षरेत्क्षतजवृत्तिरित्यादि प्रयोगेषु दृश्यते । इह तु सकर्मको विवक्षितः । कपिर्महीधर इव । न चाह्वालीत् न चलितवान् । द्वयोरप्यतो ह्लादेर्लघोरिति विकल्पे प्राप्ते अतो ल्रान्तस्येति सिचि वृद्धिः । नाव्राजीत् त्रासं भयं च न जगाम महीधरतुल्यत्वात् । नेटीति प्रतिषेधस्यातो ह्लादेर्लघोरिति विकल्पिते वदव्रजेत्यादिना वृद्धिः ॥

**अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं कपिः ।**
**तथा यथा रणे प्राणान् बहूनामग्रहीद्द्विषाम् ॥ ९ ॥**

**अवादीदित्यादि** ॥ तत उत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् । पूर्ववद्वृद्धिः । तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म । दिवः कर्म चेति परिघस्य कर्मसंज्ञा । दिवेर्नेटीति वृद्धिप्रतिषेधः । यथा बहूना द्विषां शत्रूणां प्राणान्यग्रहीत् निगृहीतवान् । अतो ह्लादेरिति विकल्पे प्राप्ते ह्म्यन्तक्षणश्वसेति प्रतिषेधः ॥

**व्रणैरवमिषू रक्तं देहैः प्रौर्णाविषुर्भुवम् ।**
**दिशः प्रौर्णविषुश्चान्ये यातुधाना भवद्भियः ॥ १० ॥**

**व्रणैरित्यादि** ॥ यातुधाना राक्षसा व्रणैः प्रहारमार्गैः रक्तं शोणितमवमिषुः वमन्ति स्म । ह्म्यन्तेति वृद्धिप्रतिषेधः । देहैर्भुवं प्रौर्णाविषुः छादितवन्तः । अन्ये यातुधानाः भवद्भियः भवन्ती भीर्येषामिति भयात्पलायमानाः । दिशः प्रौर्णविषुः छादित-

वन्तः । ऊर्णोतेर्विभाषेति विकल्पः ऊर्णोर्विभाषोर्णोतेरित्यङित्त्वपक्षे द्रष्टव्यः ङित्त्वे गुण-वृद्धिप्रतिषेधात् ॥

**अरासिषुश्च्युतोत्साहा भिन्नदेहाः प्रियासवः ।**
**कपेरत्रासिषुर्नादान् मृगाः सिंहध्वनेरिव ॥ ११ ॥**

**इति सिचिवृद्ध्यधिकारः ॥**

**अरासिषुरित्यादि** ॥ च्युतोत्साहाः निरुत्साहाः अरासिषुः मृताः स्म इति शब्दितवन्तः । यतः प्रियासवः प्रियप्राणाः । कपेः सबन्धिनो नादादत्रासिषुः त्रस्ताः । उभयत्रापि नेटीति प्रतिषिद्धोऽतो हलादेरिति विकल्पः ॥ इति सिचि वृद्ध्यधिकारः ॥

इत इट्प्रतिषेधमधिकृत्याह ॥

**मायानामीश्वरास्तेऽपि शस्त्रहस्ता रथैः कपिम् ।**
**प्रत्याववृतिरे हन्तुं हन्तव्या मारुतेः पुनः ॥ १२ ॥**

**मायानामित्यादि** ॥ अथानन्तरं राक्षसा ये दिशो गताः ते कपिं हन्तुं पुनः प्रत्याववृतिरे प्रतिनिवृत्ताः । मायानामीश्वराः प्रभवः । स्थेशेति वरच् । नेड्वशि कृतीति नेट् । आर्धधातुकेत्यादिना प्राप्तत्वात् । रथैस्तत्र गताः सन्तः । शस्त्रहस्ताः शस्त्राणि हस्तेषु येषामिति । हनिकुशेत्यादिना रमेरौणादिकः कथन् । रथाः । अमिचमीत्यादिना शसेरौणादिस्त्रन् । हसिमृग्वश्चेत्यादिना हसेस्तन् । तयोस्तितुत्रेत्यादिना इट्प्रतिषेधः । हन्तव्या मारुतेरिति हनूमतो वधार्हाः । कृत्यानां कर्तरि वेति षष्ठी । एकाच इत्यादिना इट्प्रतिषेधः । हन्तेर्नमान्तेष्वनिट्त्वात् ॥

**तांश्चेतव्यान् क्षितौ श्रित्वा वानरस्तोरणं युतान् ।**
**जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥**

**तानित्यादि** ॥ समुदिता एकस्यामेव वेलायां मया हन्तव्या इति वानरस्तोरण-माश्रितवान् । स तोरणं श्रित्वा तान् राक्षसान् । विजिघृक्षून् विग्रहीतुमिच्छून् । युतान् समुदितान् । समागतान् ढौकितान् । क्षितौ पृथिव्यां चेतव्यान् पुञ्जीकर्तव्यान् । जघान हतवान् । परिघमाधूय परिभ्राम्य । तत्र चेतव्यानिति एकाच इतीट्प्रतिषेधः । क्षिताविति क्तिच्क्तौ च संज्ञायामिति क्तिच् । तितुत्रेत्यादिना इट्प्रतिषेधः । श्रित्वा युतानिति श्र्युकः कितीट्प्रतिषेधः । विजिघृक्षूनिति सनि ग्रहगुहोश्चेति । तत्र रुदविदेति सनः कित्त्वं ग्रहिज्येति सम्प्रसारणं ढत्वकत्वषत्वानि ॥

**संजुघुक्षव आयूंषि ततः प्रतिरुरूषवः ।**
**रावणान्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥**

**संजुघुक्षव इत्यादि** ॥ तत उत्तरकाले ये हतशेषा निशाचराः ते संजुघुक्षव आयूंषि जीवितानि गोहितुमिच्छवः । गुहेः पूर्ववत्प्रतिषेधः । रावणान्तिकमाजग्मुः आगताः । प्रतिरुरूषवः वक्ष्यमाणमर्थं कथयितुमिच्छवः । अत्रापि पूर्ववत्प्रतिषेधः । तत्र चकारेणोगन्तानां सनि समुच्चितत्वात् ॥

**एकेन बहवः शूराः साविष्काराः प्रमत्तवत् ।**
**वैमुख्यं चकृमेत्युच्चैरूचुर्दशमुखान्तिके ॥ १५ ॥**

**एकेनेत्यादि** ॥ वयं बहवः शूराः साविष्काराः साहङ्कारा अपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं चकृम पराङ्मुखत्वमनुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ता इव । एवंच चित्तव्याक्षेपादुत्तमपुरुषे लिटि कृते कृसृ इत्यादिना इट्प्रतिषेधः नियमित इति । एवं दशमुखान्तिके उच्चैरूचुः ॥

**मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः ।**
**उद्वृत्तनयनो मित्रान्मन्त्रिणः स्वान् व्यसर्जयत् ॥ १६ ॥**

**मांसेत्यादि** ॥ स दशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वानात्मीयान् मन्त्रिणो व्यसर्जयत् प्राहिणोत् । कीदृशांस्तान् मांसोपभोगसंशूनान् मांसोपभोगेन स्थूलवर्ष्मणः । उभयत्रापि श्वीदितो निष्ठायामितीट्प्रतिषेधः । तत्र श्वयतेर्यजादित्वात् संप्रसारणं हल इति संप्रसारणस्य दीर्घः । द्वयोरप्योदित्त्वान्निष्ठानत्वम् । उद्वृत्तनयनो रोषात् निष्क्रान्ततारकः । यस्य विभाषेतीट्प्रतिषेधः वृतेरुदित्त्वात् । मित्रान् स्निग्धान् मन्त्रिणः । आदितश्चेतीट्प्रतिषेधः । रदाभ्यामिति निष्ठानत्वम् ॥

**प्रमेदिताः सपुत्रास्ते सुस्वान्ता बाढविक्रमाः ।**
**अम्लिष्टनादा निरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥**

**प्रमेदिताइत्यादि** ॥ ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः । इणो गा लुङि । प्रमेदिताः स्निग्धीभवितुमारब्धाः । आदिकर्मणि निष्ठा । ततो विभाषा भावादिकर्मणोरिति प्रतिषेधः । इट्पक्षे निष्ठा शीङित्यादिना किस्त्वप्रतिषेधात् गुणः । सुस्वान्ताः स्वामिनि कल्याणमनसः । बाढविक्रमाः भृशपराक्रमाः । अम्लिष्टनादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् । फाण्टचित्रास्त्रपाणयः यदशृतमपिष्टं कषायमुदकसंस्पर्कमात्राद्विभक्तरसं ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते

तेन चित्राणि रञ्जितानि अस्त्राणि पाणौ येषामिति । स्वान्तादयः क्षुब्धेत्यादिना निपातिताः ॥

**तान् दृष्ट्वातिदृढान् धृष्टान् प्राप्तान् परिवृढाज्ञया ।**
**कष्टं विनर्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः ॥ १८ ॥**

**तानित्यादि** ॥ तान् दृष्ट्वा कपिः आर्दिददिति वक्ष्यमाणेन सम्बन्धः । किम्भूतान् धृष्टान् । धृष्णोतीति धृष्टः । धृषिशसी वैयात्य इतीट्प्रतिषेधः । अतिदृढान् बलवतः । दृढस्थूलबलयोरिति निपातनम् । परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राप्तान् । प्रभौ परिवृढ इति निपातनम् । कष्टं विनर्दतः कृच्छ्रं ध्वनतः । गम्भीररवं वा । कृच्छ्रगहनयोः कष इतीट्प्रतिषेधः । क्रूरान् हिंस्रान् । शस्त्रघुष्टकरान् । घुषिरविशब्दन इतीट्प्रतिषेधः ॥

**अभ्यर्णो गिरिकूटाभानभ्यर्णानार्दिदद्द्रुतम् ।**
**वृत्तशस्त्रान् महारम्भानदान्तांस्त्रिदशैरपि ॥१९॥ युग्मम् ॥**

**अभ्यर्ण इत्यादि** ॥ अभ्यर्णोऽपीडितः । अर्देः संनिविभ्य इतीट्प्रतिषेधः । गिरिकूटाभान् महागिरिसदृशप्रमाणान् । अभ्यर्णानविदूरान् । अभेश्चाविदूर्ये इतीट्प्रतिषेधः । द्रुतमार्दिदत् हिंसितवान् । अर्देः स्वार्थिकण्यन्तस्य लुङि रूपम् । वृत्तशस्त्रोऽधीतशास्त्रविद्यः । णेरध्ययने वृत्तमिति इडभावो णिलुक् च निपात्यते । महारम्भान् अनल्पव्यापारान् । त्रिदशैरप्यदान्तान् अशमितान् । वादान्तेत्यादिना इडभावो णिलुक् च निपात्यते ॥

**दमितारिः प्रशान्तौजा नादापूरितदिङ्मुखः ।**
**जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ २० ॥**

**दमितारिरित्यादि** ॥ ये तु प्रशान्तौजसः शमितबलाः सन्तो रुष्टाः तूर्णमागताः तान् कपिर्जघान व्यापादितवान् । प्रतापाद्दाम्यन्तोऽरयो दमिता येन दमितारिः । प्रशान्तं शत्रूणामोजो येन स प्रशान्तौजाः । नादापूरितप्रदिङ्मुखः तस्य हृष्टत्वात् । रुषितः क्रुद्धः । त्वरितःससम्भ्रमः । अत्र दमितप्रशमितपूरिताः ण्यन्ताः वादान्तेत्यादिना विकल्पितेटः । रुष्टरुषितत्वरिताः रुष्यमत्वरेत्यादिना ॥

**तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः ।**
**अभूदभ्यमितत्रासमास्वान्ताशेषदिग्जगत् ॥ २१ ॥**

**तेषामित्यादि** ॥ तेषां रक्षसां निहन्यमानानां संघुष्टैः शब्दैः कर्णभेदिभिः बा-

धिर्यकरैः । अभ्यमितत्रासं अभिगतत्रासं जगदभूत् । आस्वान्ताः अशेषा दिशो यस्मिन् जगति । संघुष्टाभ्यमितास्वान्ताः रुष्यमत्वरेति विकल्पितेट् ॥

**भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।**
**क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयम् ॥ २२ ॥**

**इतीट्प्रतिषेधाधिकारः ।**

**भयेत्यादि** ॥ ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमनेषत नीताः । कर्मणि लुङ् । भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः । हृषेर्लोमस्विति विभाषितेट् । अपचितद्विषः अपचितानां पूजितानां ऋषीणां शत्रवः । अपचितश्चेति निपातः । क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमो येषाम् । क्षियो दीर्घादिति निष्ठातकारस्य नः ॥

इतीट्प्रतिषेधाधिकारः ।

इतःप्रभृतीटमधिकृत्याह ॥

**हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः ।**
**अशोकवनिकामेव निगृहीतारिशासनः ॥ २३ ॥**

**हत्वेत्यादि** ॥ रक्षांसि हत्वा मारुतिरशोकवनिकामेव पुनर्लवितुं च्छेत्तुम् । आर्धधातुकस्येट् । अक्रमीत् गतवान् । स्नुक्रमोरनात्मनेपदनिमित्त इतीट् । निगृहीतारिशासनः ध्वस्तारिव्यवस्थः । ग्रहो लिटि दीर्घ इतीटो दीर्घत्वम् ॥

**आवरीतुमिवाकाशं वरितुं वीनिवोत्थितम् ।**
**वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन् ॥ २४ ॥**

**आवरीतुमित्यादि** ॥ प्रभञ्जनसुतो हनूमान् । वनमशोकवनिकाख्यं विनाशयन् नादयिष्ट दयां न कृतवान् । लुङि रूपम् । आकाशमावरीतुमिव अवष्टब्धुमिवोत्थितं वनम् । वीन् पक्षिणो वरितुं प्रार्थयितुमिवोत्थितं आगच्छत नान्यत्र यात इहैव फलवृद्धिं प्राप्स्यथेति । आवरीतुं वरितुमिति वृतो वेति विकल्पेनेटो दीर्घत्वम् ॥

**वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः ।**
**प्रावारिषुरिव क्षोणीं क्षिप्ता वृक्षाः समन्ततः ॥ २५ ॥**

**वरिषीष्टेत्यादि** ॥ ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादादायारोपितास्तानुन्मूल्य यथास्थानं क्षिप्यन् मैथिल्याः शिवं कल्याणं वरिषीष्ट प्रार्थितवान् । मैथिल्या भद्रमस्त्वित्याशंसावचने लिङ् । न लिङीति दीर्घप्रतिषेधः । अन्ये च वृक्षास्तेन समन्ततः क्षि-

म्राः सन्तः क्षोणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव । तेषामनाच्छादितत्वादिवार्थः । सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥

**संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुर्द्रुतम् ।**
**अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥**

**समित्यादि** ॥ रामदूतेन कपिना कर्मेदृशं कृतमिति स्वमाकूतमभिप्रायं संवुवूर्षुः संवरीतुमिच्छुः । दशाननो द्रुतमाज्ञां विवरिषुः प्रकटितुमिच्छुः । अक्षं स्वसुतमवरिष्ट प्रार्थितवान् । कर्त्रभिप्राये तङ् । किमर्थं कपि हन्तुं हनिष्यामीति । अक्षम्यं क्षन्तुमशक्यम् । पोरदुपधादिति यत् । संवुवूर्षुः विवरिषुरिति उगन्तत्वात् सनिग्रहगुहोश्चेति चकारेणेट्प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट् । तत्रानिट्पक्षे इको झलीति कित्त्वे उदोष्ठ्यपूर्वस्येत्युत्वपक्षे गुण एव ॥

**ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमम् ।**
**ध्वृषीष्ठा युधि मायाभिः स्वरिता शत्रुसम्मुखम् ॥ २७ ॥**

**ऊच इत्यादि** ॥ किमित्याह त्वं गच्छ शत्रोः पराक्रमं संवरिषीष्ठाः संछादय । आशिषि लिङ्सिचोरात्मनेपदेष्विति वृञो विभाषेट् । उश्चेतीट् पक्षे न कित्वम् । ध्वृषीष्ठाः युधि मायाभिः कर्तृभूताभिः त्वं कुटिलीकृषीष्ठाः । ध्वृ हूर्च्छने हुर्च्छा कौटिल्ये । तस्य चोदात्तत्वात् आशिषि कर्मणि लिङ् । ऋतश्च संयोगादेरिति विभाषेट् । अनिट् पक्षे उश्चेति कित्त्वम् । स्वरिता उपतापयिता । शत्रुसम्मुखं शत्रोरग्रतः । अतो द्रुतं स्वरिषीष्ठा इति वक्ष्यमाणेन योज्यम् । स्वृशब्दोपतापयोरित्यस्य स्वरतिसूतिसूयेत्यादिना विभाषेट् लिङ्सिचोरिति नानुवर्तते ॥

**द्रुतं संस्वरिषीष्ठास्त्वं निर्भयः प्रधनोत्तमे ।**
**स मायानामगात् सोता कपेर्विधवितुं द्युतिम् ॥ २८ ॥**

**द्रुतमित्यादि** ॥ संस्वरिषीष्ठाः उपतापय । निर्भयः सन् । आशिषि लिङ् । समो गम्यृच्छीत्यात्मनेपदम् । अत्र ऋतश्चेतीट् । प्रधनोत्तमे संग्रामवरे । एवमुक्तः सन् स मायानां सोता जनकः कपेर्द्युतिं तेजो विधवितुमपनेतुमगात् गतः । सोता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट् ॥

**विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः ।**
**अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनाम् ॥ २९ ॥**

**विगाढारमित्यादि** ॥ असौ कपिः वनस्य विगाढा अवलोडयिता । अरं शी-

घ्नम् । शत्रूणां गाहिता विनाशयिता । कर्मणि षष्ठी । ऊदित्त्वाद्विभाषेट् स्वरतीत्यादिना । अक्षं रधितुं हिंसितुमारेभे प्रवृत्तः । लङ्कानिवासिनां रक्षसां रद्धा हिंसिता । रधादिभ्यश्चेति विभाषेट् ॥

**निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात् ।**
**आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥**

**निष्कोषितव्यानित्यादि** ॥ दशमुखात्मजादक्षात् । प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति परिघमादाय तस्थौ । निरः कुष इति विभाषेट् । निष्कुषितद्रुमः वनादपनीतवृक्षः । इण्निष्ठायामितीट् ॥

**एष्टारमेषिता संख्ये सोढारं सहिता भृशम् ।**
**रेष्टारं रेषितुं व्यास्यद्रोष्टाक्षः शस्त्रसंहतीः ॥ ३१ ॥**

**एष्टारमित्यादि** ॥ कपि युद्धस्यैष्टारं एषिता एषणशीलोऽक्षः । ताच्छील्ये तृन् । न लोकेति षष्ठीप्रतिषेधः । सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः । रेष्टारं हिंसकं रेषितुं हिंसितुम् । रोष्टा रोषणशीलः । शस्त्रसंहतीर्व्यास्यत् क्षिप्तवान् । लङि रूपम् । सर्वत्र तीषसहेत्यादिना वेट् ॥

**शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः ।**
**अर्दिधिषुर्यशः कीर्तिमीर्त्सुं वृक्षैरताडयत् ॥ ३२ ॥**

**शस्त्रैरित्यादि** ॥ कपिः अर्दिधिषुः यशो वर्धितुमिच्छुः । परिघं दुद्यूषुः । परिघेण क्रीडितुमिच्छुः । अक्षं वृक्षैरताडयत् हतवान् । कीदृशं शस्त्रैर्दिदेविषुं क्रीडितुमिच्छुम् । कीर्तिमीर्त्सुं वर्धितुमिच्छुम् । दिवेरिबन्तस्य ऋधुवृद्धावित्यस्य च सनीवन्तर्द्धेत्यादिना विभाषितेट् । तत्र दिवेरिडभावपक्षे च्छ्वोःशूट् । ऋधेराप्ज्ञप्ृधामीदितीत्वं अभ्यासलोपश्च ॥

**भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः ।**
**अहंस्ततः स मूर्च्छावान् संशिश्रीषुरभूद्ध्वजम् ॥ ३३ ॥**

**भूय इत्यादि** ॥ तं राजपुत्रं अक्षं धिप्सुं दम्भितुं वञ्चयितुमिच्छुम् । भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः । आहूयागच्छेत्यहन् हतवान् । ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुक्तः । ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः । अभूत् भूतः । अत्र दम्भेः श्रयतेश्च सनीवन्तर्द्धेतीट् । अत्र श्रयतेरनिट्पक्षे अज्झनगमां सनीति दीर्घः । द्वितीयस्य च दम्भ इच्च अभ्यासलोपः । दम्भेर्हलग्रहणस्य जातिपरत्वात्सिद्धमिति कित्त्वे अनुनासिकलोपः । एकाचो बश इति भष् । खरि चेति चर्त्वम् ॥

**आश्वस्याक्षः क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा ।**
**रुषा बिभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत् ॥ ३४ ॥**

**आश्वस्येत्यादि** ॥ क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान् जनान् तेजसा क्रोधोत्थेन बिभ्रक्षुरिव अथ स कपिं बाणैरवाकिरत् संछादितवान् । कीदृशं बिभ्रज्जिषुप्रख्यं अग्नितुल्यम् । बिभ्रज्जिषु बिभ्रक्षुरिति सनीवन्तर्धेत्यादिना विभाषेट् । तत्रानिट्पक्षे स्कोरिति सलोपः । व्रश्चेति षः । इट्पक्षे सकारस्य जश्त्वं श्चुत्वं च ॥

**संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः ।**
**कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे ॥ ३५ ॥**

**संयुयूषुमित्यादि** ॥ बाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् । यौतेः सन् । सनीवन्तर्धेति विभाषेट् । ओः पुयण्ज्यपर इतीत्वम् । अज्झनगमां सनीति दीर्घः ॥

**वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते ।**
**तं प्रोर्णुनूषुरुपलैः स वृक्षैराबभौ कपिः ॥ ३६ ॥**

**वानरमित्यादि** ॥ वानरं प्रोर्णुनविषुः छादयितुमिच्छु रक्षः विदिद्युते विद्योतते स्म । द्युतिस्वाप्योरिति सम्प्रसारणम् । कपिरपि तमक्षं उपलैर्वृक्षसहितैः प्रोर्णुनूषुः संवरीतुमिच्छुराबभौ भाति स्म । ऊर्णोतेः पूर्ववद्विभाषेट् । इट्पक्षे गुण । अन्यत्र अज्झनेति दीर्घः । उभयत्र नन्द्रा इति रेफो न द्विरुच्यते ॥

**स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किम् ।**
**शस्त्रैरित्यकृषातां तौ पश्यतां बुद्धिमाहवे ॥ ३७ ॥**

**स्वामित्यादि** ॥ तौ कपिराक्षसौ कि स्वां शक्ति जिज्ञापयिषू बोधयितुमिच्छू इव बुभूर्षू त्रिजगन्ति कि नु । त्रैलोक्यं शस्त्रेण भर्तुं पूरयितुमिच्छू इत्येवं बुद्धिमाहवे पश्यतां प्रेक्षकाणां अकृषातां कृतवन्तौ । जिज्ञापयिषू बुभूर्षू इति विभाषेट् । तत्र भृञ् भरण इति भौवादिकस्य ग्रहणं सनीवन्तर्धेति सूत्रे भरेति शपा निर्देशात् ॥

**मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।**
**संप्राप्य वानरं भूमौ पपात परिघाहतः ॥ ३८ ॥**

**मायाभिरित्यादि** ॥ राक्षसो मायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा वानरं अक्लिशितक्रियमनभिभूतव्यापारं सम्प्राप्य परिघाहतो भूमौ पपात । क्लिशः क्त्वानिष्ठयोरिति विभाषेट् ॥

पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ ।
बभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम् ॥ ३९ ॥

**पवित इत्यादि** ॥ कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनुकूलैः शीतैर्वातैः पवितः पवित्रीकृत. । पूङश्चेति विभाषेट् । भूयः पुनर्वनं बभञ्ज । कीदृशं पत्रिभिः पक्षिभिः । क्षुधित्वा क्षुधितैर्भूत्वा । अध्युषितं कृतनिवासम् । वसतिक्षुधोरितीट् ॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन् ।
दधद्विलुभितं वातैः केशरं वह्निपिङ्गलम् ॥ ४० ॥

**उच्चैरित्यादि** ॥ उच्चैरूर्द्ध अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य । शोभनविन्यासेन स्थितत्वात् । शिरोऽञ्चित्वेव संवहन् अनम्रत्वात् पूजयित्वेव शिरो बिभ्राणः । अञ्चेः पूजायामिति विभाषेट् । वह्निपिङ्गलं च केशरं सटां दधत् बिभ्रत् । वातैर्विलुभितं आकुलितम् । लुभो विमोहन इतीट् । विमोहनमाकुलीकरणम् ॥

जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः ।
व्रश्चित्वा विवशानन्यान् बलेनापातयत्तरून् ॥ ४१ ॥

**जरित्वेत्यादि** ॥ तस्य कपेर्जवेन वेगेन अन्ये शाखिन जरित्वेव जीर्णा इव भूत्वा निपेतुः । अन्यांस्तरून् बलेन व्रश्चित्वा च्छित्त्वा । विवशान् स्रस्तपल्लवानपातयत् पातितवान् । जॄव्रश्च्योः क्त्वीतीट् ॥

दमित्वाप्यरिसङ्घातानश्रान्त्वा कपिकेशरी ।
वनं चचार कर्तिष्यन्नर्त्स्यन्निव निरङ्कुशः ॥ ४२ ॥

**दमित्वेत्यादि** ॥ कपिकेशरी हनूमान् अरिसङ्घातान् दमित्वा उपशमं नीत्वा । अश्रान्त्वा अपरिश्रान्तो भूत्वा वनं चचार । उदितो वेति विकल्पेनेट । निरङ्कुश निरवग्रहः । कर्तिष्यन् छेत्स्यन् । नर्त्स्यन्निव नर्तुकाम इव । सेसिचीत्यादिना विभाषेट् ॥

पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषाम् ।
मत्तद्विरदवद्रेमे वने लङ्कानिवासिनाम् ॥ ४३ ॥

**पारमित्यादि** ॥ अथ स कपिर्द्विषां पारं जिगमिषन् गन्तुमिच्छन् । गमेरिट् परस्मैपदेषु । पुनरावर्त्स्यतां प्रतीपीभविष्यताम् । नवृद्भ्य इतीट्प्रतिषेधः । वृद्भ्यः स्यसनोरिति परस्मैपदम् । लङ्कानिवासिनां वने मत्तद्विरद इव रेमे क्रीडितवान् ॥

**यद्यकल्प्स्यदभिप्रायो योद्धुं रक्षःपतेः स्वयम् ।**
**तमप्यकर्त्स्यमद्याहं वदन्नित्यचरत्कपिः ॥ ४४ ॥**

**यदीत्यादि** ॥ रक्षःपतेः रावणस्य स्वयं योद्धुं यद्यभिप्रायोऽकल्प्स्यत् समपत्स्यत । तासि च क्लृप इति चकारात् स्यकारे च नेट् । तदा तमप्यहमकर्त्स्यं उत्सारयामि अद्य-मद्येति एवं वदन् कपिर्वनमचरत् । सेसिचीत्यादिना विभाषेट् । अकल्प्स्यदकर्त्स्यमिति च लिङ्निमित्त इति लृङ् । हेतुहेतुमद्भावश्च लिङो निमित्तम् ॥

**हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः ।**
**तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति ॥ ४५ ॥**

**हत इत्यादि** ॥ हते तस्मिन् रक्षःपतौ प्रियं श्रुत्वा प्रभुः राम. परां प्रीति कल्प्ता जनयिता । अत्रान्तर्भावितो ण्यर्थः । धातोरकर्मकत्वात् । सीतायाश्चाद्यैव चेतसि तोषः परो महान् कल्प्स्यति सम्पत्स्यते । तासि च क्लृप इतीट्प्रतिषेधः । लुटि च क्लृप इति परस्मैपदम् ॥

**आहूय रावणोऽवोचदथेन्द्रजितमान्तिकात् ।**
**वने मत्त इव क्रुद्धो गजेन्द्रः प्रधनेष्वटन् ॥ ४६ ॥**

**आहूयेत्यादि** ॥ अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् । किमवोचदित्याह । वने मत्त इव यथा गजेन्द्रो मत्तः क्रुद्धो वने पर्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः ॥

**ययाथ त्वं द्विषामन्तं भूयो यातासि चासकृत् ।**
**शशक्थ जेतुं त्वं देवान् मायाः सस्मर्थ संयति ॥ ४७ ॥**

**ययाथेत्यादि** ॥ न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि । यातेः क्रादिनियमात् प्राप्तस्येटः अचस्तास्वत्थल्यनिटो नित्यमिति प्रतिषेध । तस्य हि तासौ नित्यमनिट्त्वं अजन्ता धातवोऽनुदात्ता इति वचनात् । देवान् जेतुं त्वमसकृत् बहुधा शशक्थ शक्तोऽसि । उपदेशेऽत्वत इति थलीट्प्रतिषेधः । शकेस्तासौ नित्यानिट्त्वम् । शकिस्तु कान्त इति वचनात् । मायाश्च कूटयुद्धानि । संयति युद्धे । सस्मर्थ ज्ञातवानसि । ऋतो भारद्वाजस्येतीट्प्रतिषेधः ॥

**त्वं ससर्जिथ शस्त्राणि दद्रष्ठारींश्च दुःसहान् ।**
**शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि ॥ ४८ ॥**

**त्वमित्यादि** ॥ शस्त्राणि त्वं ससर्जिथ क्षिप्तवानसि । अरींश्च दुःसहान् युध्यतः

दद्रष्ठ दृष्टवानसि न पलायितोऽसि । विभाषा सृजिदृशोरिति थलि विभाषेट् । अनिट्पक्षे सृजिदृशोर्झल्यमकिति । षत्वष्टुत्वे । महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरादिथ जग्धवानसि । इडत्यर्तिव्ययतीनामित्यदेरिट् ॥

**स त्वं हनिष्यन् दुर्बुद्धिं कपिं व्रज ममाज्ञया ।**

**मा नाञ्जी राक्षसीर्मायाः प्रस्तावीर्मा न विक्रमम् ॥ ४९ ॥**

**स त्वमित्यादि** ॥ स त्वमेवंविध कपिं दुर्बुद्धि चपलत्वाद्धनिष्यन् हनिष्यामीति मदाज्ञया व्रज । ऋद्धनोऽस्य इतीट् । वस्वेकाजिति सूत्रत्रयं नोदाहृतं वस्वादेशस्य च्छन्दोविषयत्वात् । राक्षसीर्माया मा नाञ्जीः मा न व्यक्तीकुरु अपि तु व्यक्तीकुर्वित्यर्थः । अञ्जेः सिचीतीट् । विक्रमं न मा प्रस्तावीः मा न प्रारभस्व । स्तुसुधूभ्य इतीट् ॥

**मा न सावीर्महास्त्राणि मा न धावीररिं रणे ।**

**वानरं मा न संयंसीर्व्रज तूर्णमशङ्कितः ॥ ५० ॥**

**मा नेत्यादि** ॥ रणे महास्त्राणि मा न सावीः मा न प्रसुहि मा न मुञ्चेत्यर्थः । षुप्रसवैश्वर्ययोरित्यस्य रूपम् । अरींश्च मा न धावीः मा न कम्पय अपि तु भीषयस्वेत्यर्थः । पूर्ववदिट् । वानरं मा न संयंसीः मा न वधीः । यमरमेत्यादिना सगिटौ । समुदाङ्भ्यो यम इति तङ् न भवति तत्राकर्मकादिति वर्तते । यत एवं तस्मादशङ्कितस्तूर्णं व्रज ॥

**अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन् ।**

**अवाप्य चाशिषस्तस्मादायासीत्प्रीतिमुत्तमाम् ॥ ५१ ॥**

**अनंसीदित्यादि** ॥ एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् । वर्तमानसामीप्ये वर्तमानवदिति लट् । तस्य पितुश्चरणावनंसीत् नतवान् । तस्माद्रावणादाशिषमवाप्योत्तमां प्रीतिमायासीत् पूर्ववत्सगिटौ ॥

**गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः ।**

**इन्द्रजिद्विक्रमाभिज्ञो मन्वानो वानरं जितम् ॥ ५२ ॥**

**गत इत्यादि** ॥ गते तस्मिन् रक्षसां पतिः रावणः संरंभात् क्रोधादुपारंसीत् निवृत्तवान् । पूर्ववत्सगिटौ । रमेरुपाच्चेति तिप् । स इन्द्रजित् वानरं जितं मन्वानोऽवगच्छन् । यतो विक्रमाभिज्ञः । अगादिति वक्ष्यमाणेन सम्बन्धः ॥

**संसिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः ।**

**जगत् पिपविषुर्वायुः कल्पान्त इव दुर्धरः ॥ ५३ ॥**

**संसिस्मयिषमाण इत्यादि** ॥ संसिस्मयिषमाणः उपहसितुमिच्छन् द्विषः शत्रून् । अगात् गतवान् । पूर्ववत्सन इति तङ् । मायां व्यञ्जिजिषुः व्यक्तीकर्तुमिच्छुः । स्मिपूङ्रञ्ज्वशां सनीतीट् । तत्राञ्जेनन्द्रा इति नकारो न द्विरुच्यते । कल्पान्ते युगान्ते वायुरिव दुर्धरः । जगत् पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः ॥

**लोकानाशिशिषोस्तुल्यः कृतान्तस्य विपर्यये ।**
**वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः ॥ ५४ ॥**

**लोकानित्यादि** ॥ विपर्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छोः कृतान्तस्य तुल्योऽगादिति पूर्वेण सम्बधः । पूर्ववदिट् । वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः । कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः । कृग्रोरुगन्तत्वात् सनिग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इट्सनि वेति विकल्पे किरश्च पञ्चभ्य इतीट् । किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः ॥

**रोदिति स्मेव चायाति तस्मिन् पक्षिगणः शुचा ।**
**मुक्तकण्ठं हतान् वृक्षान् बन्धून् बन्धोरिवागमे ॥ ५५ ॥**

**रोदितीत्यादि** ॥ तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाशितान् शुचा शोकेन मुक्तकण्ठं सशब्दं नामग्राहं रोदिति स्मेव रुदितवानिव । नामग्रहणपूर्वया रोदनक्रियया व्याप्यमानत्वात् वृक्षाणां कर्मसंज्ञा । रुदादिभ्य इतीट् । बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥

**आश्वसीदिव चायाति तद्वेगपवनाहतम् ।**
**विचित्रस्तबकोद्भासि वनं लुलितपल्लवम् ॥ ५६ ॥**

**आश्वसीदित्यादि** ॥ तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव । लङि रूपम् । यतो विचित्रस्तबकोद्भासि लुलितपल्लवं च जातम् । पूर्ववदिट् ॥

**न प्राणिषि दुराचार मायानामीशिषे न च ।**
**नेडिषे यदि काकुत्स्थं तमूचे वानरो वचः ॥ ५७ ॥**

**इतीडधिकारः ॥**

**नेत्यादि** ॥ वानरस्तमागच्छन्तमिदं वचनमूचे । हे दुराचार न प्राणिषि न जीवसि । अनचेत्यस्य रूपं पूर्ववदिट् । अनितेरिति णत्वम् । न च मायानामीशिषे नेशिता भ-

वसि । ईशः स इति इट् । अधीगर्थेति कर्मणि षष्ठी । यदि काकुत्स्थं नेडिषे न स्तौषि । ईडजनोर्ध्वे चेति चकारात् सेचेतीट् ॥ ॥ इतीडधिकारः ॥

इदानी विसर्जनीयस्य स इत्यधिकृत्याह ॥

**ससैन्यश्छादयन् संख्ये प्रावर्तिष्ट तमिन्द्रजित् ।**
**शरैः क्षुरप्रैर्मायाभिः शतशः सर्वतो मुहुः ॥ ५८ ॥**

**ससैन्य इत्यादि** ॥ इन्द्रजित् ससैन्यः सबलः तं वानरं सर्वतः शरैः क्षुरप्रैः भल्लैः च्छादयन् मुहुः क्षणं मायाभिः शतशोऽनेकधा संख्ये प्रावर्तिष्ट प्रवृत्तः । लुङि रूपम् । तत्र ससैन्यश्छादयन् इति विसर्जनीयस्य स इति सत्वं छकारे परेश्चुत्वम् । शरैः क्षुरप्रैरिति सत्वापवादः । शर्परे खरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः । मायाभिः शतशः सर्वत इति वाशरीति विकल्पः विसर्जनीयः सकारो वा ॥

**वानरः कुलशैलाभः प्रसह्यायुधशीकरम् ।**
**रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ५९ ॥**

**वानर इत्यादि** ॥ वानरः कुलशैलाभः संग्रामे स्थिरत्वात् । आयुधं शीकरमिव नैरन्तर्येण पतनात् । प्रसह्याभिभूय । कुप्वोः कः पौ चेति जिह्वामूलीयोपध्मानीयौ । रक्षस्पाशान् कुत्सितराक्षसान् । याप्ये पाशप् । स्वार्थिका अपि प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते । यशस्काम्यन् आत्मनो यश इच्छन् । अत्र तकारे परतो नश्छव्यप्रशानिति रुत्वं विसर्जनीयसकारौ च पूर्वस्यानुनासिकः । तमस्कल्पान् । ईषदसमाप्ततमसः । कुप्वोरपवादः । सोपदादाविति सकारः । तत्र पाशकल्पकाम्येष्विति परिगणनम् । अदुद्रुवत् ढौकते स्म । णिश्रीत्यादिना चङ् ॥

**धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः ।**
**दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥**

**धनुरित्यादि** ॥ धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान् । ज्योतिष्कल्पोरुकेशरः अग्नितुल्यबृहत्सटो वानरः । इणः ष इति पाशादिष्वेव विसर्जनीयस्य षत्वम् । दुधाव कम्पितवान् । यस्मान्निर्नमस्कारान् अप्रणामान् । राक्षसेन्द्रेणेन्द्राजिता पुरस्कृतान् अग्रतः स्थापितान् । नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः । इण उत्तरस्य तु विसर्जनीयस्य स एवाधिक्रियते । तत्र नमःशब्दस्य साक्षात्प्रभृतिषु पाठात् । पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा ॥

**स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः ।**
**रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः ॥ ६१ ॥**

**स्वामिन इत्यादि** ॥ स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज । आविष्कृतबलः प्रकटितसामर्थ्यः । दुष्कृतबहिष्कृतः । दुष्कृतं पापं बहिष्कृतमनेनेति वाहिताग्न्यादिषु द्रष्टव्यम् । सर्वत्र इदुदुपधस्य चेत्यनेनाप्रत्ययविसर्जनीयस्य षत्वम् ॥

**चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्वन्नरीन् रणे ।**
**तिरस्कृतदिगाभोगो ददृशे बहुधा भ्रमन् ॥ ६२ ॥**

**चतुरित्यादि** ॥ चतस्रः काष्ठा दिशो यस्मिन् क्षेपण इति क्रियाविशेषणम् । पूर्ववत् षत्वम् । चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि बहुधा ददृशे दृष्टः कपिः । क्षिपन्निति तौदादिकः । अरीस्तिरस्कुर्वन् अभिभवन् । तिरस्कृतदिगाभोगः अपनीतदिग्विस्तरः । तिरसोऽन्यतरस्यामिति पक्षे सत्वम् ॥

**द्विष्कुर्वतां चतुष्कुर्वन्नभिघातं नगैर्द्विषाम् ।**
**बहिष्करिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥**

**द्विष्कुर्वतामित्यादि** ॥ असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः । कीदृशः द्विष्कुर्वतां द्वौ वारावभिघातं कुर्वतां द्विषां चतुष्कुर्वन् चतुरो वारान् नगैर्वृक्षैरभिघातं कुर्वन् । द्विस्त्रिश्चतुरिति कृत्वोऽर्थ इति विसर्जनीयस्य वा षत्वम् । अरीन् संग्रामाद्बहिष्करिष्यन् अपनेष्यामीति । इसुसोः सामर्थ्ये इति विसर्जनीयस्य षत्वं पक्षे । सामर्थ्यं चात्र व्यपेक्षानैकार्थीभावः । बहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥

**ज्योतिष्कुर्वन्निवैकोऽसावाटीत् संख्ये परार्ध्यवत् ।**
**तमनायुष्करं प्राप शक्रशत्रुर्धनुष्करः ॥ ६४ ॥**

**ज्योतिरित्यादि** ॥ एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्वन्निव अग्निं दीपयन्निव। पूर्ववत्पक्षे विसर्जनीयस्य षः । परार्ध्यवत् दिव्य इव । परार्धो द्युलोकः । ब्रह्माण्डसम्बन्धिन ऊर्ध्वभागस्योत्कृष्टत्वात् । तत्र भव इति परावराधमेति यत् । संख्ये संग्रामे आटीत् परिचक्राम ।' इट ईटीति सिचो लोपः । तं वानरमनायुष्करं प्राणापहारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् । धनुष्करः धनुः करे यस्येति । नित्यं समासेत्यादिना षत्वम् ॥

**अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः ।**
**यशस्करो यशस्कामं कपिं बाणैरताडयत् ॥ ६५ ॥**

**अस्यन्नित्यादि** ॥ बाणानरुष्करान् व्रणजनकान् । दिवाविभेत्यादिना टः । अस्यन् क्षिप्यन् । ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः । कृञो हेत्विस्या-

दिना टः । तेन तुल्य इत्यर्थः । पूर्ववत् षत्वम् । यशस्करो यशोजननशीलः । इन्द्रजित् यशस्कामं यशसि कामोऽस्येति तं कपिं बाणैरवाकिरत् अताडयत् । अतः 'कृकमीत्यादिनानव्ययविसर्जनीयस्य सत्वम् ॥

**चकाराधस्पदं नासौ चरन् वियति मारुतिः ।**
**मर्माविद्भिस्तमस्काण्डैर्विध्यमानोऽप्यनेकधा ॥ ६६ ॥**

**इति सत्वाधिकारः ।**

**चकारेत्यादि** ॥ असौ मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार । अधस्पदमिति मयूरव्यंसकादित्वात्सः । कस्कादिषु चेति सत्वम् । मर्माणि विध्यन्तीति क्विप् । नहिवृतीत्यादिना पूर्वपदस्य दीर्घत्वम् ॥ इति सत्वाधिकारः ॥

इतः प्रभृति अपदान्तस्य मूर्धन्य इत्यधिकृत्याह ॥

**पुरुहूतद्विषो धूर्षु युक्तान् यानस्य वाजिनः ।**
**आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत् ॥ ६७ ॥**

**पुरुहूतेत्यादि** ॥ पुरुहूतद्विष इन्द्रजितः सम्बन्धिनो यानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् । धूर्षु त्वक्ष्विति आदेशप्रत्यययोरिति षः प्रत्ययसकारत्वात् । तत्र हि इण्कोरिति वर्तते । परेण च णकारेण प्रत्याहारः । आयूंषीति नुम्विसर्जनीयेत्यादिना । सहेः साडः स इति छन्दोविषयत्वान्नोदाहृतम् । ततः छन्दसि सह इति ण्विप्रत्ययस्य विधानात् । एवं च पृतनाषाड्द्विष इति पाठान्तरमयुक्तम् ॥

**सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा ।**
**आहर्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥**

**सुषुपुरित्यादि** ॥ ते यदा भूमौ सुषुपुः निपेतुः । आदेशसकारत्वात् पूर्ववत् षत्वम् । तदा रावणिरन्यानश्वानाहर्तुमानेतुं सारथिमशिषत् आदिष्टवान् । सर्तिशास्तीत्यङ् । शास इदङ्हलोरिति इकारः । शासिवसीति षत्वम् । प्रोषितत्रासः प्रोषितात्त्रासादुपगतभयः । कर्कशश्च रौद्रः । प्रोषित इति यजादित्वात्सम्प्रसारणम् । षत्वं पूर्ववत् ॥

**प्रतुष्टूषुः पुनर्युद्धमासिषञ्जयिषुर्भयम् ।**
**आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥**

**प्रतुष्टूषुरित्यादि** ॥ अश्वा आनीता इति पुनरपि युद्धं प्रतुष्टूषुः प्रस्तोतुमारब्धुमिच्छुः । सन् अज्झनगमां सनीति दीर्घः । सनाशंसभिक्ष उः । न लोकेति षष्ठीप्रतिषेधः ।

रथमातस्थौ आरूढवान् । भयमासिषञ्जयिषुः संश्लेषयितुमिच्छुः हनूमता । अत्र स्तौतेः सनि षत्वभूतसञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वम् । आत्मीयान् भृत्यानुत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति । स्तौतीत्यादिना षत्वे प्राप्ते सःस्विदीत्यादिना षकारस्य सत्वम् ॥

**बलान्यभिषिषिक्षन्तं तरुभिः कपिवारिदम् ।**
**विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित् ॥ ७० ॥**

**बलानीत्यादि** ॥ कपिवारिदं कपिं वारिदमिव । बलान्यभिषिषिक्षन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तम् । स्वादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वम् । तमेवंविधं कपिम् विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् । सन्लिटोर्जेरिति कुत्वम । पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे । हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते ॥

**अभिष्यन्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः ।**
**सम्प्रहारसमुद्भूतैे रक्तैः कोष्णैररुश्च्युतैः ॥ ७१ ॥**

**अभिष्यन्त इत्यादि** ॥ राक्षसाः क्रोधादात्मनोऽभिष्यन्तः अन्तं नयन्तः । षोऽन्तकर्मणीत्यस्य शतरि ओतः श्यनीत्योकारलोपः । उपसर्गादिति षत्वम । सम्प्रहारसमुद्भूतैः रक्तैः कोष्णैरीषदुष्णै. । अरुश्च्युतैः व्रणान्निर्गतैः । कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव । लङि रूपम् । प्राक्सितादड्व्यवायेऽपीति षत्वम् ॥

**संग्रामे तानधिष्ठास्यन् निषद्य पुरतोरणम् ।**
**अविषीदन्नवष्टब्धान् व्यष्टभ्नान्नरविष्वणान् ॥ ७२ ॥**

**संग्राम इत्यादि** ॥ ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् राक्षसान् । संग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपि. । उपसर्गादिति षत्वम् । पुरतोरणं पुरद्वारं व्यष्टभ्नात् आश्रितवान् । निषद्य तत्रैव पुरतोरणे स्थित्वा प्राणिनो मा प्रविक्षुरिति अविषीदन् विषादमगच्छन् । निषद्य विषीदन्निति सदिरप्रतेरिति षत्वम् । अवष्टब्धान् अविदूरान् । अवाच्चालम्बनाविदूर्ययोरिति षत्वम् । व्यष्टभ्नादिति । अड्व्यवाये वेस्तम्भेरिति षत्वम् । स्तम्भुस्तुम्भ्वित्यादिना श्नाप्रत्ययः। सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्तते । नराणां विष्वणा इति सः । नरान् सशब्दमभ्यवहरन्त इत्यर्थः । वेश्चस्वनोभो जन इति षत्वम् ॥

**विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् ।**
**यन्नव्यषहतेन्द्रोऽपि कपिः पर्यषहिष्ट तत् ॥ ७३ ॥**

**विषह्येत्यादि** ॥ विषह्य सोढ्वा । कपिचेष्टितमित्यर्थात् । सात्पदाद्योरिति प्रतिषेधे प्राप्ते परिनिविभ्य इति षत्वम् । राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् विक्षिप्तवन्तः । लङि रूपम । यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढवान् । लङि रूपम् । तत्कपिः पर्यषहिष्ट लुङि रूपम् । सहेः सिवादीनामित्यादिना विभाषाषत्वम् ॥

**विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान् ।**
**विष्कन्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥**

**विष्यन्देत्यादि** ॥ विष्यन्दमानरुधिरः क्षरद्रक्तः कपिः परिघेणाहन् ताडितवान् । द्विषः शत्रून् । रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् । अनुपर्यभिनिविभ्यः स्यन्दतेरिति विभाषा षत्वं रक्तस्याप्राणित्वात् । विष्कन्तॄन् । विविधं स्कन्तुं गन्तुं शीलमेषामिति तृन् । अविस्कन्ता कपिः अगमनशीलः स्थानशील इत्यर्थः । वेः स्कन्देरनिष्ठायामिति विभाषा षत्वम् ॥

**मेघनादः परिस्कन्दन् परिष्कन्दन्तमाश्वरिम् ।**
**अबध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ ७५ ॥**

**मेघनाद इत्यादि** ॥ मेघनाद इन्द्रजित् परिष्कन्दन् परितो भ्रमन् । परिस्कन्दन्तं परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेन शीघ्रमबन्धात् बद्धवान् । लङि श्नाप्रत्यये रूपम् परेश्चेति वा षत्वम् । अपरिस्कन्दं अप्राच्यभरतत्वात् । तेन परिस्कन्दः प्राच्यभरतेष्विति निपातनम् । विस्फुरन् द्वेषादुद्गच्छन्नित्यर्थः । स्फुरतिस्फुलत्योरिति विभाषा षत्वम् ॥

**विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः ।**
**विष्कम्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात् ॥ ७६ ॥**

**विस्फुलद्भिरित्यादि** ॥ असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः । निष्फुलः सतेजाः । निष्फुलति दीप्यतीति पचाद्यच् । पूर्ववद्विभाषा षत्वम् । विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः । माभून्मोघो ब्राह्मः पाश इति । वेस्कभ्नातेरिति षत्वम् ॥

**कृषीढ्वं भर्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत् ।**
**वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान् ॥ ७७ ॥**

**कृषीढ्वमित्यादि** ॥ भर्तुः रावणस्य आनन्दं कृषीढ्वं कुरुध्वम् । लिङि रूपम् । अतो वानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मा नोत्पतिष्ट । माङि लुङ् । इणः षी-

ध्वमिति धकारस्य मूर्द्धन्यढकारः। इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत्। वदेर्लङि रूपम् ॥

**गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहागतम्।**
**खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८ ॥**

**गतमित्यादि** ॥ अङ्गुलीनां सङ्गः अङ्गुलिषङ्गः। तं गतं प्राप्तं हस्तप्राप्तमित्यर्थः। समासेऽङ्गुलेः सङ्ग इति षत्वम्। भीरोः कातरस्य यत् स्थानं तस्माद्भीरुष्ठानादिहागतम्। भीरोः स्थानमिति षत्वम्। खादिष्याम इति प्रोचुः द्विषो राक्षसा मारुतिं नयन्तो नेष्यन्तः। वर्तमानसामीप्ये भविष्यति लट् ॥

**अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्।**
**योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन् ॥ ७९ ॥**

**अग्नीत्यादि** ॥ अग्निष्टोमादिसंस्थेषु सदृशेषु ज्योतिष्टोमादिषु यो द्विजानरक्षीत् तस्य मानुषस्यायं दूत इति चावदन्। नयन्तो द्विषः। अग्नेस्तुत्स्तोमसोमाः। ज्योतिरायुषस्तोम इति षत्वम् ॥

**नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः।**
**मातुःस्वसुश्च तनयान् खरादीन् विजघान यः ॥ ८० ॥**

**नासामित्यादि** ॥ रावणस्य या मातुः स्वसा भगिनी सा मातृष्वसा। मातृपितृभ्यामिति षत्वम्। तस्या अपत्यं मातृष्वसेयी। मातृष्वसुश्चेति ढगन्तलोपौ। तस्या यो नासां लुलाव। मातुः स्वसुश्च तनयान् खरादीन्निजघान। मातुःपितुर्भ्यामन्यतरस्यामिति षत्वाभावपक्षे विभाषा स्वसृपत्योरिति षष्ठ्या अलुक् ॥

**प्रादुःषन्ति न संत्रासा यस्य रक्षःसमागमे।**
**तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः ॥ ८१ ॥**

**प्रादुरित्यादि** ॥ यस्य रक्षःसमागमे सन्त्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति। उपसर्गप्रादुर्भ्यामित्यादिना दुःशब्दादुत्तरस्यास्तिसकारस्य श्नसोरल्लोप इत्यल्लोपे कृते षत्वम्। प्रादुः सकारस्य च ष्टुत्वम्। तस्य क्षत्रियदुःषूतेः दुष्पुत्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः। सूयत इति सूतिः। दुर्निन्दायामिति सूतेः सकारस्य सुविनिर्दुर्भ्य इति षत्वम् ॥

**दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः।**
**चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम् ॥ ८२ ॥**

**दृष्ट्वेत्यादि** ॥ राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः । सुषुप्तं गाढनिद्रम् । वच्यादिना सम्प्रसारणम् । पापोऽयं विषमाशयः । सुपीत्यादिना षत्वम् । चौरकर्मणि निष्णातः कुशलः । निनदीभ्यां स्नातेः कौशल इति षत्वम् ॥

कुलकम् ॥

**सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषाम् ।**
**स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥ ८३ ॥**

**सुप्रतीत्यादि** ॥ येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थतश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणाम् । सूत्रं प्रतिष्णातमिति निपातनम् । कपिष्ठलसमत्विषां कपिष्ठलो नाम द्विजर्षभो गोत्रप्रवर्तकः । कपिष्ठलो गोत्र इति साधुः । तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीं ऐक्षत ॥

कीदृशीमित्याह ॥

**सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिराम् ।**
**शयानां कुष्ठले तारां दिविष्ठामिव निर्मलाम् ॥ ८४ ॥**

**सर्वेत्यादि** ॥ यावन्तो नारीगुणाः तैः प्रष्ठां अग्रगामिनीम् । प्रष्ठोऽग्रगामिनीति साधुः । विष्टरस्थामासनस्थाम् । वृक्षासनयोर्विष्टर इति साधुः । गविष्ठिरां वाचि स्थिराम् । गवियुधिभ्यामिति षत्वम् । अस्मादेव वचनात् सप्तम्या अलुक् । कुष्ठले शयानां कोः स्थले भूतले शुद्धे । विकुशमित्यादिना षत्वम् । दिविष्ठां दिवि तिष्ठतीति सुपि स्थ इति कः । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । गगनस्थां तारामिव निर्मलाम् । अम्बाम्बेत्यादिना षत्वम् ॥

**सुषाम्नीं सर्वतेजःसु तन्वीं ज्योतिष्टमां शुभाम् ।**
**निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥ ८५ ॥**

**सुषाम्नीमित्यादि** ॥ शोभनं साम यस्या इति विगृह्य अनउपधालोपिनोऽन्यतरस्यामिति ङीप् । सुषामादिषु चेति षत्वम् । सुष्ठु प्रियंवदामित्यर्थः । तन्वीं कृशां शुभाम् कल्याणीं सर्वतेजःसुः ज्योतिष्टमां अतिशयेन ज्योतिष्मतीम् । ह्रस्वात्तादौ तद्धित इति षत्वम् । एवंच कृत्वा निष्टपन्तीमिवात्मनं सकृज्ज्वलयन्तीमिवात्मानम् । निसस्तपतावनासेवन इति षत्वम् । वनं ज्योतिःसात्कुर्वतीं अज्योतिर्ज्योतिः कुर्वाणां कार्त्स्न्येन दीपयन्तीमित्यर्थः । कार्त्स्न्ये सातिप्रत्ययः । तत्र नुम्विसर्जनीयेत्यादिना प्राप्तस्य षत्वस्य सात्पदाद्योरिति प्रतिषेधः । युष्मदित्यादिनोदाहृतं छान्दसत्वात् ॥

**मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराकुलाम् ।**
**उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ ८६ ॥**

**मध्वित्यादि** ॥ मधुसाद्भूतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नम् यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाद्भूतकिञ्जल्कम् । आदेशप्रत्यययोरिति प्राप्तस्य पूर्ववत्प्रतिषेधः । तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलम् । उल्लसत्कुसुमां चलत्पुष्पाम् हेमरत्नलतामिव यथा हेमरत्नमयी कल्पतरुलतां पुण्यां पवित्रां तद्वत्तामपीत्यर्थः ॥

**विलोचनाम्बु मुञ्चन्तीं कुर्वाणां परिसेसिचाम् ।**
**हृदयस्येव शोकाग्निसन्तप्तस्योत्तमव्रताम् ॥ ८७ ॥**

**विलोचनेत्यादि** ॥ विलोचनाम्बु अस्रु मुञ्चन्ती विक्षिपन्तीम् । हृदयस्य शोकाग्निसंतप्तस्य परिसेसिचाम् । भृशं निर्वाणामिव कुर्वाणामैक्षतेति पूर्वेण सम्बन्धः । सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्यय । उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचो यङीति प्रतिषेधः । उत्तमव्रतां पतिव्रतात्वात् ॥

**दृष्ट्वा तामभनग् वृक्षान् द्विषो घ्नन् परिसेधतः ।**
**परितस्तान् विचिक्षेप क्रुद्धः स्वयमिवानिलः ॥ ८८ ॥**

**दृष्ट्वेत्यादि** ॥ तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् । द्विषः शत्रून् परिसेधतः आगच्छतः घ्नन् हिंसन् । पूर्ववत्प्राप्तस्य सेधतेर्गताविति प्रतिषेधः । परितश्च समन्तादुद्विचिक्षेप उन्मूलितवान् । लिटः संयोगादित्वादकित्त्वे गुणः । क्रुद्धः स्वयमिव साक्षादिवानिलः ॥

**अप्रतिस्तब्धविक्रान्तमनिस्तब्धो महाहवे ।**
**विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः ॥ ८९ ॥**

**अप्रतीत्यादि** ॥ घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः । अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपिम् । स्तन्भेरिति प्राप्तस्य षत्वस्य प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनम् । अस्त्राणि महाहवे विसोढवन्तं सोढ इति प्रतिषेधः । व्यतस्तम्भत् निष्पादितवान् । एवं नयन्तोऽवदन्निति योज्यम् । स्तम्भेर्ण्यन्तस्य स्तम्भुसिवुसहां च ङीति षत्वप्रतिषेधः ॥

**ते विज्ञायाभिसोष्यन्तं रक्तै रक्षांसि सव्यथाः ।**
**अन्यैरप्यायतं नेहुर्वरत्राशृङ्खलादिभिः ॥ ९० ॥**

**त इत्यादि** ॥ ते राक्षसाः ये मारुतिं नेष्यन्तः । रक्तैः रक्षांसि विसोष्यन्तं अभिषेक्ष्यन्तं कपिम् । सुनोतेः स्यसनोरिति षत्वम् । यद्याकृष्यमाणो न नीयेत अवश्यं

राक्षसान् रक्तैः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः । अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घ नेहुः बध्नन्ति स्म । णह बन्धन इत्यस्य लिटि रूपम् ॥

**विषसादेन्द्रजिद्बुद्ध्वा बन्धे बन्धान्तरक्रियाम् ।**
**दिव्यबन्धो विषहते नापरं बन्धनं यतः ॥ ९१ ॥**

**इति षत्वाधिकारः ।**

**विषसादेत्यादि** ॥ बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्ध्वा इन्द्रजित् विषसाद विषादमुपगतः । नियतं दिव्यबन्धं मुक्तवानिति । यतो दिव्यबन्धो नापरं स्वयं बन्धनं विषहते । अतो विषसादेति योज्यम् । सदिसञ्ज्योः परस्य लिटि षत्वप्रतिषेधः । पूर्वस्य तु सदिरप्रतेरिति भवत्येव । विषहत इति न प्रतिषेधः तत्र सोढरूपस्य ग्रहणात् ॥ ॥ इति मूर्द्धन्याधिकारः ॥

इतः प्रभृति णत्वमधिकृत्याह ॥

**मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः ।**
**उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिम् ॥ ९२ ॥**

**मुष्णन्तमित्यादि** ॥ राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः नतु दर्शनगोचरं गताः । अप्रभातत्वात् । कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव । विस्तीर्णोरस्थलं विस्तृतवक्षसम् । तत्र रषाभ्यां नो ण इति णत्वम् ॥

**बहुधा भिन्नमर्माणो भीमाः खरणसादयः ।**
**अग्रेवणं वर्तमाने प्रतीच्यां चन्द्रमण्डले ॥ ९३ ॥**

**बहुधेत्यादि** ॥ वानरद्विषो राक्षसा ऊचुरिति वक्ष्यमाणेन सम्बन्धः । कीदृशाः किमूचुरित्याह बहुधा भिन्नमर्माण इति । यानि कालान्तरे प्राणहराणि मर्माणि तानि बहुधा भिन्नानि येषामिति बहुव्रीहिः । अट्पवर्गसमुदायस्य व्यवधानादट्कुप्वाङित्यादिना णत्वम् । खरणसादयः खरस्येव नासिका यस्येति । अज्नासिकाया इत्यच् नसादेशश्च । पूर्वपदात्संज्ञायामिति णत्वम् । खरणसादयो राक्षसाः । वनस्याग्रे अग्रेवणम् । राजदन्तादित्वात्परनिपातः । वनं पुरगेति णत्वम । प्रतीच्यां दिशि यद्वनं तस्य वनस्याग्रे उपरि वर्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः ॥

**निर्वणं कृतमुद्यानमनेनाम्रवणादिभिः ।**
**देवदारुवनामिश्रैरित्यूचुर्वानरद्विषः ॥ ९४ ॥**

**निर्वणमित्यादि** ॥ उद्यानं संनिवेशविशेषः । निर्वणं वृक्षरहितं अनेन कपिना

कृतं आम्रवणादिभिरुपलक्षितम् । उभयत्रापि प्रनिरन्तेति णत्वम् । देवदारुवनामिश्रै-रिति विभाषौषधीत्यादिना णत्वं न भवति । व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यमिति वचनात् । इत्येवमूचुः ॥

**उपास्थिषत संप्रीताः पूर्वाह्णे रोषवाहणम् ।**
**राक्षसाः कपिमादाय पतिं रुधिरपायिणाम् ॥ ९५ ॥**

**उपेत्यादि** ॥ ते राक्षसाः पतिमुपास्थिषत उपागताः । दृष्टिपथं गता इत्यर्थः । उपाद्देवपूजेत्यादिना सङ्गतिकरणे तङ् । स्थाघ्वोरिच्च । संप्रीताः हृष्टाः तेषामनुज्ञातप्रवे-शत्वात् । पूर्वाह्णे प्रत्यूषसि । अह्नोऽदन्तादिति णत्वम् । रोषवाहणं कपिमादाय । रोष-स्यासनीकृतम् । वाहनमाहितादिति णत्वम् । रोषस्य तत्राधीयमानत्वात् । पतिं रुधिर-पायिणां राक्षसानाम् । पानं देश इति णत्वम् ॥

**सुरापाणपरिक्षीबं रिपुदर्पहरोदयम् ।**
**परस्त्रीवाहिनं प्रापुः साविष्कारं सुरापिणः ॥ ९६ ॥**

**सुरेत्यादि** ॥ सुरापाणात्परिक्षीबं मत्तं रावणम् । वा भावकरणयोरिति णत्वम् । रिपुदर्पहर उदयो वृद्धिर्यस्य तम् । परस्त्रियं वाहयितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहि-नम् । प्रातिपदिकान्त इति णत्वाभावः पाक्षिकः । प्रापुः सङ्घु निकटीकृताः । साविष्काराः साहङ्काराः । सुरापिणः सुरापैर्युक्ताः । सुरां पिबन्तीति गापोष्टक् । ते येषां सन्तीति मत्वर्थीयः । एकाजुत्तरपदे ण इति णत्वं उत्तरस्य प्रातिपदिकान्तस्यैकाच्त्वात् ॥

**संघर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।**
**प्रहिण्वन्तो हनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥**

**समित्यादि** ॥ संहर्षयोगिणः स्पर्द्धायोगिनः । कुमति चेति णत्वम् । ते अन्यो-न्याभिभवेच्छया त्रिदशद्विषो रावणस्य पादौ प्रणेमुः । उपसर्गादसमासेऽपीति णत्वम् । हनूमन्तं प्रहिण्वन्तः ढौकयन्तः । द्विषन्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तम् । मीञ् हिंसायां क्रैयादिकः । हिनुमीना इति णत्वम् ॥

**प्रवपाणि शिरो भूमौ वानरस्य वनच्छिदः ।**
**आमन्त्रयत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥**

**प्रवपाणीत्यादि** ॥ अस्य वानरस्य वनच्छिदः शिरो भूमौ प्रवपाणि छित्त्वा पातयामि । आनि लोडिति णत्वम् । वपिरत्र पातने वर्तते । संक्रुद्धः रक्षसां पतिः स्वामी समिति समूहं आमन्त्रयत भाषितवान् ॥

**प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव ।**
**ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः ॥ ९९ ॥**

**प्रण्यगादीदित्यादि** ॥ तत उत्तरकालं विभीषणो राक्षसेन्द्रं प्रणिघ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तुं प्रवृत्तः । घन इव प्रणिनदन् गर्जन् । स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः । सर्वत्र नेर्गदेति णत्वम् ॥

**प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषम् ।**
**प्रणिजानीहि हन्यन्ते दूता दोषे न सत्यपि ॥ १०० ॥**

**प्रणिशाम्येत्यादि** ॥ हे दशग्रीव प्रणिशाम्य रोषं त्यज । लोटि श्यनि रूपम् । शमामष्टानामिति दीर्घः । रुषं प्रणियातुमलं न किञ्चित् । पूर्ववण्णत्वम् । प्रणिजानीहि अवगच्छ । सत्यपि दोषे न हन्यन्ते दूता इति । जानातेः शेषधातोरुपदेशावस्थायां अकखाद्यषान्तत्वात् शेषे विभाषेत्यादिना णत्वम् ॥

**प्राणयन्तमरिं प्रोचे राक्षसेन्द्रो विभीषणम् ।**
**प्राणिणिषुर्नपापोऽयं योऽभाङ्क्षीत् प्रमदावनम् ॥ १०१ ॥**

**प्राणयन्तमित्यादि** ॥ अरिं कापि यः प्राणयति जीवयति तं प्राणयन्तं विभीषणम् । श्वस प्राणने अन चेत्यस्य रूपम् । अनितेरिति णत्वम् । प्रोचे राक्षसेन्द्रः । न प्राणिणिषुः न जीवितुमिच्छुरयं पापः । उभौ साभ्यासस्येति णत्वं द्वयोरपि । योऽभाङ्क्षीत् भग्नवान् । प्रमदावनं हलन्तलक्षणा वृद्धिः ॥

**प्राघानिषत रक्षांसि येनाप्तानि वने मम ।**
**न प्रहण्मः कथं पापं वद पूर्वापकारिणम् ॥ १०२ ॥**

**प्राघानिषतेत्यादि** ॥ मम आप्तानि अक्षप्रभृतीनि येन वने प्राघानिषत मारितानि । कर्मणि लुङ् । चिण्वदिट् । हो हन्तेरिति घत्वम् । तपरपरिच्छिन्नाकारपूर्वस्य नकारस्य हन्तेरत्पूर्वस्येति णत्वं न भवति । तं पूर्वापकारिणं पापं कथं न प्रहण्मः मारयाम इति वद कथय । म्वोर्वेति णत्वम् ॥

**वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।**
**मा कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुम् ॥ १०३ ॥**

**वेश्मेत्यादि** ॥ शत्रोर्वेश्मान्तः गृहमध्य एव हननं कोपान्मम करिष्यतः । अन्तरदेश इति नकारस्य णत्वम् । हननस्याभावरूपस्यादेशत्वात् । अन्तरयणमन्तरायणं

विघातं मा कार्षीः । अयनं चेति णत्वम् । प्रणायार्हं दीर्घप्रस्थानार्हममुमवेहि अवगच्छ । कृत्यच इति णत्वम् । अच उत्तरस्य नकारस्य कृत्स्थत्वात् ॥

**प्रहीणजीवितं कुर्युर्ये न शत्रुमुपस्थितम् ।**
**न्याय्याया अपि ते लक्ष्म्याः कुर्वन्त्याशु प्रहापणम् १०४ ॥**

**प्रहीणेत्यादि ॥** शत्रुमुपस्थितं प्रहीणजीवितं ये न कुर्युः । जहातेरोदितश्चेति निष्ठादेशनकारस्य पूर्ववण्णत्वम् । ते न्याय्याया अपि कुलक्रमादागताया अपि लक्ष्म्याः प्रहापणं त्याजनं कुर्वन्ति । णेर्विभाषेति णत्वम् ॥

**कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः ।**
**शक्तो जगति शक्रोऽपि कर्तुमायुःप्रगोपणम् ॥ १०५ ॥**

**कः कृत्वेत्यादि ॥** अवद्यधीः योऽबुद्धिः रावणामर्षस्य प्रकोपणमभिवृद्धिं कृत्वा आयुःप्रगोपणं कर्तुं शक्रोऽपि कः शक्तः । हलश्चेजुपधादिति णत्वम् । कुपगुपयोर्हलन्त-योरिगुपधत्वात् ॥

**वनान्तप्रेङ्खणः पापः फलानां परिणिंसकः ।**
**प्रणिक्षिष्यति नो भूयः प्रणिन्द्यास्मान्मधून्ययम् ॥ १०६ ॥**

**वनेत्यादि ॥** प्रेङ्खति गच्छतीति प्रपूर्वादिङ्खेः कर्तरि ल्युट् । वनान्तस्य वनसमी-पस्य प्रेङ्खणः । इजादेः सनुम इति णत्वम् । फलानां परिणिंसकः भक्षयिता । णिसि चु-म्बन इत्यस्य रूपम् । अस्मान् प्रणिन्द्य तिरस्कृत्य । भूयः पुनरप्ययं मधूनि नोऽस्माकं प्रणिक्षिष्यति भोक्ष्यति । णिक्ष चुम्बन इत्यस्य रूपम् । वानिसनिक्षनिन्दामिति णत्वम् ॥

**हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः ।**
**नातिप्रवेपनं वायोर्मया गोपायिते वने ॥ १०७ ॥**

**हरेरित्यादि ॥** मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारो नास्ति । हिमद्रुहः आदित्यस्य न प्रभानं न प्रकर्षेण दीप्तिः । वायोर्नातिप्रवेपनं मन्दगमनम् । तदनेन भग्नमित्यर्थात् । कृत्यच इति प्राप्तस्य णत्वस्य न भाभूपूकमिगमी-त्यादिना प्रतिषेधः ॥

**दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः ।**
**प्रनष्टविनयेनाग्र्यः स्वादुः पुष्पासवो वने ॥ १०८ ॥**

**दुष्पान इत्यादि ॥** पुनरेतेन प्रनष्टविनयेन कपिना पुष्पासवो दुष्पानः दुःखेन

पास्यत इति आतो युच् । षात्पदान्तादिति णत्वस्य प्रतिषेधः । भृङ्गसम्भृतो भ्रमरसञ्चितः । प्रनष्ट इति नशेः षान्तस्येति प्रतिषेधः । अग्र्यः श्रेष्ठः ॥

**रोषभीममुखेनैवं क्षुभ्नतोक्ते प्लवङ्गमः ।**
**प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ १०९ ॥**

**इति णत्वाधिकारः ।**

**रोषेत्यादि** ॥ रोषभीममुखेन इति पदव्यवायेऽपि णत्वप्रतिषेधः । भीममुख इत्यनेन निमित्तनिमित्तिनोर्व्यवधानात् । क्षुभ्नादिषु चेति णत्वप्रतिषेधः । एवमुक्ते सति प्लवङ्गमः रावणं प्रोचे वक्तुं प्रवृत्तः । वाक्यं वक्ष्यमाणं सानुनयं अनुकूलम् । किमर्थं स्वार्थस्य सिद्धये । स्वार्थश्च सीताप्रत्यर्पणम् ॥ इति णत्वाधिकारः ॥

इतः प्रभृति प्रकीर्णकश्लोकानाह ॥

**दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः ।**
**लोकत्रयपतेः क्रोधः कथं तृणलघुस्तव ॥ ११० ॥**

**दूतमित्यादि** ॥ दूतं सन्देशस्य हारकं एकमद्वितीयं बद्धं अस्वतन्त्रीकृतं वेश्मानीतं पश्यत इति सर्वमेतन्न रोषकारणं अतो लोकत्रयपतेस्तवायं तृणवल्लघुरसारः कथं कोपः॥

**अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे ।**
**कस्माद्वा नीतिनिष्णस्य संरम्भस्तव तापसे ॥ १११ ॥**

**अग्नीत्यादि** ॥ अग्न्याहितजनप्रह्वे आहिताग्नौ जने प्रवणे । वाहिताग्न्यादिषु पूर्वनिपातः । तस्मिन् विजिगीषापराङ्मुखे त्यक्तराज्यत्वात् तापसे रामे । तपः सहस्राभ्यां विनिनी । अण् चेत्यण् । निष्णस्य तव । नीतौ पटुप्रज्ञस्य कस्माद्धेतोः संरम्भः रोषः ॥

**न सर्वरात्रकल्याण्यः स्त्रियो वा रत्नभूमयः ।**
**यं विनिर्जित्य लभ्यन्ते कः कुर्यात्तेन विग्रहम् ॥ ११२ ॥**

**नेत्यादि** ॥ यं विनिर्जित्य सर्वरात्रं कल्याण्यः स्त्रियो न लभ्यन्ते । सर्वाश्च ता रात्रयश्चेति पूर्वकालेति सः । अहः सर्वेत्यादिना अच् । सर्वरात्रं कल्याण्य इति सः । न रत्नभूमयः रत्नाकराः रत्नानि भूमयश्चेति सः । कः तेन सह विग्रहं कुर्यात् सन्धिरेव युक्तः ॥

तदेव दर्शयन्नाह ॥

**सङ्गच्छ रामसुग्रीवौ भुवनस्य समृद्धये ।**
**रत्नपूर्णाविवाम्भोधी हिमवान् पूर्वपश्चिमौ ॥ ११३ ॥**

**सङ्गच्छेत्यादि ॥** यथा रत्नपूर्णावम्भोनिधी पूर्वपश्चिमौ भुवनस्य समृद्धये हिमवान् सङ्गतवान् तथा त्वमपि रामसुग्रीवौ भुवनस्य समृद्धये सङ्गच्छ सङ्गतिं कुरु । सकर्मकत्वात्समोगमिति तङ् न भवति ॥

तच्च संगतं परदारार्पणेनैवेति दर्शयन्नाह ॥

**सुहृदौ रामसुग्रीवौ किङ्कराः कपियूथपाः ।**
**परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीम् ॥ ११४ ॥**

**सुहृदावित्यादि ॥** रामसुग्रीवौ सुहृदौ लभ्येते । सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातनम् । तत्प्रीतिलाभात् किङ्करा लभ्यन्ते । किं कुर्वन्तीति दिवाविभेति टः । कपियूथपाः नीलप्रभृतयः । तस्मान्मुञ्च मैथिलीमिति ॥

किंच सीताप्रत्यर्पणात् पुरुषार्थप्राप्तिरिति दर्शयन्नाह ॥

**धर्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रताम् ।**
**कामं विश्वासवासेन सीतां दत्त्वाप्नुहि त्रयम् ॥ ११५ ॥**

**धर्ममित्यादि ॥** सीतां प्रत्यर्पयन् धर्मम् । अधर्मविरतेः अर्थम् । रामेण मित्रताम् । सर्वलाभानामर्थसम्पन्नमित्रलाभस्य महत्त्वात् । विश्वासवासेन रामविश्वासपूर्वकेणावस्थानेन कामम् । अतः सीतां दत्वा आप्नुहि लभस्व । त्रयं त्रिवर्गं त्रयोऽवयवा अस्येति । द्वित्रिभ्यां तयस्यायज्वा ॥

रिपुरेवास्तु किं तेन मित्रीकृतेन न वासौ शक्तोऽपकर्तुमिति चेदाह ॥

**विराधताडकावालिकबन्धखरदूषणैः ।**
**न च न ज्ञापितो यादृङ्मारीचेनापि ते रिपुः ॥ ११६ ॥**

**विराधेत्यादि ॥** यादृगसौ रिपुः तादृग्विराधादिभिः नच न ज्ञापितः तव अपि तु ज्ञापित एवेत्यर्थः । तस्मात्तेन सह मैत्री युक्ता न विग्रह इति भावः । यादृगिति त्यदादिषु दृश इति क्विन् । आ सर्वनाम्नः ॥

खरादीन् व्यापादयता तेनैव वैरकारणमाचरितं न मयेति चेदाह ॥

**खरादिनिधनं चापि मा मंस्था वैरकारणम् ।**
**आत्मानं रक्षितुं यस्मात् कृतं तन्न जिगीषया ॥ ११७ ॥**

**खरेत्यादि ॥** खरादिनिधनं चापि वैरकारणं मा मंस्थाः माज्ञासीः । लुङि रूपम् । यस्मादात्मानं संरक्षितुं तत् खरादिनिधनं कृतं न तु जिगीषया विजेतुमिच्छया ॥

**ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः ।**
**महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः ॥ ११८ ॥**

**तत इत्यादि ॥** ततः कपिवाक्यानन्तरं क्रोधोऽनिल इव तस्यापातेन संश्लेषेण कम्प्रा कम्पनशीला आस्याम्भोजानां मुखपद्मानां संहतिर्यस्य स एवं महाह्रद इव क्षुभ्यन् चलन् । दिवादित्वाच्छ्यन् ॥

**हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः ।**
**दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ॥ ११९ ॥**

**हतेत्यादि ॥** हताः राक्षसयोधाः अक्षप्रभृतयो येन । विरुग्णाः भग्नाः । ओदितश्चेति निष्ठानत्वम् । उद्यानशाखिनो येन । तस्यैवंविधस्य तव दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशम् । सन्देशमात्रस्य प्रापका हि दूता इति भावः ॥

अभ्याहितजनप्रह्वे तापसे कस्मात्संरम्भ इत्याह ॥

**पङ्गुबालस्त्रिया निघ्नन् कबन्धखरताडकाः ।**
**तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी ॥ १२० ॥**

**पङ्गुबालेत्यादि ॥** पङ्गुमङ्गविकलं कबन्धं बालं खरं स्त्रियं ताडकां निघ्नन् व्यापादयन् यदि तपस्वी काकुत्स्थः कीदृक् पातकीति कथय । इदंकिमोरीश्की ॥

यदुक्तं यं विनिर्जित्य स्त्रियो रत्नभूमयश्च न लभ्यन्त इत्याह ॥

**अभिमानफलं जानन् महत्त्वं कथमुक्तवान् ।**
**रत्नादिलाभशून्यत्वान्निष्फलं रामविग्रहम् ॥ १२१ ॥**

**अभीत्यादि ॥** अभिमानः फलं यस्य महत्त्वस्य तज्जानन् रत्नादिलाभशून्यं रामविग्रहं कथं निष्फलमुक्तवानसि । विग्रहे सति अभिमानफलं महत्त्वं स्यात् ॥

सीतां प्रत्यर्पयन् धर्ममाप्नुहीत्येतदप्ययुक्तमित्याह ॥

**परस्त्रीभोगहरणं धर्म एव नराशिनाम् ।**
**सुखमस्तीत्यभाषिष्ठाः का मे साशङ्कता त्वयि ॥ १२२ ॥**

**परेत्यादि ॥** परस्त्रीणां हरणं परेषाम्भोगहरणं च द्वयमपि नराशिनां धर्म एव आचार एव । अतो सुखमस्तीत्यभाषिष्ठाः अभिहितवानसीति सीतां प्रत्यर्पयन् धर्ममाप्नुहीति । लुङि रूपम् । भयात् प्रत्यर्पयसि चेदाह । का मे साशङ्कता त्वयीति त्रैलोक्यविजयित्वात् । त्वयीति हनूमद्व्यपदेशेन रामं सूचयति ॥

सङ्गच्छ रामसुग्रीवावित्येतदपि न घटत इत्याह ॥

**ब्रूहि दूरविभिन्नानामृद्धिशीलक्रियान्वयैः ।**
**हनूमन् कीदृशं सख्यं नरवानररक्षसाम् ॥ १२३ ॥**

**ब्रूहीत्यादि ॥** ऋद्ध्या विभूत्या । शीलेन स्वभावेन । क्रियया अनुष्ठानेन । अन्वयेन कुलेन । दूरविभिन्नानां नरादीनां कीदृशं सख्यमिति हनूमन् त्वमेव ब्रूहि ॥

विराधादिभिर्ज्ञापितोऽसि यादृगरिरित्यत्रोत्तरमाह ॥

**एको द्वाभ्यां विरोधस्तु जिताभ्यामविवक्षितः ।**
**हतश्छलेन मूढोऽयं तेनापि तव कः स्मयः ॥ १२४ ॥**

**एक इत्यादि ॥** एकेनापि विराधेन प्रथमं द्वावपि जितौ ताभ्यां पश्चाद्धत. । तत्रापि न प्रकाशं अपि तु छलेन । यतोऽसौ मूढोऽल्पबुद्धिः । तथाप्यविवक्षितः शौर्योन्न प्रतीतः । तेनापि हतेन तव विस्मयो जातः ॥

**मन्नियोगाच्च मारीचः पलायनपरायणः ।**
**युयुत्सारहितो रामं ममारापहरन् वने ॥ १२५ ॥**

**मन्नियोगादित्यादि ॥** मारीचस्तु यतो राममपहरन् ममार । मन्नियोगादादेशात् । पलायनपरायणः अपसर्पणनिष्ठः सन् । पलायनपरायण इति परस्य नामरूपत्वादनुपसर्गत्वान्न णत्वम् । युयुत्सारहित. योद्धुमिच्छारहितः । मन्नियोगादिति प्रत्ययोत्तरपदयोश्चेति अस्मदो मदादेशः ॥

**निजघानान्यसंसक्तं सत्यं रामो लतामृगम् ।**
**त्वमेव ब्रूहि सञ्चिन्त्य युक्तं तन्महतां यदि ॥ १२६ ॥**

**निजघानेत्यादि ॥** रामो लतामृगं वानरं वालिनं निजघानेति सत्यमेतत् । किन्तु अन्यसंसक्तं सुग्रीवेण सह युद्ध्यमानं हतवान् तच्च त्वमेव सञ्चिन्त्य ब्रूहि युक्तं तन्महतां यदि ॥

**पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं वधः ।**
**क्षमिष्यते दशास्येन क्त्येयं तव दुर्मतिः ॥ १२७ ॥**

**पुंसेत्यादि ॥** आत्मानं रक्षितुं पुंसा भक्ष्येण भक्षणार्हेण । सतां बन्धूनां खरदूषणादीनां वधो दशास्येन क्षमिष्यते सहिष्यते क्त्येयं क्वभवेयं तव दुर्मतिर्दुष्टबुद्धिः । क्वशब्दादव्ययात्त्यप् । अमेहक्वतसित्रेभ्य इति परिगणनात् ॥

इदानीं कपिर्दशाननोक्तं दूषयन्नाह ॥

**कपिर्जगाद दूतोऽहमुपायं तव दर्शने ।**
**द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्वकम् ॥ १२८ ॥**

**कपिरित्यादि ॥** तव दर्शने अन्य उपायो नास्तीती बुद्धिपूर्वकं निरूप्य द्रुमभङ्गं राक्षसविनाशं च उपायमकार्षं कृतवानस्मीति कपिर्जगाद । अन्यथा दूतोऽहमागत इति मदावलिप्तः को मां गणयेत् । अतः सदृशमेव मया कृतमिति ॥

**आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत् ।**
**दशग्रीव कथं ब्रूषे तानवध्यान् महीपतेः ॥ १२९ ॥**

**आत्रीत्यादि ॥** हे दशग्रीव ये त्वत्काः त्वद्ग्रामणीकाः कबन्धादयः । स एषां ग्रामणीरिति कन् । आत्रिकूटं त्रिकूटपर्वतमभिव्याप्य जगत् निर्जङ्गमं निर्जन्तुकमकार्षुः । तान् महीपतेः रामस्य कथमवध्यान् ब्रूषे । अशिष्टनिग्रहो हि महीपतेर्धर्मः । जङ्गम इति गमेर्यङ्लुगन्तस्यापि रूपम् ॥

**अभिमानफलं प्रोक्तं यत्त्वया रामविग्रहे ।**
**विनेशुस्तेन शतशः कुलान्यसुररक्षसाम् ॥ १३० ॥**

**अभीत्यादि ॥** माऽभूद्रामविग्रहे रत्नादिलाभः अभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन निमित्तेन शतशोऽनेकशः असुररक्षसां कुलानि विनेशुः विनष्टानि ॥

**यत्स्वधर्ममधर्मं त्वं दुर्बलं प्रत्यपद्यथाः ।**
**रिपौ रामे च निःशङ्को नैतत् क्षेमङ्करं चिरम् ॥ १३१ ॥**

**यत्स्वेत्यादि ॥** यदधर्मं परस्त्रीभोगहरणं दुर्बलं असारं अश्रेयसां आवाहकत्वात् । स्वधर्ममात्मीयमाचारं त्वं प्रत्यपद्यथाः प्रतिपन्नवानसि स्वधर्म एव नराशिनामिति । लङि श्यनि रूपम् । यच्च रिपौ रामे निःशङ्कः निर्भयः विहरसि का मे साशङ्कता त्वयाति । तदेतदुभयमपि न चिरं क्षेमङ्करं कल्याणकरम् । क्षेमप्रियमद्रेऽण्चेति खच् ॥

**अन्वयादिविभिन्नानां यथा सख्यमनीप्सितम् ।**
**नैषीर्विरोधमप्येवं सार्धं पुरुषवानरैः ॥ १३२ ॥**

**अन्वयेत्यादि ॥** यथा नरादीनां अन्वयादिभिर्दूरविभिन्नत्वात् सख्यमनीप्सितं आप्तुमनिष्टं एवं पुरुषवानरैः सार्धं विग्रहमपि नैषीः नेष्टवानसि ॥

**विराधं तपसां विघ्नं जघान विजितो यदि ।**
**वरो धनुर्भृतां रामः स कथं न विवक्षितः ॥ १३३ ॥**

**विराधमित्यादि ॥** तपसां विघ्नं विराधम् । विहन्यतेऽस्मिन्निति घञर्थे कविधानमिति कः । तादृक् छलेनापि हन्तुं न दोषायेति दर्शयति । धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामो यदि जघान स कथं न विवक्षितः । यतो राममप्यसौ जितवान् ॥

**प्रणश्यन्नपि नाशक्नोदत्येतुं बाणगोचरम् ।**
**त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ १३४ ॥**

**प्रणश्यन्नित्यादि ॥** मारीचः प्रणश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् । रामहस्तिनः रामो हस्तीव तस्य बाणगोचरं बाणपदवीं अत्येतुं अतिक्रमितुं नाशक्नोत् न शक्तवानिति त्वयैवोक्तं ममारेत्यभिदधता न मया । यदि शक्नोति अतिक्रमितुं न ममार ॥

**अन्यासक्तस्य यद्वीर्यं न त्वं स्मरसि वालिनः ।**
**मूर्च्छावान् नमतः सन्ध्यां ध्रुवं तद्बाहुपीडितः ॥ १३५ ॥**

**अन्येत्यादि ॥** सन्ध्यां देवतां नमतो अन्यासक्तस्य वालिनो यद्वीर्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चेतयसि । कुतः बाहुपीडितः सन् मूर्च्छावान् जातः । अतएव न स्मरसि येनैवमुक्तवानसि निजघानान्यसंसक्तमिति ॥

**असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम् ।**
**सीतामर्पय नन्तव्ये कोशदण्डात्मभूमिभिः ॥ १३६ ॥**

**असदित्यादि ॥** यतो बलवद्भ्योऽपि बलीयान् रामः तस्माद्बलिना रामेण सह विग्रहं मुञ्च त्यज । कीदृशं बन्धुवधोपज्ञं प्रथमतो ज्ञातिविनाशेन विदितमित्यर्थः । उपज्ञायत इत्युपज्ञा । इगुपधेति कः । बन्धुवधस्योपज्ञेति सः । उपज्ञोपक्रममिति नपुंसकलिङ्गता । तत् सामानाधिकरण्यादसदिति नपुंसकलिङ्गता । नन्तव्ये प्रणामार्हे । कोशदण्डात्मभूतिभिः सह सीतामर्पय ॥

**स्फुटपरुषमसह्यमित्थमुच्चैः सदसि मरुत्तनयेन भाष्यमाणः ।**
**परिजनमभितो विलोक्य दाहं दशवदनः प्रदिदेश वानरस्य १३७**

**॥ इति भट्टिकाव्ये नवमः सर्गः ॥**

**॥ इति प्रकीर्णकाः ॥**

**स्फुटेत्यादि** ॥ इत्थं स्फुटपरुषं उक्तप्रकारेणस्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं सोढुमशक्यम् । उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः । इत्थमित्यनेन वस्तुनः परिसमापितत्वात् । तेन वर्तमानसामीप्य इति लट् । परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान् विलोक्यवानरस्य दाहं प्रदिदेश आदिष्टवान् ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे चतुर्थः परिच्छेदः ॥

काव्यस्य मारुतिसंयमो नाम नवमः सर्गः ॥ ९ ॥

---

# भट्टिकाव्यम् ॥

## दशमः सर्गः ॥



शब्दलक्षणमुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमुच्यते । काव्यस्यात्र प्रसन्नत्वात् । प्रथमं चेदं लक्षणं यत् प्रसन्नतानाम अविद्वदङ्गनाबालप्रतीतार्थं प्रसन्नवदिति । शब्दलक्षणं पुनः प्रकीर्णमेव द्रष्टव्यम् । तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः । अलङ्कारमाधुर्यप्रदर्शनदोषाः भाषासमावेशश्चेति । तत्रालङ्कारो द्विविधः शब्दालङ्कारोऽर्थालङ्कारश्चेति । तत्र पूर्वो द्विविधः । अनुप्रासो यमकं चेति उभयं दर्शयन्नाह ॥

### अनुप्रासवत् ॥

**अथ स वल्कदुकूलकुथादिभिः परिगतोज्वलदुद्धतवालधिः ।**
**उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयैरभिवीक्षितः ॥ १ ॥**

**अथेत्यादि** ॥ अथ दाहादेशानन्तरं स वानरो वियदाकाशमुदपतत् उत्पतितवान् । वल्कं अंशुकम् । शुल्कवल्कोल्का इति निपातनम् । आदिशब्दादन्यैरपि मुञ्जादिभिः परिगतः परिवेष्टितः । ज्वलन्नुद्धत ऊर्ध्वीकृतो वालधिः पुच्छं यस्य सः । नृरिपुभिः राक्षसैः । सभयैराकुललोचनैरभिवीक्षितः किमयमनुष्ठास्यतीति । अनुप्रासवदिति अनुप्रासो यस्मिन् विद्यत इति । तस्य च लक्षणं सरूपवर्णविन्यासमनुप्रासं प्रचक्षत इति ॥

यमकस्यापि लक्षणम् । तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् । वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते ॥ इति तदनेकविधं दर्शयन्नाह ॥

### युक्पादयमकम् ॥

**रणपण्डितोऽग्र्यविबुधारिपुरे कलहं स राममहितः कृतवान् ।**
**ज्वलदग्नि रावणगृहं च बलात्कलहंसराममहितः कृतवान् ॥ २ ॥**

**रणेत्यादि** ॥ स कपिः वियदुत्पतितो राममहितो रामपूजितः । रणपण्डितो युद्धकुशलः । अग्र्यविबुधारिपुरे अग्र्यो यो विबुधः इन्द्रः तस्य योऽरिर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् । कलहंसान् रमयतीति कलहंसरामम् । रमेर्ण्यन्तात्कर्मण्यण् । तादृशं रावणगृहम् । बलाद्धार्यमाणोऽपि । ज्वलदग्नि दीप्यमानपावकम् । कृतवान् कृतं विद्यते यस्येति कृतापेक्षीत्यर्थः । अहितः शत्रुः । युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमितत्वात् ॥

## पादान्तयमकम् ॥

**निखिलाभवन्न सहसा सहसा ज्वलनेन पूः प्रभवता भवता ।**
**वनिताजनेन वियता वियता त्रिपुरापदं नगमिता गमिता ॥३॥**

**निखिलेत्यादि** ॥ ज्वलनेनाग्निना प्रभवता वृद्धिं गच्छता भवता समुत्पद्यमानेन सहसा तत्क्षणम् । पूः पुरी निखिला सर्वा न सहसा अभवत् सानन्दा न जाता । हासस्यानन्दकार्यत्वात् एवमुक्तम् । स्वनहसोर्वेत्यपि रूपम् । वनिताजनेन वियता नभसा वियता भयादितस्ततो गच्छता त्रिपुरापदं गमिता प्रापिता पूः त्रिपुरेष्वपि दह्यमानेषु भयादितस्ततो जनो गतः । नगं त्रिकूटपर्वतमिता सती । पादान्तयमकमिति पादान्तेषु यमितत्वात् ॥

## पादादियमकम् ॥

**सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो बहुशः ।**
**सकलैः सकलैः परितः करुणैरुदितैरुदितैरिव खं निचितम् ॥४॥**

**सरसामित्यादि** ॥ सरसाम् तोयाशयानाम् । तनुं शरीरम् । सरसाम् । सार्द्रां परिमुच्य त्रासात्त्यक्त्वा पतताम् पक्षिणाम् बहुशः बहून् वारान् ककुभो दिशः पततां गच्छताम् उदितैः शब्दितैः । वदेर्यजादित्वात्सम्प्रसारणम् । सकलैः समस्तैः सकलैः माधुर्यवद्भिः । कलशब्दस्य गुणमात्रवृत्तित्वान्न तद्वति वर्तते । ततश्च सहशब्देन समासो भवति । करुणैः कारुण्यजनकैः । रुदितैरिव क्रन्दितैरिव परितः समन्तात् खमाकाशम् विततम् व्याप्तम् । पादादियमकमिति पादानामादौ यमितत्वात् ॥

## पादमध्ययमकम् ।

**न च कांचन काञ्चनसद्मचितिं न कपिः शिखिना शिखिनासमयौत् ।**
**न च न द्रवता द्रवता परितो हिमहानकृता न कृता क्व च न ॥ ५ ॥**

**न चेत्यादि** ॥ काञ्चनसद्मचितिं सौवर्णगृहसंहतिम् कांचन कांचिदपि । शिखिना अग्निना । शिखिना ज्वालावता न कपिर्न च समयौत् न च न मिश्रितवान्, अपि तु संश्लेषं नीतवान् । यौतेर्लङि उतो वृद्धिर्लुकि हलीति वृद्धिः । क्व च क्वचिन्नाम हिमहानकृता हिमहानस्य हिमापचयस्य कर्त्रा शिखिना । जहातेर्भावे ल्युट् । न च न द्रवता न च न विसर्पता । अपि तु इतस्ततो गच्छता द्रवता । द्रवभावः परितः न न कृता किन्तु कृतैव काञ्चनसद्मचितेरित्यर्थात् । पादमध्ययमकमिति पादानां मध्ये यमितत्वात् ॥

चिण् । असौ रामः सुग्रीवमैजिहत् योद्धुमीहाङ्कारितवान्।ईहतेर्ण्यन्ताच्चङि द्विर्वचनेचीति स्थानिवद्भावात् द्वितीयस्य द्विर्वचनम् । आट् । वृद्धिः । योद्धुमिति वक्ष्यमाणेन योज्यम्।।

**योद्धुं सोऽप्यरुषच्छत्रोरैरिरच्च महाद्रुमम् ।**
**तं प्राप्तं प्रासहिष्टारिः शक्तिं चोग्रामुदग्रहीत् ॥ ५२ ॥**

**योद्धुमित्यादि ।।** सोऽपि सुग्रीवः अरुषत् क्रुध्यति स्म । रुषरोषे पुषादि'' शत्रोश्च द्रुममैरिरत् क्षिप्तवान् । ईरक्षेप इति स्वार्थिकण्यन्तस्य रूपम् । तं द्रुमं प्राप्तमरिः कुम्भकर्णः प्रासहिष्ट प्रसहते स्म । शक्तिं चोग्रां प्राणहरामुदग्रहीत् उद्गृहीतवान् ।।

**स तामबिभ्रमद्भीमां वानरेन्द्रस्य चामुचत् ।**
**प्रापप्तन्मारुतिस्तत्र तां चालासीद्वियद्गताम् ॥ ५३ ॥**

**स तामित्यादि ।।** तां गृहीतां शक्तिं स कुम्भकर्णः अबिभ्रमत् भ्रमयति स्म । भ्रमेर्ण्यन्ताच्चङि रूपम् । वानरेन्द्रस्य सुग्रीवस्योपरि अमुचत् मुक्तवान् । ऌदित्वादङ् । तत्र तस्यां मुक्तायां मारुतिर्हनूमान् प्रापप्तत् प्रत्युपस्थितः । ऌदित्वादङ् । पत पुमिति पुमागमः । तां च वियद्गतामलासीत् आप्तवान् । ला आदाने । यमरमेति सगिटौ ।।

**अशोभिष्टाचखण्डच्च शक्तिं वीरो न चायसत् ।**
**लौहभारसहस्रेण निर्मिता निरकारि मे ॥ ५४ ॥**

**अशोभिष्टेत्यादि ।।** असौ गृहीतशक्तिर्वीरः अशोभिष्ट शोभते स्म । शक्तिमचखण्डच्च भग्नवान् । खडखडिभेदने चौरादिकः । तां च खण्डयन्नायसत् नायस्यति स्म । यसुप्रयत्ने पुषादिः । लौहभारसहस्रेण निर्मिता घटिता मम शक्तिर्निरकारि भग्ना अनेनेति रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणेन सम्बन्धः ।।

**शक्तिरत्यकुपद्रक्षो गिरिं चोदखनीद्गुरुम् ।**
**व्यसृष्ट तं कपीन्द्रस्य तेनामूर्च्छीदसौ क्षतः ॥ ५५ ॥**

**शक्तिरित्यादि ।।** अकुपत् कुपितः । कुपक्रोधे पुषादिः । गिरिं च गुरुमुदखनीत् उत्खातवान् । अतो हलादेर्लघोरिति वृद्ध्यभावपक्षे रूपम् । कपीन्द्रस्य सुग्रीवस्योपरि तं च गिरिं व्यसृष्ट विसृष्टवान् । सृजविसर्गेऽनुदात्तेत् तस्माद्धलन्तादात्मनेपदे सिचः कित्त्वे गुणाभावः । असौ कपीन्द्रस्तेन हतः सन् अमूर्च्छीत् मोहमुपगतः ।।

**अलोठिष्ट च भूपृष्ठे शोणितं चाप्यसुस्रुवत् ।**
**तमादायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥**

**अलोठिष्टेत्यादि** ॥ मूर्च्छितश्च भूपृष्ठे अलोठिष्ट लुठते स्म । रुठलुठप्रतिघात इति द्युतादिः । द्युद्भ्यो लुङीति परस्मैपदविकल्पेनात्मनेपदम् । अस्य शोणितं च व्यसुस्रुवत् स्रुतम् । णिश्रीत्यादिना चङ् । तं सुग्रीवमादाय राक्षसः कुम्भकर्णः पलायिष्ट पलायते स्म । व्यरोचिष्ट रोचते स्म । रुचदीप्तौ ॥

**अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।**
**शनैरबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकम् ॥ ५७ ॥**

**अभैषुरित्यादि** ॥ तस्मिन्नीते कपयोऽभैषुः भीताः । मरुत्सुतः कुम्भकर्णमन्वारत अनुगत. । अर्तेः सर्तिशास्त्यर्तिभ्यश्चेत्यङ् । ऋदृशोऽङि गुणः । सुग्रीवः शनैर्मनागबोधि लब्धसंज्ञो बभूव । दीपजनेत्यादिना बुधे. कर्तरि चिण् । स बुद्धः कर्णनासिकम् । प्राण्यङ्गत्वादेकवद्भावः । अस्यालुञ्चीत् कृत्तवान् । राक्षसस्येति वक्ष्यमाणेन सम्बन्धः ॥

**राक्षसस्य न चात्रासीत् प्रनष्टुमयतिष्ट च ।**
**अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८ ॥**

**राक्षसस्येत्यादि** ॥ राक्षसस्य कुम्भकर्णस्य सम्बन्धे स सुग्रीवो न चात्रासीत् न त्रस्तः । राक्षसात् प्रनष्टुं पलायितुम् । मस्जिनशोर्झलीति नुम् । अयतिष्ट च यतते स्म । कुम्भकर्णेनात्मनोऽवस्थां दृष्ट्वा अक्रोधि क्रुद्धम । भावे लुङ् । क्षितौ च पेष्टुं चूर्णयितुं सुग्रीव आरम्भि आरब्धः । कर्मणि लुङ् । रभेरशब्लिटोरिति नुम् ॥

**सुग्रीवोऽस्याभ्रशद्धस्तात् समगाहिष्ट चाम्बरम् ।**
**तूर्णमन्वसृपद्राममानन्दच्च वानरान् ॥ ५९ ॥**

**सुग्रीव इत्यादि** ॥ अस्य कुम्भकर्णस्य हस्तात् सुग्रीवः अभ्रशत् भ्रष्टः । भ्रशुभ्रंशु अधःपतने पुषादि । स चाम्बरमाकाशमगाहिष्ट आक्रान्तवान् । गाहू विलोडने अनुदात्तेत् । तूर्णं च राममन्वसृपत् अनुगतः । ऌदित्वादङ् । वानरांश्च कर्णनासिककर्तनेनानन्दत् । तोषितवान् । नन्दतेर्ण्यन्तस्य रूपम् ॥

**अतत्वरच्च तान् योद्धुमचिचेष्टच्च राघवौ ।**
**कुम्भकर्णो न्यवर्तिष्ट रणेऽयुत्सत वानराः ॥ ६० ॥**

**अतत्वरदित्यादि** ॥ तांश्च वानरान् योद्धुमतत्वरत् त्वरयति स्म । मा विलम्बध्वमिति । त्वरेर्ण्यन्ताच्चङ् । अत्स्मृदृत्वरेति अभ्यासस्य अत्त्वम् । राघवौ च योद्धुमचचेष्टत् व्यापारयति स्म । विभाषा वेष्टिचेष्ट्योरित्यभ्यासस्यात्वपक्षे रूपम् । स कु-

म्भकर्णो योद्धुं न्यवर्तिष्ट निवृत्तः। वृतिर्द्युतादिः। द्युद्भ्य इत्यादिनात्मनेपदे नाङ्। वानराश्चायुत्सन्त युध्यन्ते स्म ॥

**अविवेष्टन्नृपादेशादारुक्षंश्चाशु राक्षसम्।**
**तानधावीत् समारूढांस्तेऽप्यस्रंसिषताकुलाः ॥ ६१ ॥**

**अविवेष्टन्नित्यादि** ॥ वानरा राक्षसमविवेष्टन् वेष्टयन्ति स्म। अत्र राम इत्यर्थाद्द्रष्टव्यं यतस्तदादेशादाशु ते राक्षसमारुक्षन् आरूढाः। रुहः शल इगुपधेत्यादिना क्सः। वानरा एव नृपादेशादविवेष्टन्निति व्याख्याने स्वातन्त्र्येण तेषां कर्तृत्वात्प्रयोजकत्वं न घटते। तांश्च वानरानारूढान् कुम्भकर्णोऽधावीत् धूतवान्। स्वरतीत्यादिना इट्। हल्वृद्धेर्नेटीति प्रतिषेध। ते व्याकुलाः सन्तोऽस्रंसिषत स्रस्ताः पतिता इत्यर्थः। स्रंसुभ्रंशु च स्रंसने द्युतादिः। परस्मैपदाभावान्नाङ् ॥

**अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयम्।**
**ते चाप्यघोरिषुर्घोरं रक्तं चावमिषुर्मुखैः ॥ ६२ ॥**

**अग्रसिष्टेत्यादि** ॥ कुम्भकर्णः कांश्चिदग्रसिष्ट ग्रसते स्म। कांश्चिन्निर्दयं समाश्लिक्षत्। श्लिष आलिङ्गने। शल इति क्सः। ते चाश्लिष्टाः महाघोरं श्रुतिकटुकं अघोरिषुः शब्दमुक्तवन्तः। घुरभीमार्थशब्दयोरिति तुदादिरनुदात्तेत्। रक्तं चावमिषुः उद्गीर्णवन्तः ॥

**स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न।**
**अग्रहीच्चायुरन्येषामरुद्ध च पराक्रमम् ॥ ६३ ॥**

**स चेत्यादि** ॥ स चापि कुम्भकर्णः रुधिरैर्मत्तः स्वेषामपि नादयिष्ट न दयां कृतवान् किमपरेषाम्। अधीगर्थेति षष्ठी। अन्येषां वानराणां आयुर्जीवितमग्रहीत् गृहीतवान्। ह्यन्तत्वान्न वृद्धिः। अदोहीवायुरिति पाठान्तरम्। तत्र तथाभूतं कुम्भकर्णं दृष्टवतामन्येषामायुरदोहीव स्वयंगतमिव। दुहश्चेति कर्मकर्तरि चिण्। पराक्रमं चान्येषामरुद्ध च आवृतवान्। रुधेः कर्माभिप्राये तङ्। झलो झलीति सिचो लोपः। झषस्तथोर्धोधः। झलां जश्झशि ॥

**संत्रस्तानामपाहारि सत्वं च वनवासिनाम्।**
**अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४ ॥**

**संत्रस्तानामित्यादि** ॥ तेन सत्वमपाहारि अपहृतम्। सर्वेषां त्रस्तत्वात्। कर्मणि लुङ्। लक्ष्मणेन अस्य किरीटं मुकुटं तथा कवचमच्छेदि छिन्नम्। कर्मणि लुङ् ॥

**अभेदि च शरैर्देहः प्राशंसीत्तं निशाचरः ।**
**अस्पर्धिष्ट च रामेण तेनास्याक्षिप्सतेषवः ॥ ६५ ॥**

**अभेदीत्यादि ॥** देहश्चास्य शरैः करणभूतैरभेदि छिन्नः । निशाचरश्च तं लक्ष्मणं प्राशंसीत् स्तुतवान् । साधु भवता युद्धमिति । रामेण सहास्पर्धिष्ट योद्धुं स्पर्धते स्मे । तेन रामेणास्य इषवः अक्षिप्सत क्षिप्ताः । कर्मणि लुङ् । हलन्तादात्मनेपदे सिचः कित्त्वाद्गुणाभावः ॥

**यैरघानि खरो वाली मारीचो दूषणस्तथा ।**
**अवामंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरम् ॥ ६६ ॥**

**यैरित्यादि ॥** यैः शरैश्च खरोऽघानि व्यापादितः । कर्मणि लुङ् । ते अक्षिप्सतेति योज्यम् । स कुम्भकर्णस्तान् घ्नन् दर्पादवामंस्त अवमन्यते स्म । मुद्गरं प्रोदयंसीत् उद्घूर्णवान् । यमरमेति सगिटौ ॥

**वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत् सहायुधम् ।**
**अदीपि तरुहस्तोऽसावधावीच्चारिसंमुखम् ॥ ६७ ॥**

**वायव्यास्त्रेणेत्यादि ॥** येन पाणिना मुद्गरमुदयंसीत् तं पाणि सहायुधं रामो वायव्यास्त्रेण मरुद्देवतादत्तेन अच्छैत्सीत् । छिन्नपाणिश्चासौ तरुहस्तः तरुर्हस्ते यस्येति तरोः प्रहरणत्वात् सप्तम्यन्तस्य परनिपात. । अदीपि दीप्यते स्म । दीपजनेत्यादिना कर्तरि चिण् । अरिसंमुखं च रामाभिमुखमधावीत् वेगेन गतवान् ॥

**सवृक्षमच्छिदत्तस्य शक्रास्त्रेण करं नृपः ।**
**जंघे चाशीशतद्बाणैरप्रासीदिषुभिर्मुखम् ॥ ६८ ॥**

**सवृक्षमित्यादि ॥** तस्य सवृक्षमपि करं नृपः शक्रास्त्रेणाच्छिदत् । इरितो वेत्यङ् । जङ्घे चान्यैर्बाणैरशीशतत् । गमनासमर्थे कृतवान् । शदेर्णौ शदेरगताविति तत्वम् । मुखं चेषुभिरप्रासीत् पूरितवान् । प्रापूरणे ॥

**ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः ।**
**अपिक्षातां सहस्रे द्वे तद्देहेन वनौकसाम् ॥ ६९ ॥**

**ऐन्द्रेणेत्यादि ॥** ऐन्द्रेण शरेण हृदयेऽव्यात्सीत् विद्धवान् । स तथा हतो गामध्यवात्सीत् भूमिमध्युषितवान् । तस्य पततो देहेन वनौकसां वानराणां द्वे सहस्रे अपिक्षातां चूर्णिते । पिष्लृ संचूर्णने । कर्मणि लुङ् ॥

**अस्ताविषुः सुरा रामं दिशः प्रापन्निशाचराः ।**
**भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः ॥ ७० ॥**

**अस्ताविषुरित्यादि ॥** तस्मिन् हते सुरा देवा राममस्ताविषुः स्तुवन्ति स्म । स्तुसुधूञ्भ्यः परस्मैपदेष्विवतीट् । निशाचरास्तद्भयाद्दिशः प्रापन् प्राप्तवन्तः । आप्लृव्याप्तौ । साद्रीन्द्रा सकुलपर्वता भूमिरकम्पिष्ट चलति स्म । अम्भसां पतिः समुद्रो व्यचालीत् प्रक्षुभितवान् ॥

**हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन् ।**
**अरोदीद्रावणोऽशोचीन्मोहं चाशिश्रियत् परम् ॥ ७१ ॥**

**हतमित्यादि ॥** हतं व्यापादितं कुम्भकर्णं रक्षांसि राजानं रावणमशिश्रवन् श्रावितवन्तः । शृणोतेर्ण्यन्तात् सनीव कार्यमिति स्रवतिशृणोतीत्यादिना अभ्यासस्य विकल्पेनेट् । एवं च कृत्वा अशुश्रुवन्निति पाठान्तरम् । द्विकर्मकता तु बुद्ध्यर्थत्वात् । श्रुत्वा च रावणोऽरोदीत् अश्रूणि मुमोच । अशोचीत् शोचति स्म । तेनापि त्यक्तोऽस्मीति । परं च मोहं मूर्च्छामशिश्रियत् । श्रिञ् सेवायाम् । णिश्रीत्यादिना चङ् ॥

**अपप्रथद्गुणान् भ्रातुरचिकीर्तच्च विक्रमम् ।**
**क्रुद्धेन कुम्भकर्णेन येऽदर्शिषत शत्रवः ॥ ७२ ॥**

**अपप्रथदित्यादि ॥** भ्रातुर्गुणान् बुद्धिमत्त्वादीनपप्रथत् प्रख्यापितवान् । प्रथ प्रख्याने घटादिः । तस्मात् ण्यन्ताच्चङि अत्स्मृदृत्वरेत्यादिनाऽत्वम् । विक्रमं च शौर्यमचिकीर्तत् उदीरितवान् । कृतसंशब्दन इति चौरादिकः । जिघ्रतेर्वेत्यधिकृत्य उर्ऋत् इति इकाराभावपक्षे रूपम् । उपधायाश्चेतीत्वम् । विक्रमकीर्तनं चाह । क्रोधकर्त्रा कुम्भकर्णेन ये शत्रवोऽदर्शिषत दृष्टा. । कर्मणि लुङ् । स्यसिजित्यादिना दृशेश्चिण्वदिट् ॥

**कथं न्वजीविषुस्ते च स चामृत महाबलः ।**
**अयुयुत्सिषताश्वास्य कुमारा रावणं ततः ॥ ७३ ॥**

**कथमित्यादि ॥** तेऽल्पाः कथंनाम अजीविषुः जीविताः । स च कुम्भकर्णो महाबलः अमृत मृतः । म्रियतेर्लुङ्लिङोश्चेति तङ् । ह्रस्वादङ्गादिति सिचो लोपः । अनन्तरं कुमाराः राजपुत्रा देवान्तकादयो रावणं शोचन्तमाश्वास्य अपनीतशोकं कृत्वा अयुयुत्सिषत योद्धुमिष्टवन्तः । हलन्ताच्चेति सनः कित्त्वम् । पूर्ववत्सन इति तङ् ॥

**देवान्तकोऽतिकायश्च त्रिशिराः स नरान्तकः ।**
**ते चांहिषत संग्रामं बलिनो रावणात्मजाः ॥ ७४ ॥**

**देवान्तक इत्यादि** ।। ते च रावणात्मजाः संग्राममांहिषत गतवन्तः । अहि गतौ । किंनामानः । देवान्तकः अतिकायः त्रिशिराः नरान्तक इति ।।

**युद्धोन्मत्तं च मत्तं च राजा रक्षार्थमाञ्जिहत् ।**
**सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५ ॥**

**युद्धेत्यादि** ।। सुतानां रक्षार्थं राजा युद्धोन्मत्तं मत्तं च राक्षसं आञ्जिहत् प्रस्थापितवान् । अंहतेर्णौचङ्परे द्वितीयाद्विर्वचनम् । तौ राक्षसौ रणपण्डितौ निरगातां निर्गतौ । इणो गा लुङि ।।

**तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः ।**
**पर्वतानिव ते भूमावचैषुर्वानरोत्तमान् ॥ ७६ ॥**

**तैरित्यादि** ।। तैः राक्षसैः सैन्यानि अजेषत जितानि । कर्मणि लुङ् । अचिण्वद्भावपक्षे रूपम् । द्विष आकुला अकारिषत । ते राक्षसा वानरोत्तमान् वानराणा प्रधानभूतान् पर्वतानिव भूमौ अचैषुः पुञ्जीकृतवन्तः । चिञ् चयने ।।

**अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः ।**
**प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि ॥ ७७ ॥**

**अङ्गदेनेत्यादि** ।। नरान्तकः कुमारः अङ्गदेन सह योद्धुमघटष्टि घटते स्म । राक्षसः प्रासं कुन्तं प्रैषिषत् । इषुगतावित्यस्य ण्यन्तस्य चङि रूपम् । स प्रासोऽङ्गदोरसि अस्फोटीत् विशीर्णः ।।

**अश्वान् वालिसुतोऽहिंसीदतताडच्च मुष्टिना ।**
**रावणिश्चाव्यथो योद्धुमारब्ध च महीं गतः ॥ ७८ ॥**

**अश्वानित्यादि** ।। वालिसुतोऽश्वान् रथयुक्तानहिसीत् व्यापादितवान् । तृह हिंसि हिंसायाम् । मुष्टिना पाणिना अतताडत् आहतवान् । तड आघाते । ताडनं ताडः । भावे घञ् । ताडंकरोतीति चिण् । णाविष्टवदिति टिलोपः । णौचङ्युपधाया नाग्लोपिशास्वृदितामिति ह्रस्वप्रतिषेधः । स च रावणिरव्यथो व्यथारहितः । हताश्वाद्रथादवतीर्य मही गतः सन् योद्धुमारब्ध आरभते स्म । झलो झलीति सिचो लोपः । धत्वं च ।।

**तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।**
**प्रादुद्रुवंस्ततः क्रुद्धाः सर्वे रावणयोऽङ्गदम् ॥ ७९ ॥**

**तस्येत्यादि** ॥ तस्य प्राणाः वालिपुत्रेण अहारिषत हृताः। कर्मणि लुङ्। चिण्वद्भावः। ततोऽनन्तरं सर्वे रावणयः रावणस्यापत्यानि देवान्तकादयः क्रुद्धाः सन्तोऽङ्गदं प्रादुद्रुवन् गतवन्तः। णिश्रीत्यादिना चङ् ॥

**ततो नीलहनूमन्तौ रावणीनववेष्टताम्।**
**अकारिष्टां गिरींस्तुङ्गानरौत्सीत्त्रिशिराः शरैः ॥ ८० ॥**

**तत इत्यादि** ॥ ततो रावणीनङ्गदाभिमुखमागच्छतो नीलो हनूमांश्चाववेष्टतां वेष्टितवन्तौ। विभाषा वेष्टिचेष्ट्योरित्यभ्यासस्यात्त्वत्। गिरींश्चाकारिष्टां विक्षिप्तवन्तौ। कॄ विक्षेपे। सिचि वृद्धिः। तांश्च गिरीन्निक्षिप्तान् त्रिशिराः शरैस्तुङ्गानरौत्सीत् आवृतवान्। रुधिरावरणे ॥

**परिघेणावधिष्टाथ रणे देवान्तको बली।**
**मुष्टिनाददरत्तस्य मूर्धानं मारुतात्मजः ॥ ८१ ॥**

**परिघेणेत्यादि** ॥ अथ देवान्तको बली परिघेणावधिष्ट हतवान्। आङो यम हन इति तङ्। अविवक्षितकर्मकत्वादात्मनेपदेष्वन्यतरस्यामिति हनो वधादेशः। तस्य घ्नतो मूर्धानं मारुतात्मजः मुष्टिना अददरत् दारितवान्। दॄ विदारणे ण्यन्तस्य चङ्परे णौ अत्स्मृदृत्वरेत्यादिनाभ्यासस्यात्त्वम् ॥

**अदीदिपत्ततो वीर्यं नीलं चापीपिडच्छरैः।**
**युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम् ॥ ८२ ॥**

**अदीदिपदित्यादि** ॥ ततो देवान्तकविनाशादनन्तरं युद्धोन्मत्तः सुतानां रक्षार्थं यः प्रेषितः स वीर्यमदीदिपत्। भ्राजभासेत्यादिना ह्रस्वाभावपक्षे रूपम्। नीलं च शरैरपीपिडत् पीडितवान्। ह्रस्वाभावपक्षे रूपम्। अपीपरदिति पाठान्तरम्। पूरितवानित्यर्थः। पॄ पूरण इति चुरादि.। स तु नीलेन संक्षयं गिरिणा अनायि नीतः। कर्मणि लुङ् ॥

**अबभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे।**
**हनूमता क्षतास्तस्य रणेऽमृषत वाजिनः ॥ ८३ ॥**

**अबभ्राजदित्यादि** ॥ ततोऽनन्तरं त्रिशिराः कुमारः पवनात्मजविषये शक्तिं वीर्यमबभ्राजत् दीपयति स्म। भ्राजेत्यादिना ह्रस्वाभावपक्षे रूपम्। तस्य वाजिनो रथयुक्ता रणे हनूमता हताः सन्तः अमृषत मृताः। म्रियतेर्लुङिति तङ् ॥

**अस्त्रसञ्चाहतो मूर्ध्नि खड्गं चाजीहरद्द्विषा।**
**प्राणानोज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्धभिः ॥ ८४ ॥**

अस्रसदित्यादि ॥ त्रिशिराश्च हनूमता मूर्ध्नि हतः सन् रथाद्भूमौ अस्रसत् । रथाद्भूमौ स्रस्तः । द्युद्भ्यो लुङीति परस्मैपदम् । द्युतादित्वादङ् । क्ङितीत्यनुनासिकलोपः । स्रस्तश्च स खड्गं हस्तस्थं द्विषा हनूमता अजीहरत् हारितवान् । तेनैव च खड्गेन छिन्नैर्मूर्धभिर्हेतुभूतैः प्राणानौज्झीत् त्यक्तवान् । उज्झ उत्सर्गे ॥

मत्तेनामारि संप्राप्य शरभास्तां महागदाम् ।
सहस्रहरिणाक्रीडीदतिकायस्ततो रणे ॥ ८५ ॥

मत्तेनेत्यादि ॥ शरभेण वानरेणास्तां क्षिप्तां महागदां प्राप्य मत्तेन सुतानां रक्षार्थं प्रेषितेन राक्षसेनामारि मृतम् । भावे लुङ् । ततोऽनन्तरं अतिकायो राजपुत्रो रणे अक्रीडीत् विहरति स्म । रथेनेति वक्ष्यति । सहस्रं हरयोऽश्वा यस्य रथस्य ॥

रथेनाविव्यथच्चारीन् व्यचारीच्च निरङ्कुशः ।
विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६ ॥

रथेनेत्यादि ॥ अरींश्चाविव्यथत् पीडितवान् । व्यथेर्ण्यन्तस्य चङि रूपम् । निरङ्कुशश्चाप्रतिहतशक्तिर्व्यचारीत् भ्राम्यति स्म । रान्तत्वाद्वृद्धिः । स विचरन्महारथः । विभीषणेन राघवस्य आख्यायि कथितः । कर्मणि लुङ् ॥

अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत् ।
अशिक्षिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ ८७ ॥

अतस्तम्भदित्यादि ॥ अयं स्वशक्त्या वज्रं अतस्तम्भत् स्तम्भितवान् । स्तभिस्कभिप्रतिष्टम्भे । ण्यन्तस्य णिश्रीत्यादिना चङ् । स्वयम्भुवमतूतुषत् । उग्रेण तपसा आराधनात् तोषितवान् । तुष प्रीतौ ण्यन्तः । महास्त्राणि दिव्यानि चाशिक्षिष्ट शिक्षते स्म । शिक्षविद्योपादाने । रणे च राक्षसानरक्षीत् रक्षति स्म ॥

अध्यगीष्टार्थशास्त्राणि यमस्यान्होष्ट विक्रमम् ।
देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥ ८८ ॥

अध्यगीष्टेत्यादि ॥ अर्थशास्त्राणि पराभिसन्धानार्थानि अध्यगीष्ट अधीतवान् । विभाषा लुङ्लृङोरिति इङो गाङादेशः । यमस्याप्ययं विक्रममह्नोष्ट अपनीतवान् । ह्नुङ् अपनयने । अहलन्तत्वात्सिचो न कित्त्वम् । देवाहवेष्वदीपिष्ट शोभितः । अस्य च साध्वसं भयं नाजनिष्ट न जातम् । दीपजनेत्यादिना चिण्वद्भावपक्षे रूपम् ॥

एष रावणिरापादि वानराणां भयङ्करः ।
आह्वताथ स काकुत्स्थं धनुश्चापुस्फुरद्गुरु ॥ ८९ ॥

**एष इत्यादि** ।। य एवं स एष रावणिः आपादि अस्माकं समीपमागतः । पद गतौ । चिण् ते पद इति चिण् । यतो रावणिर्वानराणां भयङ्करः । अथ सोऽतिकायः समीपमागतः काकुत्स्थमाह्वत युद्धायाहूतवान् । आत्मनेपदेष्वन्यतरस्यामित्यङ् । धनुश्च गुरु महदस्फुरत् स्फारितवान् । चिस्फुरोर्णावित्यात्वम् ।।

**सौमित्रिः सर्पवत्सिंहमार्दिदत्तं महाहवे ।**
**तौ प्रावीवृततां जेतुं शरजालान्यनेकशः ॥ ९० ॥**

**सौमित्रिरित्यादि** ।। यथा सर्पः सिंहं गच्छति तद्वत्तमतिकायमार्दिदत् गतवान् । अर्द गतौ । अर्दनमर्दः । तत्करोतीति णिच् । तदन्ताच्चङि रूपम् । अर्द हिंसायामिति चौरादिको वा । तौ सौमित्र्यतिकायौ जेतुं शरजालानि प्रावीवृततां बहूनि प्रवर्तितवन्तौ । उर्ऋदिति णौचङ्युपधाया अपवाद ऋकारः ।।

**अच्छैत्तां च महात्मानौ चिरमश्रमतां न च ।**
**तथा तावास्थतां बाणानतानिष्टां तमो यथा ॥ ९१ ॥**

**अच्छैत्तामित्यादि** ।। तौ च महात्मनौ परस्परस्य शरजालानि अच्छैत्तां छिन्नवन्तौ । इरितो वेत्यङभावपक्षे रूपम् । झलो झलीति सिचो लोपः । चिरं चिरेणापि नाश्रमतां न श्रान्तौ । श्रमिः पुषादिः । तौ तथा बाणावास्थतां क्षिप्तवन्तौ । अस्यति वक्तीत्यङ् । अस्यतेस्थुक् । यथा अन्धकारमतानिष्टां विस्तारितवन्तौ । अतो हलादेर्लघोरिति वृद्धिविकल्पः ।।

**सौर्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ ।**
**ते चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२ ॥**

**सौर्याग्नेये इत्यादि** ।। राक्षसः सौर्यमस्त्रं व्यकारीत् विक्षिप्तवान् । कॄ विक्षेपे । लक्ष्मणोऽप्याग्नेयं इत्येवं तौ व्यकारिष्टाम् । ते चास्त्रे परस्परमासाद्य प्राप्य नाशमुपागमताम् । लृदित्वादङ् ।।

**अबिभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे ।**
**तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥**

**अबिभ्रजदित्यादि** ।। ततोऽनन्तरं रावणिः ऐषीकमस्त्रम् । इषीकाया इदम् । तत्सर्वस्रोतःसु प्रविशत् जीवितमपहरति । रणे अबिभ्रजत् दीपितवान् । भ्राजभासेत्यादिना उपधाया ह्रस्वत्वम् । तदपि अध्वसत् ध्वस्तम् । ध्वसिर्द्युतादिः । लक्ष्मणेरितं लक्ष्मणप्रेरितं माहेन्द्रमस्त्रमासाद्य तद्गतिरोधं कृत्वा ध्वंसयति ।।

**ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्जयम् ।**
**ब्रह्मास्त्रं तेन मूर्धानमदध्वंसन्नरद्विषः ॥ ९४ ॥**

**तत इत्यादि ॥** अनन्तरं सौमित्रिः दुर्जयं अनभिभवनीयं ब्रह्मास्त्रमस्मार्षीत् स्मरति स्म । सिचि वृद्धिः । तच्च स्मरणादुपस्थितं अदेविष्ट द्योतते स्म । तेवृदेवृदेवन इति अनुदात्तेत् द्योतने द्रष्टव्यः देवनस्यानेकार्थत्वात् । तेन च ब्रह्मास्त्रेण प्रयोजककर्त्रा नरद्विषो राक्षसस्य मूर्धानमदध्वंसत् पातितवान् सौमित्रिः । हेतुमण्ण्यन्ताच्चङि रूपम् ॥

**ततोऽक्रन्दीद्दशग्रीवस्तमाशिश्वसदिन्द्रजित् ।**
**निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम् ॥ ९५ ॥**

**तत इत्यादि ॥** ततः सुतमरणानन्तरं दशग्रीवः अक्रन्दीत् रोदिति स्म । तं च क्रन्दन्तमिन्द्रजिदाशिश्वसत् आश्वासितवान् । मयि जीवति किं वृथाजनवद्रोदिषीति । हेतुमण्ण्यन्तस्य चङि रूपम् । संक्रुद्धश्च निरयासीत् । रावणगृहान्निर्गतः । याप्रापणे । निर्गत्य च स्वगृहे स्वयम्भुवं ब्रह्माणं प्रार्चिचत् पूजितवान् । अर्च पूजायामिति चुरादिः । चङि अजादिद्विर्वचनम् ॥

**अहौषीत् कृष्णवर्त्मानं समयष्टास्त्रमण्डलम् ।**
**सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनं च जयावहम् ॥ ९६ ॥**

**अहौषीदित्यादि ॥** कृष्णवर्त्मानमग्निमहौषीत् हव्येन प्रीणितवानित्यर्थः । अस्त्रमण्डलं आयुधग्रामं समयष्ट पूजितवान् । स इन्द्रजित् ब्रह्मणः सकाशात् जयावहमस्त्रं स्यन्दनं चालब्ध लब्धवान् । झलो झलीति सिचो लोपः ॥

**तमध्यासिष्ट दीप्राग्रममोदिष्ट च रावणिः ।**
**छन्नरूपस्ततोऽकर्तीद्देहान्रावणविद्विषाम् ॥ ९७ ॥**

**तमित्यादि ॥** तं स्यन्दनं दीप्राग्रं उपरिभागस्य रत्नप्रत्युप्तत्वात् । अध्यासिष्ट अध्यासितवान् । अधिशीङिति कर्मसंज्ञा । तत्रस्थश्च रावणिरिन्द्रजित् अमोदिष्ट हृष्टवान् । ततोऽसौ छन्नरूपः अदृश्यः सन् रावणविद्विषां वानराणां देहानकर्तीत् छिन्नवान् । कृती छेदने । सेसिचीत्यादिना सिचोऽन्यत्रेड्विकल्पः । रावणिविद्विषामिति पाठान्तरम् । तत्र देवान्तकादिविद्विषामित्यर्थः ॥

**सप्तषष्टिं प्लवङ्गानां कोटीर्बाणैरसूषुपत् ।**
**निशान्ते रावणिः क्रुद्धो राघवौ च व्यमूमुहत् ॥ ९८ ॥**

**सप्तषष्टिमित्यादि** ॥ वानराणां कोटीः सप्तषष्टिं बाणैरसूषुपत् स्वापितवान् व्यापादितवानित्यर्थः । स्वापेश्चङीति सम्प्रसारणम् । निशान्ते च निशावसाने रावणि. क्रुद्धः सन् राघवौ व्यमूमुहत् मोहितवान् । मुह वैचित्ये । णौ चङि रूपम् ॥

**अपिस्फवत् स्वसामर्थ्यमगूहीत्सायकैर्दिशः ।**
**अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥**

**अपिस्फवदित्यादि** ॥ तौ मोहयित्वा आत्मीयं सामर्थ्यमपिस्फवत् वर्धयति स्म । ईदृशस्तादृशोऽहमिति । स्फायो व इति णौ वत्वम् । दिशः सायकैरगूहीत् छादितवान् । नेटीति वृद्धिप्रतिषेधः । ह्यन्तत्वाद्वा । महाघोरं चातिरौद्रं शब्दमघोरीत् मुक्तवान् । गत्वा च लङ्कां रावणं प्रैषीत् प्रेषितवान् । गच्छ तात ममाद्भुतपराक्रमं द्रष्टुमिति । इषु गतौ ॥

**विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ ।**
**अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमान् ॥ १०० ॥**

**विभीषण इत्यादि** ॥ ततस्तस्मिन् काले विभीषणः रामलक्ष्मणौ सस्फुरौ चलन्तौ अबोधि बुद्धवान् जीविताविति । दीपजनेत्यादिना कर्तरि चिण् । स्फुरणं स्फुरः । घञर्थे कविधानम् । यदुक्तं स्थास्नापाव्यधिहनियुध्यर्थमिति तदुपलक्षणं न परिगणनम् । स विभीषणः अन्धकारात् गृहीतोल्कः सन् हतशेषान् प्लवङ्गमानपारीत् मा भैष्टेति प्रीणितवान् ॥

**मा शोचिष्ट रघुव्याघ्रौ नामृषातामिति ब्रुवन् ।**
**अवाबुद्ध स नीलादीन् निहतान् कपियूथपान् ॥ १०१ ॥**

**मा शोचिष्टेत्यादि** ॥ यूयं मा शोचिष्ट शोकं मा कुरुत । माङि लुङ् । यस्माद्रघुव्याघ्रौ नामृषातां न मृतौ इत्येवं ब्रुवन् अपारीदिति योज्यम् । ये च निहतास्तान्नीलादीन् कपियूथपान् स विभीषण. परिभ्रमन् अवाबुद्ध अवबुद्धवान् । एते हता इति । दीपेत्यादिना चिणो विकल्पितत्वादभावपक्षे रूपम् ॥

**तत्रेषज्जाम्बवान् प्राणीदुदमीलीच्च लोचने ।**
**पौलस्त्यं चागदीत् कच्चिदजीवीन्मारुतात्मजः ॥ १०२ ॥**

**तत्रेत्यादि** ॥ तत्र तेषु जाम्बवान् ईषन्मनाक् प्राणीत् उच्छ्वसिति स्म । अन प्राणने । अनितेरिति णत्वम् । लोचने च उदमीलत् उन्मीलितवान् । मीलक्ष्मीलनि-

मेषणे । पौलस्त्यं च विभीषणमगदीत् गदितवान् । अतो हलादेरित्यवृद्धौ रूपम् । कच्चित् किं हनूमान् अजीवीत् जीवितवान् । न मृत इति ॥

**तस्य क्षेमे महाराज नामृष्मह्यखिला वयम् ।**
**पौलस्त्योऽशिश्रवत्तं च जीवन्तं पवनात्मजम् ॥ १०३ ॥**

**तस्येत्यादि** ॥ तस्य हनूमतः क्षेमे जीवितत्वे सति हे महाराज अखिलाः सर्व एव वयं नामृष्महि न मृता इति । आशंसायां भूतवच्चेति लुङ् । एवमुक्तः पौलस्त्यो जीवन्तं पवनात्मजं तमशिश्रवत् श्रावितवान् । शृणोतेर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासेवर्णस्य स्रवतिशृणोतीत्यादिना इत्वपक्षे रूपम् ॥

**आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः ।**
**प्राहैष्टां हिमवत्पृष्ठे सर्वौषधिगिरिं ततः ॥ १०४ ॥**

**आयिष्टेत्यादि** ॥ तत्र पौलस्त्याहूतो मारुतिरायिष्ट आगतवान् । अयगतावाङ्पूर्वः । ततोऽनन्तरं तौ जाम्बवद्विभीषणौ अहृषातां हृष्टवन्तौ । हृष तुष्टौ पुषादिः । ततस्तौ हृष्टौ हनूमन्तमिति वक्ष्यमाणेन सम्बन्धः । प्राहैष्टां प्रहितवन्तौ । सिचि वृद्धिः । हि गतौ । हिमवत्पृष्ठे हिमवतः पृष्ठे । सर्वौषधिगिरिम् । सर्वा ओषधयो यस्मिन्निति ॥

**तौ हनूमन्तमानेतुमोषधीं मृतजीविनीम् ।**
**सन्धानकरणीं चान्यां विशल्यकरणीं तथा ॥ १०५ ॥**

**तावित्यादि** ॥ या मृतं जीवयति या च क्षतस्य सन्धानं करोति तथा विशल्यं च या करोति । कृत्यल्युटो बहुलम् । तामोषधिमानेतुं प्राहैष्टामिति योज्यम् । ओषधेश्च विभक्तावप्रथमायामिति दीर्घत्वम् ॥

**प्रोदपाति नभस्तेन स च प्रापि महागिरिः ।**
**यस्मिन्नज्वलिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥**

**प्रोदपातीत्यादि** ॥ तेन हनूमता नभः प्रोदपाति उत्पतितम् । स च महागिरिस्तेन प्रापि प्राप्तः । कर्मणि लुङ् । यस्मिन् गिरौ महौषध्यः सहस्रशोऽनेकधा रात्रावज्वलिषुः दीप्यन्ते स्म । अतो ल्रान्तस्येति वृद्धिः ॥

**निरचायि यदा भेदो नौषधीनां हनूमता ।**
**सर्व एव समाहारि तदा शैलः सहौषधिः ॥ १०७ ॥**

**निरचारीत्यादि** ॥ यदा हनूमता ओषधीनां भेदो न निरचायि विशेषतो न निश्चितः तदा कृत्स्न एव शैलः सहौषधिरोषधिसहितः समाहारि समानीतः ॥

**प्राणिषुर्निहताः केचित् केचित्तु प्रोदमीलिषुः ।**
**तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८ ॥**

**प्राणिषुरित्यादि** ॥ तदा ओषधिसन्निधानात् ते निहताः केचिद्योधाः प्राणिषुः उच्छ्वसितवन्तः । केचित्तु प्रोदमीलिषुः उन्मीलितलोचना बभूवुः । अन्ये तमो मोहमहासिषुः त्यक्तवन्तः । यमरमेति सगिटौ । तथान्येऽहासिषुरिति पाठान्तरम् । ते तथाभूतमात्मानं दृष्ट्वा सविलासं हसितवन्तः । अपरे व्यजृम्भिषत जृम्भिकां कृतवन्तः । जभिजृभीगात्रविनाम इत्यात्मनेपदी ॥

**अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा ।**
**एवं तेऽचेतिषुः सर्वे वीर्यं चाधिषताधिकम् ॥ १०९ ॥**

**अजिघ्रपन्नित्यादि** ॥ तथान्यान् लब्धसंज्ञानोषधीरजिघ्रपन् घ्रापितवन्तः । नासिकयाभ्यवहृतवन्त इत्यर्थः । गतिबुद्धीत्यादिना प्रत्यवसाने कर्मसंज्ञा । जिघ्रतेर्वेति णौचङ्युपधाया इत्यकारः । तथालिपन् लिप्तवन्तः अन्यानोषधीभिरित्यर्थात् । लिपिसिचीत्यङ् । एवमनेन प्रकारेण सर्वेऽचेतिषुः संज्ञां लब्धवन्तः । चितीसंज्ञाने । अधिकं च वीर्यमोषधिबलादधिषत दधति स्म । स्थाघ्वोरिच्च ॥

**अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन् ।**
**हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥ ११० ॥**

**अजिह्लददित्यादि** ॥ एवं च सति हनूमान् काकुत्स्थावजिह्लदत् ह्लादितवान् । ह्लादी सुखे ण्यन्तः । शेषांश्च कपीनजीजिवत् जीवयति स्म । अथ ते जीविताः सन्तः लङ्कां द्रुतमदीदिपन् दीपितवन्तः । भ्राजेत्यादिना ह्रस्वपक्षे रूपम् ॥

**समनात्सीत्ततः सैन्यममार्जीद्भल्लतोमरम् ।**
**अमार्क्षीच्चासिपत्रादीनवभासत् परश्वधान् ॥ १११ ॥**

**समनात्सीदित्यादि** ॥ ततः सैन्यं समनात्सीत् सन्नद्धम् । नहो ध इति धत्वम् । हलन्तलक्षणा वृद्धिः । भल्लतोमरममार्जीत् शोधितवान् । मृजेरूदित्वात् पक्षे रूपम् । असिपत्रादीनमार्क्षीत् । इडभावे रूपम् । उभयत्रापि मृजेर्वृद्धिः । परश्वधानवभासत् दीपितवान् । भ्राजभासेति ह्रस्वपक्षे रूपम् । अभासीच्चेति पाठान्तरम् । तत्रान्तर्भावितो ण्यर्थः ॥

कुम्भकर्णसुतौ तत्र समनद्धां महाबलौ ।
निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान् ॥ ११२ ॥

**कुम्भकर्णेत्यादि ॥** कुम्भश्चैव निकुम्भश्च कुम्भकर्णसुतौ महाबलौ तत्र सैन्ये समनद्धां सन्नद्धौ । तौ च प्लवङ्गमान् प्रापतां प्राप्तवन्तौ । लृदित्वादङ् ॥

अगोपिष्टां पुरीं लङ्कामगोप्तां रक्षसां बलम् ।
अत्याक्तामायुधानीकमनैष्टां च क्षयं द्विषः ॥ ११३ ॥

**अगोपिष्टामित्यादि ॥** लङ्कां च पुरीं अगोपिष्टां रक्षितवन्तौ । गुपेरूदित्त्वादिट्पक्षे रूपम् । अगोप्तामितीडभावपक्षे रूपम् । हलन्तलक्षणा वृद्धिः । झलो झलीति सिचो लोपः । आयुधानीकं आयुधसमूहमत्याक्तां त्यक्तवन्तौ विसृष्टवन्तौ । त्यजहानौ । पूर्ववद्वृद्धिः सिचो लोपः । द्विषः शत्रून् क्षयमनैष्टां नीतवन्तौ । सिचि वृद्धिः ॥

अकोकूयिष्ट तत् सैन्यं प्रपलायिष्ट चाकुलम् ।
अच्युतच्च क्षतं रक्तं हतं चाध्यशयिष्ट गाम् ॥ ११४ ॥

**अकोकूयिष्टेत्यादि ॥** तत् सैन्यं प्लवङ्गमानां भयादकोकूयिष्ट भृशं शब्दं कृतवत् । कुङ् शब्द इत्यस्मात् यङ्यभ्यासस्य न कवतेर्यङीति कुङश्चुत्वप्रतिषेधः । ततो यङन्तात् लङ् । प्रपलायिष्ट पलायते स्म । अजादेरङ्गस्य आङजादीनाम् । परयोरनङ्गत्वाच्च उपसर्गस्यायताविति लत्वम् । क्षतं च खण्डितं च सत् रक्तमच्युतत् क्षरति स्म । इरितो वेत्यङ् । हतं च निहतं सत् गामध्यशयिष्ट भूमौ पतितम् । अधिशीङिति कर्मसंज्ञा ॥

अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ ।
अभ्यार्दीद्वालिनः पुत्रं प्रजंघोऽपि समत्सरः ॥ ११५ ॥

**अङ्गदेनेत्यादि ॥** अकम्पनः कम्पनश्च तौ । ज्येष्ठत्वात् पूर्वनिपातः । युधि संग्रामे अङ्गदेन अहसाताम् । कर्मणि लुङ् । आत्मनेपदेष्वन्यतरस्यामिति वधादेशाभावपक्षे रूपम् । प्रजङ्घो नाम राक्षसः समत्सरः सक्रोधः वालिनः पुत्रमभ्यार्दीत् प्रहृतवान् । अर्द हिंसायाम् ॥

तस्याप्यवेभिदिष्टासौ मूर्धानं मुष्टिनाङ्गदः ।
अहार्षीच्च शिरः क्षिप्रं यूपाक्षस्य निराकुलः ॥ ११६ ॥

**तस्येत्यादि** ॥ प्रजङ्घस्यापि मूर्धानमसावङ्गदो मुष्टिनाबेभिदिष्ट अत्यर्थं भिन्नवान् । भिदेर्यङन्तस्य अतो लोपः । यस्य हल इति यलोपे रूपम् । निराकुलश्च नाम वानरः यूपाक्षस्य राक्षसस्य शिरः क्षिप्रमहार्षीत् छिन्नवान् ॥

**शरीरं लोहिताक्षस्य न्यभाङ्क्षीद् द्विविदस्तदा ।**
**क्रुद्धः कुम्भस्ततोऽभैत्सीन्मैन्दं सद्विविदं शरैः ॥ ११७ ॥**

**शरीरमित्यादि** ॥ द्विविदो नाम वानरो लोहिताक्षस्य शरीरं न्यभाङ्क्षीत् चूर्णितवान् । भञ्जो आमर्दने । ततोऽनन्तरं कुम्भकर्णसुतः मैन्दं वानरं सद्विविदं द्विविदेन सह शरैरभैत्सीत् भिन्नवान् ॥

**आघूर्णिष्टां क्षतौ क्ष्मां च तावाशिश्रियतामुभौ ।**
**मातुलौ विह्वलौ दृष्ट्वा कुम्भं वालिसुतो नगैः ॥ ११८ ॥**

**आघूर्णिष्टामित्यादि** ॥ तावुभौ क्षतौ आघूर्णिष्टां चक्रवद्भ्रान्तौ । क्ष्मां च भूतलमाशिश्रियतां आश्रितवन्तौ । भूमौ पतितावित्यर्थः । णिश्रीत्यादिना चङ् । तौ च ताराभ्रातृत्वात् मातुलौ विह्वलौ दृष्ट्वा वालिसुतो नगैर्वृक्षैः कुम्भं प्रौर्णावीदिति वक्ष्यमाणेन सम्बन्धः ॥

**प्रौर्णावीच्छरवर्षेण तानपोहीन्निशाचरः ।**
**वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम् ॥ ११९ ॥**

**प्रौर्णावीदित्यादि** ॥ प्रौर्णावीत् छादितवानित्यर्थः । विभाषोर्णोरित्यकित्पक्षे रूपम् । स च निशाचरस्तान्नगान् शरवर्षेणापोहीत् निरस्तवान् । उपसर्गादस्यत्यूह्योर्वावचनमित्यात्मनेपदविकल्पः । रामश्च तद्धनुष्कौशलं दृष्ट्वा अङ्गदं रक्षितुं तूर्णं वानरानैजिहत् व्यापारितवान् । ईहतिर्ण्यन्तः ॥

**द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात् ।**
**मुष्टिना कौम्भकर्णिं च क्रुद्धः प्राणैरतित्यजत् ॥ १२० ॥**

**द्रुतमित्यादि** ॥ सुग्रीवस्तस्माच्छत्रुसङ्कटात् भ्रातृव्यं भ्रातुरपत्यम् । भ्रातुर्व्यच्च । द्रुतमत्रास्त रक्षितवान् । अग्रतो भूत्वा । त्रैङ् पालने । कौम्भकर्णिं कुम्भं क्रुद्धः सन् मुष्टिना प्राणैरतित्यजत् त्याजितवान् । त्यजिर्ण्यन्तः ॥

**निकुम्भो वानरेन्द्रस्य प्राहैषीत् परिघं ततः ।**
**हनूमांश्चापतन्तं तमभाङ्क्षीद्रोगिभीषणम् ॥ १२१ ॥**

**निकुम्भ इत्यादि** ॥ ततो भ्रातृवधात् निकुम्भो वानरस्य सुग्रीवस्य परिघं प्राहैषीत् प्रहितवान्। हि गतौ। परिघमापतन्तं निकुम्भात्। भोगिभीषणं अहिवत् भीषणम् हनूमानभाङ्क्षीत् भग्नवान् ॥

**प्रौर्णुवीत्तेजसारातिमरासीच्च भयङ्करम्।**
**ग्रीवां चास्य तथाक्राक्षीदजिजीवद्यथा न तम्॥ १२३ ॥**

**प्रौर्णुवीदित्यादि** ॥ परिघं च हनूमान् तेजसा प्रौर्णुवीत् अभिभूतवान्। कित्त्वादवृद्धिपक्षे रूपम्। भयङ्करं चारासीत् शब्दितवान्। अस्य च निकुम्भस्य ग्रीवां तथाक्राक्षीत् आकृष्टवान्। अमागमपक्षे रूपम्। यथा तं नाजिजीवत् न जीवयति स्म। ग्रीवामाकृष्यैव व्यापादितवानित्यर्थः। भ्राजभासेत्यह्रस्वपक्षः ॥

**समगत कपिसैन्यं सम्मदेनातिमात्रं**
**विटपहरिणनाथः सिद्धिमौहिष्ट नित्याम्।**
**नृपतिमतिररंस्त प्राप्तकामेव हर्षात्**
**रजनिचरपतीनां सन्ततोऽतायि शोकः॥ १२३ ॥**

**इति भट्टिकाव्ये तिङ्काण्डे लुङ्विलसितो नाम**
**पञ्चदशः सर्गः ॥**

**समगतेत्यादि** ॥ प्रधानयोधा निहता इति सम्मदेन हर्षेणातिमात्रमत्यर्थं समगत सङ्गतं कपिसैन्यम्। समो गम्यृच्छीति तङ्। वा गम इति सिचः कित्त्वेऽनुनासिकलोपः। ह्रस्वादङ्गादिति सिचो लोपः। विपटहरिणनाथः शाखामृगाणां नाथः नित्यां सिद्धिमवश्यं भाविनीमौहिष्ट तर्कितवान्। नृपतिमतिः रामस्य बुद्धिः प्राप्तकामेव सम्पन्नेच्छेव रावणवधसीतालाभयोः सिद्धिरूपत्वात्। हर्षादरंस्त रमते स्म। रजनिचरपतीनां मेघनादादीनां शोकः सन्ततोऽविच्छिन्नः अतायि वर्धते स्म। दीपजनेत्यादिना कर्तरि चिण् ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङ्काण्डे लुङ्विलसितो नाम द्वितीयः परिच्छेदः। काव्यस्य कुम्भकर्णवधो नाम पञ्चदशः सर्गः ॥

---

# षोडशः सर्गः ॥



इतः प्रभृति लृटमधिकृत्य विलसितमाह। तत्र लृट्शेषे चेति लृट्। ततोऽन्यत्रापि दर्शयिष्यति ॥

**ततः प्ररुदितो राजा रक्षसां हतबान्धवः।**
**किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ १ ॥**

**तत इत्यादि ॥** ततोऽनन्तरं रक्षसां राजा रावणः हतबान्धवः व्यापादितभ्रातृत्वात्। शोकाभिभूतः सन् प्ररुदितः क्रन्दितुमारब्धः। कि करिष्यामीत्यादिना। आदिकर्मणि क्तः। अतिकाये वीरे हते किकरिष्यामि राज्येन न किंचित्। ऋद्धनोः स्य इतीट्। सीतया च कि करिष्यते न किचित् ॥

**अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम्।**
**ह्रेपयिष्यति कः शत्रून् केन जायिष्यते यमः ॥ २ ॥**

**अतीत्यादि ॥** वीरे अतिकाये हते जीवितुमेव नोत्सहे किमन्यत्कर्तुम्। शत्रुः पलायनेन कः। ह्रेपयिष्यति लज्जयिष्यति। अर्तिह्रीत्यादिना णौ पुगंतगुणः। केन यमः जायिष्यते। जिजये। कर्मणि लृट्। स्यसिजित्यादिना चिण्वदिट्च ॥

**अतिकायाद्विना पाशं को वा छेत्स्यति वारुणम्।**
**रावणं मंस्यते को वा स्वयम्भूः कस्य तोक्ष्यति ॥ ३ ॥**

**अतीत्यादि ॥** पृथग्विनेति पञ्चमी। अतिकायाद्विना वारुणं पाशं को वा छेत्स्यति द्विधा करिष्यति। को वा रावणं मंस्यते पूजयिष्यति। स्वयम्भूर्ब्रह्मा कस्य तोक्ष्यति प्रीतिं जनयिष्यति। तुष प्रीतौ। षढोः कः सि ॥

**श्लाघिष्ये केन को बन्धून् नेष्यत्युन्नतिमुन्नतः।**
**कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः ॥ ४ ॥**

**श्लाघिष्य इत्यादि ॥** केनाहं श्लाघिष्ये श्लाघां करिष्यामि ममेदृशः पुत्र इति। कः स्वगुणैरुन्नतः सन् बन्धूनुन्नाते परां कोटिं नेष्यति। काले पितृक्रियोचिते कः पितॄन् प्रेष्यति तर्पयिष्यति। प्रीञ् तर्पणे। कृत्वा किंचित्कार्यम्। को न कत्थिष्यते कत्थनां न करिष्यति। अहमेवंविध इति। अतिकायाद्विनेति सर्वत्र योज्यम् ॥

**उद्यंस्यति हरिर्वज्रं विचरिष्यति निर्भयः।**
**भोक्ष्यते यज्ञभागांश्च शूरमानं च वक्ष्यति ॥ ५ ॥**

**उद्यंस्यतीत्यादि ॥** तथा हरिरिन्द्रः हन्तुं वज्रमुद्यंस्यति उद्धारयिष्यति । उत्पूर्वाद्यमे रूपम् । निर्भयश्चेतस्ततो विचरिष्यति । यज्ञभागांश्चात्मीयान् भोक्ष्यते भक्षयिष्यति । भुजोऽनवन इति तङ् । शूरमानं च शूरोऽस्मीति वक्ष्यति धारयिष्यति । वहेर्होढः । षढोः कः सि ॥

**रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत्।**
**निर्वर्त्स्यत्यृतुसंघातः स्वेच्छयेन्दुरुदेष्यति ॥ ६ ॥**

**रविरित्यादि ॥** रविः निःशङ्कं शङ्कां विना तप्स्यति द्योतिष्यते । मरुच्चानियतं स्वच्छन्दो वास्यति । वागतिगन्धनयोः । ऋतुसङ्घातः षड्ऋतवः निर्वर्त्स्यति सर्वदा न भविष्यति । वृद्भ्यः स्यसनोरिति विकल्पः । न वृद्भ्यश्चतुर्भ्य इतीट्प्रतिषेधः । स्वेच्छयेन्दुरुदेष्यति सदा पूर्णमण्डलो नोद्गमिष्यति । इण् गतौ ॥

**तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्तिष्यते यमः।**
**अतिकायस्य मरणे किं करिष्यन्ति नान्यथा ॥ ७ ॥**

**तीव्रमित्यादि ॥** मेघैस्तीव्रं अतिशयेन स्यन्दिष्यते पूर्वं रजः प्रशमनमात्रं वृष्टम् । भावे लट् । न वृद्भ्य इतीट्प्रतिषेधो न भवति । तत्र परस्मैपदग्रहणमनुवर्तते । यमः उग्रं वर्तिष्यते रौद्रं चरिष्यति । आत्मनेपदे नेट्प्रतिषेधः । अतिकायस्य मरणे सति इन्द्रादयः किमन्यथा विपर्ययं न करिष्यन्ति किन्तु करिष्यन्तीति । कि भविष्यति नान्यथेति पाठान्तरम् । तत्र सर्वमेतद्भविष्यतीत्यर्थः ॥

**उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम्।**
**आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम् ॥ ८ ॥**

**उन्मीलिष्यतीत्यादि ॥** मे मम चक्षुर्वृथा निष्फलमुन्मीलिष्यति । यद्यस्मात् विनयागतं विनीतम् । आज्ञालाभोन्मुखम् । नम्रं नमनशीलम । नरान्तकं पुत्रं न द्रक्ष्यति ॥

**धिङ्मां त्रिशिरसा नाहं सन्दर्शिष्येऽद्य यत्पुनः।**
**घानिष्यन्ते द्विषः केन तस्मिन् पंचत्वमागते ॥ ९ ॥**

**धिङ्मामित्यादि ॥** यत् त्रिशिरसा अद्य पुनरपि नाहं सन्दर्शिष्ये न दृष्टो

भविष्यामि । कर्मणि लृट् चिण्वदिट् च । तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते द्विषः शत्रवः केन घानिष्यन्ते । अत्रापि चिण्वदिट् च ॥

**शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम् ।**
**युद्धोन्मत्तादृिना शत्रून् समास्कंत्स्यति को रणे ॥ १० ॥**

**शत्रुभिरित्यादि** ॥ मत्ते मत्तनाम्नि शत्रुभिर्निहते । तैरेव शत्रुभिः संयुगे सुखमहं द्रक्ष्ये द्रष्टव्योऽस्मि पूर्वं भयादृष्टः । अचिण्वद्भावपक्षे रूपम् । तस्य च भ्रातुर्युद्धोन्मत्तादृिना रणे शत्रून् कः समास्कंत्स्यति अभियास्यति । स्कन्दिर्गतिशोषणयोः । खरि चेति चर्त्वम् ॥

**आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः ।**
**प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हणे हते ॥ ११ ॥**

**आह्वास्यत इत्यादि** ॥ शतक्रतुरिन्द्रः योत्स्यमानः युद्धं करिष्यन् विशङ्को निर्भयः मां युद्धायाह्वास्यते । स्पर्धायामाङ इत्यात्मनेपदम् । निकुम्भे दुर्हणे दुःखेन हन्यत इति । ईषदित्यादिना खल् । तस्मिन् हते तस्य शतक्रतोरर्थः निष्कण्टकराज्यलक्षणः प्रकल्प्स्यति संपत्स्यते ॥

**कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।**
**देवान्तक त्वया त्यक्तो रिपोर्यास्यामि वश्यताम् ॥ १२ ॥**

**कल्पिष्यत इत्यादि** ॥ शत्रुभिः कुम्भं च निपातितं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति । लुटि च क्लृप इति चकारात्स्यसनोरपि परस्मैपदविकल्पः । आत्मनेपदे च नेट्प्रतिषेधः । लङ्का च शत्रुभिरुपहनिष्यते विलोप्स्यते । कर्मणि लृट् । अचिण्वद्भावपक्षः । ऋद्धनोः स्य इतीट् । इह सुरैरागंस्यते । भावे लृट् ॥

**मरिष्यामि विजेष्ये वा हताश्चेत्तनया मम ।**
**हनिष्यामि रिपून् तूर्णं न जीविष्यामि दुःखितः ॥ १३ ॥**

**मरिष्यामीत्यादि** ॥ यदि मम तनयाः हताः तदा मरिष्यामि शत्रून् वा विजेष्ये । म्रियतेर्लुङ्लिङोरिति नियमात्तङ् न भवति । उत्तरत्र विपराभ्याञ्जेतिरि तङ् । ततो रिपून् तूर्णं हनिष्यामि । पुनर्बन्धुं विनाकृतत्वात् दुःखितः सन् न जीविष्यामि ॥

**स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशम् ।**
**दशग्रीवस्य दुर्नीतेर्विनष्टं रक्षसां कुलम् ॥ १४ ॥**

**स्मेष्यन्त इत्यादि ॥** मुनयो हर्षात् स्मेष्यन्ते हसिष्यन्ति । ङित्त्वात्तङ् । देवा अनिशं कथयिष्यन्ति । यथा दशग्रीवस्य दुर्नीतेर्दुर्नयस्य रक्षसां कुलं विनष्टम् ॥

**केन सम्भावितं तात कुम्भकर्णस्य राघवः ।**
**रणे कर्त्स्यति गात्राणि मर्माणि च वितर्त्स्यति ॥ १५ ॥**

**केनेत्यादि ॥** हे तातेति शोकात् बुद्धिस्थं पितरमभिमुखीकरोति केनैतत्सम्भावितं निश्चितम् । यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति छेत्स्यति । कृती छेदने । मर्माणि वितर्त्स्यति अपनेष्यति । उतृदिर् हिंसानादरयोः । सेसिचीत्यादिना इड्विकल्पः ॥

**पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते ।**
**नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥ १६ ॥**

**पतिष्यतीत्यादि ॥** क्षितौ भूमौ भानुरादित्यः पतिष्यति अधो गमिष्यति । पृथिवी तोलयिष्यते ऊर्ध्वं क्षेप्स्यते । तुल उन्माने । चुरादावदन्तेषु च पठ्यते । कर्मणि लृट् । नभस्वान् वायुः काष्ठवद्भङ्क्ष्यते । कर्मणि लृट् । मुष्टिभिर्व्योम ताडयिष्यते हनिष्यते ॥

**इन्दोः स्यन्दिष्यते वह्निः समुच्छोक्ष्यति सागरः ।**
**जलं धक्ष्यति तिग्मांशोः स्यंत्स्यन्ति तमसां चयाः ॥१७॥**

**इन्दोरित्यादि ॥** इन्दोः वह्निः स्यन्दिष्यते प्रस्रविष्यति । वृद्भ्यः स्यसनोरिति परस्मैपदविकल्पः । सागरः समुच्छोक्ष्यति शोषं यास्यति । जलं धक्ष्यति भस्मसात् करिष्यति । दह भस्मीकरणे । होढः । एकाचो बशो भषिति भष्भावः । तिग्मांशोरादित्यात्तमसां चयाः तमःसंघाः स्यंत्स्यन्ति । स्यन्देः पूर्ववत्परस्मैपदविकल्पः । न वृद्भ्य इतीट्प्रतिषेधः ॥

**कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते ।**
**सम्भावितानि नैतानि कदाचित् केनचिज्जने ॥ १८ ॥**

**कुम्भकर्ण इत्यादि ॥** कुम्भकर्णो रणे क्रुद्धः सन् पुंसा परिभविष्यते । कर्मणि लृट् । एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके केनचित् न सम्भावितानि न चिन्तितानि ॥

**कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः ।**
**दङ्क्ष्यन्ति राक्षसान् दृप्ता भङ्क्ष्यन्ति च ममाश्रमान् ॥ १९ ॥**

**कुम्भकर्ण इत्यादि ॥** कुम्भकर्णे इत्थं हते सति प्लवङ्गमाः लङ्कामारोक्ष्यन्ति आ-

क्रमिष्यन्ति । रुहबीजजन्मनि । राक्षसान् दङ्क्ष्यन्ति दशनैः छेत्स्यन्ति । दृप्ताश्च ममाश्रमान् गृहान् भङ्क्ष्यन्ति चूर्णयिष्यन्ति ॥

**चर्त्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः ।**
**तेन राक्षसमुख्येन विना तान् को निरोत्स्यति ॥ २० ॥**

**चर्त्स्यन्तीत्यादि ॥** बालान् वृद्धांश्च चर्त्स्यन्ति व्यापादयिष्यन्ति । चृती हिंसाग्रन्थनयोरिति तौदादिकः । मुदा हर्षेण युताः सन्तः नर्त्स्यन्ति । नृती गात्रविक्षेपे । सेसिचीत्यादिना विकल्पेनेट् । तेन च राक्षसमुख्येन विना तान् को निरोत्स्यति निवारयिष्यति ॥

**अमर्षो मे परः सीतां राघवः कामयिष्यते ।**
**च्युतराज्यात् सुखं तस्मात् किङ्किलासाववाप्स्यति ॥ २१ ॥**

**अमर्ष इत्यादि ॥** अमर्षः क्रोधः पर उत्कृष्टः मम यद्राघवः सीता कामयिष्यते । कर्मणि लट् । तदन्तादनवक्लृप्त्यमर्षयोरकिंवृत्तेपीति अमर्षे क्रोधे लट् । अन्यच्च च्युतराज्यात्तस्मात् रामादसौ सीता किङ्किल नाम सुखमवाप्स्यति तन्न सम्भावयामि । किङ्किलास्त्यर्थेषु लृडिति अनवक्लृप्तावसम्भावनायां लट् ॥

**मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।**
**भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥ २२ ॥**

**मारयिष्यामीत्यादि ॥** अथवा अस्य सर्वस्य विध्वंसस्य विनाशस्य कारणं वैदेहीं मारयिष्यामि व्यापादयिष्यामि । एतैर्वा राक्षसैः खादयिष्यामि भोजयिष्यामि । गतिबुद्धीत्यादिना प्रत्यवसानार्थे कर्मसंज्ञायां प्राप्तायामादिखाद्योः प्रतिषेध इति कर्तृसंज्ञैव भवति । भूमौ वा निखनिष्यामि ॥

**नानुरोत्स्ये जगल्लक्ष्मीं घटिष्ये जीवितुं न वा ।**
**न रंस्ये विषयैः शून्ये भवने बान्धवैरहम् ॥ २३ ॥**

**नानुरोत्स्य इत्यादि ॥** जगल्लक्ष्मी नानुरोत्स्ये न कामयिष्ये । अनो रुधिः कामे । जीवितुं वा न घटिष्ये प्रयत्नं न करिष्यामि तस्माद्भवने बान्धवैः शून्ये विषयैः शब्दादिभिर्न रंस्ये न क्रीडां करिष्ये ॥

**मोदिष्ये कस्य सौख्येऽहं को मे मोदिष्यते सुखे ।**
**आदेयाः किं कृते भोगाः कुम्भकर्ण त्वया विना ॥ २४ ॥**

**मोदिष्य इत्यादि ॥** हे कुम्भकर्ण त्वया विना कस्य सौख्ये अहं मोदिष्ये हर्षिष्ये न कस्यचित् । मम वा सुखे सति को मोदिष्यते हृष्टो भविष्यति न कश्चिदपि । किं कृते किं निमित्तं परभोगा आदेयाः आदातव्याः ॥

तदेव दर्शयन्नाह ॥

**याः सुहृत्सु विपन्नेषु मामुपैष्यन्ति संपदः ।**
**ताः किं मन्युक्षताभोगा न विपत्सु विपत्तयः ॥ २५ ॥**

**या इत्यादि ॥** सुहृत्सु स्निग्धेषु विपन्नेषु याः सम्पदो विभूतयः समुपैष्यन्ति निष्पत्स्यन्ते ताः मन्युक्षताभोगाः शोकैः खण्डिता भोगाः किं विपत्सु न विपत्तयः क्षतक्षारसंस्थानीया भवन्तीति ॥

**विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः ।**
**असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ २६ ॥**

**विनङ्क्ष्यतीत्यादि ॥** असन्धित्सो. रामेण सन्धानमनिच्छो. क्षिप्रमेषा पुरी लङ्का विनङ्क्ष्यति । मस्जिनशोरिति नुम् । ततः तूर्णं वानरास्तां समेष्यन्ति । उभयत्रापि क्षिप्रवचने लृट् । तदेतद्विभीषणभाषितं सर्वमुपपन्नम् । धर्मं निर्णीय तेनोक्तं सन्धानमेवास्तु परैरित्यादिना ॥

**अर्थेन संभृता राज्ञा न भाषिष्यामहे वयम् ।**
**संयोत्स्यामह इत्येतत्प्रहस्तेन च भाषितम् ॥ २७ ॥**

**अर्थेनेत्यादि ॥** राज्ञा वयमर्थेन भृताः ततो न भाषिष्यामहे किमत्र युक्तमिति एतत्प्रहस्तेन भाषितं तच्च तथैव सम्पादितम् । स्म शब्दोऽत्र निपातः । यद्यपीदृशं मन्त्रनिर्णये प्रहस्तेन नोक्तं सन्धानमेवास्तु परैरित्यादिना तथापि विभीषणवचनादनुमीयते तेनाप्ययमर्थोऽभ्युपगत इति रावण एवमाह । तथाच विभीषणवचनं युद्धाय राज्ञा सुभृतैरित्यादि ॥

**मानुषो नाम पत्काषी राजानं पुरुषाशिनाम् ।**
**योधयिष्यति संग्रामे दिव्यास्त्ररथदुर्जयम् ॥ २८ ॥**

**मानुष इत्यादि ॥** मामेवं दुर्जयं मानुषो नाम पत्काषी पादाभ्यां गमनशीलः पदातिः सन् । हिमकाषिहतिषु चेति पादस्य पदादेशः । पुरुषाशिनां रक्षसां राजानं दिव्यास्त्ररथतया दुर्जयं दुरभिभवनीयं योधयिष्यति ॥

एवं बहुधा विलप्य जातामर्षः पुनराह ॥

**सन्नत्स्याम्यथवा योद्धुं न कोक्ष्ये सत्वहीनवत् ।**
**अद्य तप्स्यन्ति मांसादा भूः पास्यत्यरिशोणितम् ॥ २९ ॥**

**सन्नत्स्यामीत्यादि ॥** सत्वहीनवत् सत्वेन हीन इव नकोक्ष्ये न रोदिमि । कुश शब्दे । योद्धुं सन्नत्स्यामि सन्नाहं करिष्येऽहमिति । अद्य क्रियावृत्तेऽप्यमर्षे लिङपवादो लट् । नहो धः । खरि चेति चर्त्वम् । ततश्चाद्यास्मिन्नहनि मांसादाः क्रव्यादाः तप्स्यन्ति तृप्ता भविष्यन्ति । अदोऽनन्न इति विटि प्राप्ते वासरूपविधिना अणपि भवति । भूश्च हतानामरीणां शोणितं पास्यति । शेषे लट् ॥

**आकक्ष्यामि यशः शत्रूनपनेष्यामि कर्मणा ।**
**अनुभाविष्यते शोको मैथिल्याद्य पतिक्षयात् ॥ ३० ॥**

**आकक्ष्यामीत्यादि ॥** सर्वयोद्धृणां यश आकक्ष्यामि आहरिष्यामि । शत्रूंश्च कर्मणा युद्धाख्येनापनेष्यामि न्यूनयिष्यामि । अद्य पतिक्षयात्पतिविनाशात् शोको मैथिल्या सीतया अनुभाविष्यते संवेदयिष्यते । कर्मणि लट् । चिण्वदिट् ॥

**मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यमः ।**
**ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥**

**मन्तूयिष्यतीत्यादि ॥** यक्षेन्द्रो धनदः दाशरथिमापन्नं श्रुत्वा मन्तूयिष्यति दुर्मना भविष्यति । यमश्च न वल्गूयिष्यति हृष्टमना न भविष्यति । मन्तुवल्गुशब्दाभ्यां कण्ड्वादिभ्यो यक् । तदन्तात् लट् । वने वानरयोषितः अपतिपुत्राः सत्यः ग्लास्यन्ति ग्लानिं यास्यन्ति ॥

**सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयम् ।**
**न विक्रोक्ष्यन्ति राक्षस्यो नरांश्चात्स्यन्ति हर्षिताः ॥ ३२ ॥**

**सुखमित्यादि ॥** रक्षांसि चैतानि सुखं स्वप्स्यन्ति निर्भयं च भ्रमिष्यन्ति राक्षस्यश्च न विक्रोक्ष्यन्ति न क्रन्दिष्यन्ति । क्रुश आह्वाने रोदने च । हर्षिताश्च सत्यो नरानत्स्यन्ति भक्षयिष्यन्ति ॥

**प्राङ्मुहूर्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी ।**
**आगामिनि ततः काले यो द्वितीयः क्षणोऽपरः ॥ ३३ ॥**

**प्रागित्यादि ॥** योऽयमागामी प्रभातकालः मुहूर्तद्वयसम्मितः तस्मिंस्तस्येति षष्ठीसप्तम्योरभेदात् । यो द्वितीयो मुहूर्तः तस्मात् प्राक् प्रथमे मुहूर्ते अहमवश्यं सुखी-

भविष्यामि तदानीं हतशत्रुत्वात् । ततः प्रभातादागामी यः कालः क्षणद्वयसम्मितः तस्मिन्नागामिनि काले यो द्वितीयः तस्माद्यदपरःक्षणः पूर्वः तत्रेति वक्ष्यमाणेन सम्बन्धः ॥

**तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम् ।**
**ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः ॥ ३४॥ (युग्मकम्)।**

**तत्रेत्यादि** ॥ तत्र क्षणे त्रिदशेन्द्रं सहामरं देवैः सहितं जेतुं द्रुतं गमिष्यामि । प्राक् मुहूर्तात् सुखी भविष्यामि । क्षणाद्यदपरं तत्र जेतुं गमिष्यामीति कालविभागे चानहोरात्राणामिति अनद्यतनवत् प्रत्ययप्रतिषेधे लट् । तत्र हि नानद्यतनवदिति मर्यादावचने परस्मिन्निति चानुवर्तते । तत्र जेतुं कालमर्यादाविभागे सति योऽपर आद्यप्रविभागः तत्र भविष्यति काले अनद्यतनवत्प्रत्ययविधिर्न भवति । ततो लट्प्रतिषेधाल्लृडेव भवति । ततः परेणेति यस्मिन्नागामिनि काले शक्रं जेतुं गमिष्यामि तत्र द्वितीयो यःक्षणस्तस्मात् परेणोपरिष्टात्तं शक्रं जित्वा भूयोऽपि लङ्कामेष्यामि । आङ्पूर्वस्येणो रूपम् । अमत्सरो विगतक्रोधः सन् । अपरस्मिन् विभाषेत्यनेन विभाषालुट्प्रतिषेधाल्लृट् । तत्र हि कालविभागे सति भविष्यति काले परस्मिन् विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवतीत्युक्तम् ॥

**तमेवंवादिनं मूढमिन्द्रजित् समुपागतः ।**
**युयुत्सिष्येऽहमित्येवं वदन् रिपुभयङ्करः ॥ ३५ ॥**

**तमित्यादि** ॥ तं रावणं मूढत्वादेवंवादिनं एवंभाषणशीलं इन्द्रजित् रिपोर्भयङ्करः समुपागतः युयुत्सिष्येऽहं योद्धुमिच्छां करिष्यामीति ब्रुवन् ॥

तेन सह योद्धुमिच्छामीति चेदाह ॥

**नाभिज्ञा ते महाराज जेष्यावः शक्रपालितम् ।**
**दृप्तदेवगणाकीर्णमावां सह सुरालयम् ॥ ३६ ॥**

**नाभिज्ञेत्यादि** ॥ हे महाराज ते तव नाभिज्ञा स्मृतिः । सुरालयं शक्रेण पालितं दृप्तैश्च देवगणैराकीर्णं व्याप्तम् आवां द्वावपि सह सम्भूय जेष्यावः जितवन्तौ । अभिज्ञावचने लट् । तत्र भूतानद्यतन इति वर्तते ॥

**नाभिज्ञाते सयक्षेन्द्रं भङ्क्ष्यावो यद्यमं बलात् ।**
**रत्नानि चाहरिष्यावः प्राप्स्यावश्च पुरीमिमाम् ॥ ३७ ॥**

**नाभिज्ञेत्यादि** ॥ न सेत्यभिज्ञास्ति सयक्षेन्द्रं धनदसहितं यमं बलात् सामर्थ्ये-

न आवां भङ्क्ष्यावः भग्नवन्तौ । रत्नानि च ताभ्यां बलादाहरिष्यावः । इमां च पुरीं लङ्कां प्राप्स्यावः । विभाषा साकाङ्क्ष इति लट् । लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा । तत्र भञ्जनं लक्षणं रत्नाद्याहरणं च लक्ष्यम् ॥

**एष पेक्ष्योम्यरीन् भूयो न शोचिष्यसि रावण।**
**जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिशः ॥ ३८ ॥**

**एष इत्यादि ॥** एषोऽहं भूयः पुनररीन् पेक्ष्यामि चूर्णयिष्यामि । वर्तमानसामीप्ये वर्तमानिकप्रत्ययस्य विकल्पेन विधानाल्लृडेव भवति । येन हे रावण न शोचिष्यसि शोकं न करिष्यसि । भविष्यति लट् । जगत् नीरामं रामरहितं द्रक्ष्यसि । दिशश्च सर्वा अवगाहिष्यसे व्याप्स्यसि ॥

**सहभृत्यः सुरावासे भयं भूयो विधास्यसि ।**
**प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम् ॥ ३९ ॥**

**सहेत्यादि ॥** भृत्यैः सह सुरावासे स्वर्गे भूयो भयं विधास्यसि करिष्यसि । देवेन्द्रश्च त्वां प्रणंस्यति त्वदीयोऽहमिति निवेदयिष्यति । वक्ष्यति च सन्नति भणिष्यति च नमस्कारम् ॥

**भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।**
**ज्ञास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः ॥ ४० ॥**

**भेष्यत इत्यादि ॥** मुनिभिस्त्वत्तो भेष्यते भीतैर्भवितव्यम् । भावे लट् । त्वमधिष्ठास्यसि द्विषः शत्रून् परिभविष्यसि । अधिशीङिति कर्मसंज्ञा । यादृशश्चाहं तादृशः संग्रामे ज्ञास्ये ज्ञातो भविष्यामि । कर्मणि लट् । कैः समस्तैः शूरमानिभिः वयं शूरा इत्यात्मानं मन्यमानैः । आत्ममाने खश्च ॥

**ज्ञायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः ।**
**गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम् ॥ ४१ ॥**

**ज्ञायिष्यन्त इत्यादि ॥** एते च द्विषां गणाः शत्रुसंघाः वीरम्मन्याः अद्य मया ज्ञायिष्यन्ते परिच्छेत्स्यन्ते यादृशा इति । कर्मणि लट् । चिण्वदिट् । वनौकसां कपीना गात्रैः छिन्नैरद्य क्षिति गूहिष्यामि ॥

**आरोक्ष्यामि युगान्तवारिदघटासंघट्टघोरध्वनिम्**
**निर्यास्यन् रथमुच्छ्रितध्वजधनुःखड्गप्रभाभासुरम् ।**

**श्रोष्यस्यद्य विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे**
**तृप्तांश्छोणितशोणभीषणमुखान् क्रव्याशिनः क्रोशतः ॥४२॥**
**इति भट्टिकाव्ये तिङन्तकाण्डे लृड्विलसितो नाम**
**षोडशः सर्गः ॥**

**आरोक्ष्यामीत्यादि** ॥ अतोऽहं रथमारोक्ष्यामि निर्यास्यन् इतो निर्गच्छन्। आरोक्ष्यामीति क्रियाया क्रियार्थायामुपपदे निर्यास्यन्निति लृट्शेषेचेति चकाराल्लृट्। कीदृशं रथम्। युगान्ते प्रलयकाले या वारिदघटास्तासां यः संघट्टः परस्परसंमर्दः तस्येव धीरो गम्भीरो ध्वनिर्यस्य रथस्य। उच्छ्रिता ध्वजाः धनूंषि च यत्र। खड्गप्रभाभिश्च भासनशीलो यः। पश्चाद्विशेषणसमासः। उच्छ्रितानां वा ध्वजादीनां प्रभाभिर्भासुर इति योज्यम्। विकीर्णा इतस्ततो विक्षिप्ताः वृक्णा छिन्नाः छिन्नमस्तकाः विमुखाः पराङ्मुखा व्यापन्ना मृताः शत्रवो यस्मिन् रणे। क्रव्याशिनः शृगालादीन्। क्रोशतः फूत्कुर्वत. अद्य श्रोष्यसि। कीदृशान् तृप्तान् शोणितमांसोपभोगात्। शोणितेन शोणानि लोहितानि तत एव भीषणानि भयङ्कराणि मुखानि येषामिति। वृश्चेरोदितो निष्ठानत्वस्यासिद्धत्वात् चोः कुत्वे वृक्ण इति ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लृड्विलसितस्तृतीयः परिच्छेदः॥
काव्यस्य रावणविलापो नाम षोडशः सर्ग. ॥

---

## सप्तदशः सर्गः ॥



इतः प्रभृति लङमधिकृत्य विलसितमाह तत्र भूतानद्यतने लङ् ततोऽन्यत्र दर्शयिष्यति॥

**आशासत ततः शान्तिमस्नुरग्नीनहावयन्।**
**विप्रानवाचयन् योधाः प्राकुर्वन्मङ्गलानि च ॥ १ ॥**

**आशासतेत्यादि** ॥ ततः प्रतिज्ञानन्तरम्। योधा इन्द्रजित्सम्बधिन इत्यर्थात्। उपद्रवपरिहारार्थं शान्तिमाशासत अभीष्टवन्तः। आङः शासु इच्छायामित्यनुदात्तेत्। आत्मनेपदेष्वन्यतरस्यामित्यदादेशः। शान्तिं च दर्शयन्नाह। अस्नुः स्नाताः। स्नाशौचे। आत इत्यधिकृत्य लङः शाकटायनस्यैवेति झेर्जुस्। उस्य पदान्तादिति पररूपम्। अग्नीनहावयन् अग्निकर्म कारितवन्तः। विप्रानवाचयन् स्वस्तिवाचनं कारितवन्तः। मङ्गलानि मङ्गलयुक्तानि कर्माणि कृतवन्तः॥

**अपूजयन् कुलज्येष्ठानुपागूहन्त बालकान् ।**
**स्त्रीः समावर्धयन् सास्राः कार्याणि प्रादिशंस्तथा ॥ २ ॥**

**अपूजयन्नित्यादि ॥** कुलज्येष्ठान् वृद्धानपूजयन् पूजितवन्तः पादपतनादिना । बालकानुपागूहन्त आश्लिष्टवन्तः । गतानां किं भविष्यतीति सास्राः स्त्रीः योषितः । वा- मृशसोरितीयङभावपक्षे रूपम् । समावर्धयन् ताम्बूलादिना संवर्धितवन्तः । प्रातिपदिका- द्धात्वर्थे इति णिच् । तथा कार्याणि गृहकार्याणि प्रादिशन् निर्दिष्टवन्तः । इदमिदं कार्यमिति ॥

**आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम् ।**
**प्रापिबन्मधुमाध्वीकं भक्ष्यांश्चादन् यथेप्सितान् ॥ ३ ॥**

**आच्छादयन्नित्यादि ॥** आच्छादयन् वस्त्राणि पिनद्धवन्तः । छद संवरणे चुरादिः । व्यलिम्पंश्च समालिप्तवन्तः । लिप उपदेहे । शे मुचादीनामिति नुम् । न छ- व्यप्रशानिति रुत्वम् । पूर्वस्यानुनासिकः । अथानन्तरं सुरामिषं प्राश्नन् अभ्यवहृतव- न्तः । मधुमाध्वीकं मध्वासवं प्रापिबन् सुष्ठु पीतवन्त. । भक्ष्यांश्च खण्डपायसादी- न् यथेप्सितमादन् भक्षितवन्तः । अडित्यनुवृत्तौ अदः सर्वेषामित्यप्रत्ययः ॥

**न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः ।**
**अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा ॥ ४ ॥**

**न्यश्यन्नित्यादि ॥** अभीष्टानि यथानुभावितानि शस्त्राणि न्यश्यन् तेजितवन्तः । शोतनूकरणे । ओतः श्यनीत्योकारलोपः । वर्मभिश्च कवचैः समनह्यन् संनद्धाः । शरी- राण्यावृतवन्त इत्यर्थः । सुयानानि शोभनयानानि अध्यासत आरूढाः । अधिशीङिति कर्मसंज्ञा । तथा द्विषद्भ्योऽशपन् आक्रुष्टवन्तः । पापाः क्व यास्यथेति । श्लाघह्नुङिस्था- दिना सम्प्रदानसंज्ञा ॥

**अपूजयंश्चतुर्वक्त्रं विप्रानार्चंस्तथा स्तुवन् ।**
**समालिपत शक्रारिर्यानं चाभ्यलषद्वरम् ॥ ५ ॥**

**अपूजयन्नित्यादि ॥** चतुर्वक्त्रं ब्रह्माणमपूजयन् अर्चितवन्तः । विप्रानार्चन् दा- ननमस्कारादिना पूजितवन्तः । तथा अस्तुवन् परस्परं स्तुतवन्तः । शक्रारिश्च इन्द्र- जित् समालिपत समालिप्तवान् । यानं वरमुत्कृष्टमभ्यलषत् अभीष्टवान् । वाभ्राशेत्यादिना श्यनो विकल्पितत्वात् पक्षे शप् ॥

**आमुञ्चद्वर्म रत्नाढ्यमबध्नात्खड्गमुज्ज्वलम् ।**
**अध्यास्त स्यन्दनं घोरं प्रावर्तत ततः पुरः ॥ ६ ॥**

**आमुञ्चदित्यादि** ॥ रत्नाढ्यं रत्नप्रत्युप्तं वर्म कवचमामुञ्चत् शरीरे आमुक्तवान् पिनद्धवानित्यर्थः । खड्गं चोज्ज्वलमबध्नात् कक्षपार्श्वाश्रितं कृतवान् । घोरं भीषणं स्यन्दनमध्यास्त आरूढः । ततोऽनन्तरं पुरः पुरतः प्रावर्तत प्रवृत्तः ॥

**आघ्नन् भेरीर्महास्वानाः कम्बूंश्चाप्यधमन् शुभान् ।**
**अताडयन् मृदङ्गांश्च पेराश्चापूरयन् कलाः ॥ ७ ॥**

**आघ्नन्नित्यादि** ॥ तस्मात् प्रवृत्ताः महास्वानाः महानादाः । स्वनहसोर्वेत्यप् । भेरीः आघ्नन् ताडितवन्तः । वादका इत्यर्थात् । शुभान् सुस्वरान् कम्बून् शंखानधमन् शब्दितवन्तः । पाघ्रेत्यादिना धमादेशः । मृदङ्गांश्चाताडयन् आहतवन्तः । तड आघात इति चुरादिः ॥

**अस्तुवन् बन्दिनः शब्दानन्योन्यं चोदभावयन् ।**
**अनदन् सिंहनादांश्च प्राद्रेकत हयद्विपम् ॥ ८ ॥**

**अस्तुवन्नित्यादि** ॥ बन्दिनः स्तुतिपाठका अस्तुवन् जय जीवेत्यादिना स्तुतिं कृतवन्तः । अन्योन्य अन्यस्य अन्यस्य च शब्दान् सांग्रामिकनामानि उदभावयन् उद्घाटितवन्तः । सैनिका इत्यर्थात् । सिंहनादांश्चानदन् शब्दितवन्तः । हयद्विपं पशुद्वन्द्वस्य विभाषैकवद्भावः । प्राद्रेकत शब्दितवन्तः । द्रेकृशब्दोत्साह इत्यनुदात्तेत् ॥

**अनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलम् ।**
**औक्षन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः ॥ ९ ॥**

**अनिमित्तानीत्यादि** ॥ अनिमित्तानि कुत्सितनिमित्तानि । नञत्र कुत्सायाम् । गच्छन्तोऽपश्यन् दृष्टवन्तः । तानि दर्शयति । रविमण्डलमस्फुटत् स्फुटितम् । अम्भोदाः शोणितमौक्षन् वृष्टाः । उक्षसेचने । वायवः सुदुःसहाः प्रचण्डा अवान् वान्ति स्म । शाकटायनमतादन्यत्र उसादेशः ॥

**आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः ।**
**रक्तं न्यष्ठीवदक्लाम्यदखिद्यद्वाजिकुञ्जरम् ॥ १० ॥**

**आर्च्छन्नित्यादि** ॥ निर्गच्छतां वामपार्श्वं कृष्णमृगा आर्च्छन् गताः । अर्तेः पाघ्रेति ऋच्छादेशः । ऋच्छगतावित्यस्य वा रूपम् । भटाश्च शस्त्राणां व्यस्मरन् विस्मृतवन्तः । अधीगर्थेति कर्मणि षष्ठी । वाजिकुञ्जरमखिन्नमश्रान्तमपि रक्तं न्यष्ठीवत् ।

ष्ठिवुनिरसन इति भौवादिकस्य ग्रहणम् । ष्ठिवुक्लमुचमां शितीति दीर्घः । अक्लाम्यत् क्लान्तं च ॥

**न तानगणयन् सर्वानास्कन्दंश्च रिपून् द्विषः ।**
**अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११ ॥**

**न तानित्यादि ॥** तान् सर्वानशुभान्नागणयन् नादृतवन्तः किमेतैरिति । अपि तु रिपूनास्कन्दन् अभिगतवन्तः । द्विषो राक्षसास्तीक्ष्णैरसिभिररीनच्छिन्दन् छिन्नवन्तः । तथा तोमरैस्तीक्ष्णैरभिन्दन् विदारितवन्तः ॥

**न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम् ।**
**भल्लैरविध्यन्नुग्राग्रैरतृंहंस्तोमरैरलम् ॥ १२ ॥**

**न्यकृन्तन्नित्यादि ॥** चक्रधाराभिः न्यकृन्तन् छिन्नवन्तः । मुचादित्वान्नुम् । शक्तिभिश्च दृढमत्यर्थमतुदन् व्यथितवन्त. । भल्लैरविध्यन् ताडितवन्तः । ग्रहिज्येति सम्प्रसारणम् । उग्राग्रैस्तीक्ष्णाग्रैस्तोमरैरलं पर्याप्तमतृंहन् हतवन्तः । तृह हिंसायाम् । रुधादित्वात् श्नम् । अलोपानुस्वारौ ॥

**आस्यन् प्लवङ्गमा वृक्षानधुन्वन् भूधरैर्भृशम् ।**
**अहिंसन् मुष्टिभिः क्रोधाददशन्दशनैरपि ॥ १३ ॥**

**आस्यन्नित्यादि ॥** प्लवङ्गमा अपि वृक्षानास्यन् क्षिप्तवन्तः । असु क्षेपणे । तथा भूधरैः पर्वतैरधुन्वन् हतवन्तः । उपधायाश्चेति दीर्घः । क्रोधान्मुष्टिभिरहिंसन् ताडितवन्तः । दशनैर्दन्तैरदशन् खादितवन्तः । दंशसंजस्वंजां शपीत्यनुनासिकलोपः ॥

**प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः ।**
**प्राहिण्वन्नरिमुक्तानि शस्त्राणि विविधानि च ॥ १४ ॥**

**प्रादुन्वन्नित्यादि ॥** जानुभिस्तूर्णं प्रादुन्वन् पीडितवन्तः । टुदु उपतापे । स्वादिः । तलकूर्परैः हस्ततलैः प्रकोष्ठैश्चातुदन् व्यथितवन्तः । अरिभिर्मुक्तानि विविधानि यानि शस्त्राणि तानि प्राहिण्वन् प्रहितवन्तः ॥

**अतृणेट् शक्रजिच्छत्रूनभ्राम्यच्च समन्ततः ।**
**अध्वनच्च महाघोरं न च कंचन नादुनोत् ॥ १५ ॥**

**अतृणेडित्यादि ॥** ततः शक्रजिदिन्द्रजित् शत्रूनतृणेट् हिंसितवान् । तृहेः श्नम् । तस्य तृणह इम् । हल्ङ्याब्भ्यो दीर्घादिलोपः । हकारस्य ढत्वजश्त्वचर्त्वानि । समन्ततश्चा-

